श्रीमद्विद्वद्वर-

वरदराजाचार्यप्रणीता

# लघुसिद्धान्तकौमुदी



सेयं

व्याकरणाचार्येण पण्डितश्रीनारायणदत्तत्रिपाठिना
पाण्डेयोपाह्वपण्डितश्रीरामनारायणदत्तशास्त्रिणा च
टिप्पणादिभिः समलङ्कृत्य
सम्पादिता

तथा च

जालानोपाह्वेन मोतीलालेन 'गीताप्रेस'
गोरखपुरे प्रकाशिता

मूल्यं ( .६० पैसे )

श्रीहरिः

# निवेदनम्

निखिलेऽस्मिन् पञ्चतत्त्वाञ्चिते वैरिञ्चप्रपञ्चेऽनादिकालतो बन्धनमुपेत्य प्रारब्धपरिणतिं भुञ्जानानां जनानामाध्यात्मिकादितापत्रयचिन्ताचक्रव्यूहोत्पाटनपटीयो ज्ञानमेवामनन्ति मोक्षोपायतया निःश्रेयससाधनैकमतयो यतयो महर्षयश्च । तच्च ज्ञानमाम्नायवाङ्मयतात्पर्यपर्यालोचनोल्लसत्सद्विवेकोद्रेकादेव समधिगन्तुं शक्यत इति नास्ति परोक्षं प्रेक्षावताम् । तात्पर्यपर्यालोचनं च तत्तच्छब्दानुबन्धितत्तदर्थबोधकशक्तिग्रहायत्तम्, शक्तिग्रहस्तु 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च' इति वृद्धजनोक्त्या प्राधान्येन व्याकरणादेव बोभवीतीति तदेव सर्वतः प्रागाश्रयणीयं निगमागमार्थसार्थं परिचिचीषुभिः । किञ्च 'षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति विधिश्रवणात् षड्भिरङ्गैः संवलितस्यैव वेदस्य तत्त्वज्ञानं श्रेयःसाधनमभिमतम्; तेष्वङ्गेषु च 'छन्दः पादौ तु वेदस्य मुखं व्याकरणं स्मृतम्' इति वचनाद् व्याकरणमेव मुखमिव प्रमुखतामावहति प्रागध्येतव्यतां चेति नाविदितचरं गीर्वाणवाणीप्रणयिनाम् ।

व्याकरणं च मुख्यतो नवधानुश्रूयते; 'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥' इति तत्त्वनिधावुक्तेः; हनुमन्तमुद्दिश्य 'सोऽयं नवव्याकरणार्थवेत्ता' इति वाल्मीकीयवचनाच्च । ननु हनुमतः काले पाणिन्यादेरनुत्पत्त्या नेदं

संगच्छत इति चेन्न 'धाता यथापूर्वमकल्पयत्' इति श्रुत्या पूर्वपूर्वकल्पोद्भूतपाणिन्यादीनां व्याकरणसत्त्वानुमानात्। तत्रैन्द्रव्याकरणे 'तामिन्द्रो मध्यतोपक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुच्यते' इति श्रुतिरेव प्रमाणम्। 'चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः' इत्यादिवचनाच्चान्द्रस्यापि सत्तानुमीयते। 'शताच्च ठन्यतावशते' इति सूत्रे भाष्ये नामतो निर्देशात् काशकृत्स्नसत्तापि निश्चीयते। कौमारं त्वाग्नेयपुराणे वर्ण्यते। केचित्तु पाणिनिकृतं प्रातिशाख्यसूत्रमेव कौमारमिति वदन्ति। सारस्वतम्, ऋक्तन्त्रापराभिधानं शाकटायनं चाद्यत्वे मुद्रिते उपलभ्येते। आपिशलं शाकलं च पाणिनिसूत्रेषु तन्नाम्नोरनुवादादनुमीयेते।

यद्यप्यद्यत्वे जैनेन्द्राशुबोधकातन्त्राद्यभिधानानि विविधानि व्याकरणान्युपलभ्यन्ते तथापि नैतेषां वेदाङ्गत्वम्। निखिललौकिकालौकिकशब्दानां व्युत्पादकतया पाणिनीयव्याकरणमेव सर्वेषां मूर्धन्यं धन्यं च सद् वेदाङ्गतामाधत्ते। 'इदमक्षरं छन्दोवर्णशः समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यः। तं खल्विममक्षरसमाम्नायमित्याचक्षते; न भुक्त्वा न नक्तं ब्रूयाद् ब्रह्मराशिः।' इति ऋक्तन्त्रव्याकरणोक्तरीत्याक्षररूपस्यास्य चतुर्दशसूत्रसमूहस्याम्नायत्वं निष्पद्यते, तन्मूलकत्वाच्चेदं वेदशरीरमभ्युपगम्यते।

एतस्य प्रणेतुः पाणिन्यादेः परिचयजिज्ञासा स्वाभाविकीति तद्विषये किञ्चिन्निवेद्यते—तत्रादिराचार्यो महानुभावः पाणिनिः शलङ्कनामधेयात्पितुर्दाक्ष्यां जन्म लेभे। यद्यप्येतस्याभिधानम् 'आहिकः' इत्यासीत्तथापि गोत्राश्रयपाणिनिनाम्नैवायं प्रसिद्धिमापेदे। पश्चापप्रदेशे सलातुराभिधो ग्रामोऽस्य जन्मभूरासीद् य एवेदानीम् 'सलातुर–हलाथुर–हलाहुर–लाहुर' इति क्रमेणापभ्रंशं गतः 'लाहौर' इति परिणतः। एतस्याद्यावधि कियान् कालोऽतीत इति विषयमधिकृत्य मतानि बेभिद्यन्ते।

---

१—'पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ' इति त्रिकाण्डशेषात्।

पाश्चात्यो विद्वान् Cunningham कनिङ्गहममहोदयः ख्रिस्ताब्दप्रवृत्तेः सार्द्धत्रिशतवर्षपूर्वमेव पाणिनिसमयं सम्भावयति । अन्ये तु प्रायः सहस्रवर्षपूर्वमनुमन्यन्ते, अपरे च ख्रिस्ताब्दतः सार्द्धद्विसहस्रतोऽप्यधिकपूर्वं पाणिनिकालमाकलयन्ति । एतदन्तिमं मतं युक्तिविमर्शमूलकतया समीचीनं भाति । ये किल ख्रिस्ताब्दतः प्राक् सहस्रवर्षाभ्यन्तर एव पाणिनिसमयं सम्मन्यन्ते ते पाणिनिकात्यायनौ नन्दराज्यकालवर्तिनौ समानकालिकावित्यूरीकुर्वन्ति । आख्यायिकां चेमामुदाहरन्ति यत् 'मुग्धबुद्धिः पाणिनिर्वर्षोपाध्यायं गुरुं विद्यार्थमुपश्रितस्तत्र सतीर्थ्येन कात्यायनेन वादे पराजितः पराभूतश्च सन्निर्वेदमवाप्य भगवन्तं महेशानं तपसा प्रसाद्य ढक्कानादसमुद्भूतां चतुर्दशसूत्रीं व्याकृतिसूत्रनिर्माणशक्तिं विद्वत्तां चातुलामाससादेत्यादि ।' परंतु विचारनिकषोपरि कषणेन तपोद्वारकमहेश्वरप्रसादादिवरप्राप्त्यन्तं वृत्तान्तमपहायान्यद्वृत्तं न विश्वासपदवीमधिरोहति; यतः पाणिनिसूत्रेषु राज्ञो जनमेजयादुत्तरकालिको न कश्चन सूच्यते, नैतावदेव, पाराशर्यव्याससूनोः शुकस्यापि नाम नोपन्यभान्त्सीत् सूत्रकृत् । पश्चात् कियत्कालानन्तरं शुकस्य 'वैयासकि'रूपाम् अपत्यबोधकसंज्ञामनुश्रुत्य तत्साधनाय कात्यायनेन वररुचिना व्यासवरुडेति वार्तिकमारब्धम् । एवंविधप्रचुरप्रमाणपर्यालोचनयेदं निर्णेतुं शक्यते यज्जनमेजयकाले तदुत्तरसन्निहितकाले वा पाणिनिरासीत् । तदानीं वैयासकिवारुडकिप्रभृतिपदानां लोकव्यवह्रियमाणता नासीदतस्तदर्थं सूत्रं न प्राणायि पाणिनिना । यद्युभयोरेककालत्वमङ्गीक्रियेत तर्हि पाणिनिना यदनुक्तं दुरुक्तं च तत्कात्यायनेन पूरितं प्रत्याख्यातं चेति स्वीकर्तव्यं स्यात्, एवं च सति पाणिनेर्भ्रान्तत्वापत्तिरल्पविद्यत्वापत्तिश्च स्याताम् । विभिन्नकालत्वाङ्गीकारे तु पाणिनिना स्वसमयेऽव्यवह्रियमाणतया यदनुक्तं तद्वार्तिककृता स्वसमये व्यवहारविषयतया पूरितम् । तथा कालपरिवर्तनक्रमेण भाषायामपि किञ्चित्परिवर्तनस्य नूतनशब्दानां प्रयोगस्य वा सम्भावयितुं शक्यतया तदानीन्तनप्रयोगानुसारेण यद्दुरुक्तं प्रतीतं तत्कात्यायनेन प्रत्याख्यातमिति कल्पयितुं शक्यते । अतोऽनयोर्विभिन्नकालत्वमेव विचारसहम् ।

तथा च जनमेजयनृपसन्निहितकाले कलेश्चतुर्थ्यां शताब्द्यां खिस्ताब्दतः सप्तविंशतिशतवर्षपूर्वं पाणिनेः कालः सम्भाव्यते । कात्यायनस्य तु पाणिनेः परस्तात्पञ्चषशतसंख्येयासु समासु कलेः सहस्रासन्नायां समायां सत्ता सम्भावयितुमर्हा । एषोऽपि पाणिनिवद् गोत्रनाम्नैव विश्रुतः । श्रुतधरो वररुचिश्चेति द्वे अभिधाने अस्य श्रूयेते । अयं प्रयागतः पश्चिमदिशि कलिन्दजाकूले विलसितां कौशाम्बीं नाम नगरीं ( यैवेदानीं 'कोसम' ग्रामाभिधयाभिधीयते ) स्वजन्मनालञ्चकार । सोमदत्तोऽस्य पिता वसुदत्ता च प्रसूरासीदिति प्रसिद्धिः । एतस्य वार्तिकैः समलङ्कृतानि पाणिनिसूत्राणि प्रसृमरप्रचाराण्यभूवन् । कात्यायनवार्तिकानां प्रणयनात् प्राक् पाणिनिसूत्राणामध्ययनाध्यापनयोः प्रवृत्तिर्दुःशकैवासीदिति नाविदितं वैयाकरणानाम् । यद्यपि सूत्रवार्तिककदम्बोपरि श्रीव्याडिविदुषा विरचितो लक्षश्लोकात्मको व्याख्याग्रन्थ आसीत्तथान्यैश्च कुण्यादिभिराचार्यैः प्रणीता वृत्तयोऽप्यासंस्तथापि नैतैर्ग्रन्थैः पूर्णतया तत्त्वमध्येतॄणां हृदयङ्गमं बोभूयते स्मेति लोकोपकृतिवशंवदो भगवान् पतञ्जलिर्विशदाशयविवेचनात्मकं महाभाष्यनामकं ग्रन्थं निरमात् । श्रूयते यन्महेश्वरप्रेरणया भगवाञ्छेष एवास्मभ्यमशेषार्थोपदेशार्थं पतञ्जलिनाम्नावतीर्ण आसीदित्यहो भागधेयमस्मदादीनाम् । एतस्य भगवतः पतञ्जलेः कलेः सप्तविंशतितमशताब्द्यां खिस्ताब्दतः शतचतुष्टयवर्षपूर्वं सत्त्वमासीदिति विदामनुमानम् । अस्य गोणिकाख्या जननी, जन्मभूमिश्च गोनर्ददेशोऽभवत् । अयं गोनर्ददेशः कश्मीरेऽस्तीत्येके । अवधप्रान्ते 'गोण्डा' नाम्ना विख्यातं नगरमेव गोनर्दं इत्यपरे मन्यन्ते ।

भाष्यकारमनु काले काले भर्तृहरिकैयटप्रभृतयोऽन्ये विद्वांसो महाभाष्योपरि विवृतीर्वृत्तिग्रन्थांश्चालिखन् । परन्तु तत्र तत्र प्रकरणसौष्ठवाद्यभावादायासबाहुल्याद्दते सिद्धान्तज्ञानं सुदुःशकमेवासीदिति व्याकरणतत्त्वबुभुत्सूनां कृते परोपकृतिपरप्रकृतिपरतन्त्रतया श्रीलक्ष्मीधरतनुजनुषा भट्टोजिदीक्षितेन शब्दकौस्तुभः, तत्सारभूता वैयाकरणसिद्धान्तकौमुदी, तद्व्याख्यानभूता प्रौढमनोरमा च प्राणायिषत; तथान्येऽपि बहवो ग्रन्था

अनेन निरमायिषत । एतत्प्रणीतव्याकरणग्रन्थानामन्यतमा वैयाकरणसिद्धान्तकौमुदी सर्वसिद्धान्तसंग्रहात्मकतया सौविध्याधिक्यादविरलप्रचाराभवत् । परन्त्वियमपि प्रायेण विदुषामेव मनःकुमुदमोदिनी समजनि यतः फक्किकासम्पर्ककर्कशतया स्वभावतः सुकुमारमतीनां बालकानां चेतसे नातीवेयमरोचत । ततो बालानामपि बुद्धीर्व्याकरणविषये निवेशयितुमनसा भट्टोजिदीक्षितस्यैवान्तेवासिना श्रीदुर्गातनयतनयेन विद्वद्वरवरदराजाचार्येण सारकौमुदीमध्यकौमुदीलघुकौमुदीगीर्वाणपदमञ्जरीनामानो ग्रन्थाः समपादिषत । श्रीभट्टोजिदीक्षितः सारस्वतब्राह्मणोऽपि सन् महाराष्ट्रे निवसति स्मेति केचित् । अपरे तु सम्प्रति महाराष्ट्रियसारस्वतव्यपदेशभाजां विप्राणामृग्वेदीयाश्वलायनशाखान्तर्गतत्वाद् भट्टोजिदीक्षितस्य तु तैत्तिरीयसन्ध्याभाष्यनिर्माणादिना कृष्णयजुर्वेदीयतैत्तिरीयशाखिविप्रवंशावतंसतयानुमानान्नासौ महाराष्ट्रियसारस्वतः, प्रत्युत पञ्चद्राविडान्तर्गत आसीदिति सिद्ध्यति, सप्तगोदावरीप्रदेशे चास्यावस्थानमभूत् । श्रीशेषकृष्णपण्डितराजजगन्नाथाप्पय्यदीक्षितप्रभृतिद्राविडविद्वद्भिः सह घनिष्ठसहवासाच्चैतन्मतं पुष्यतीति वदन्ति । अयं शालिवाहनशकस्य पञ्चदशशताब्द्यामासीत् । एतस्यैवान्तेवासित्वाद् वरदराजाचार्यस्यापि सत्ताकालः पञ्चदशशताब्द्येवेति बोध्यम् ।

एतत्प्रणीतग्रन्थानामन्यतमा लघुसिद्धान्तकौमुदीयं तत्र भवतां पाठकानां सम्मुखीना समुल्लसति । लघुकलेवराप्येषा समासतः सिद्धान्तकौमुदीसम्भवं समस्तं ज्ञानं समुद्भावयति । ननु सिद्धान्तकौमुद्या एवेदं संक्षिप्तं संस्करणं किमत्र वरदराजेन कृतम् ? न हि सम्पादनमात्रेणैव निर्माणश्रेयोभागित्वं तस्येत्यादिप्रकारेण नात्राक्षेपणीयम्; भट्टोजिदीक्षितस्यापि वैयाकरणसिद्धान्तकौमुद्याः सम्पादनातिरिक्तनिर्माणश्रेयोभागित्वाभावात् । न हि मुनित्रयानुक्तमपूर्वं किमपि श्रद्धेयं तेनाप्युक्तम्, महाभाष्यसिद्धान्तानामेवासौ कौमुदी, महाभाष्यतः सिद्धान्तान् सङ्कलय्य सम्पादनादतिरिक्तं दीक्षितस्यापि न हि किमपि तत्र नूतनं कर्म । किञ्च यद्यपि सिद्धान्तकौमुद्या एवेदं संक्षिप्तं संस्करणम्, तथापि ततो महद् वैलक्षण्यमत्रेति पात्यतां सूक्ष्ममीक्षणमिह सुधीभिः ।

लघुसिद्धान्तकौमुद्यां सिद्धान्तकौमुदीतः प्रकरणविपर्यासोऽवलोक्यते, स च सहेतुकस्तथा हि–सिद्धान्तकौमुद्याम् अव्ययात् पश्चात् स्त्रीप्रत्ययादि-तद्धितान्तमभिधाय तिङन्तमारभ्यते तदनु च कृदन्तम्। लघुसिद्धान्त-कौमुद्यान्तु स्त्रीप्रत्ययप्रकरणं ग्रन्थान्ते स्थापितम्, कारकादितद्धितान्तञ्च कृदन्तादपि परस्तात्कृतम्। तिङन्तकृदन्ताभ्यां परस्तात्कारकप्रकरण-पाठस्य प्रयोजनं तावद् दृश्यताम्–कारके 'अकथितं च' 'कर्तृकरणयोस्तृतीया' इत्यादीनि बहूनि सूत्राणीत्थं वर्तन्ते यैः कारकस्य तिङन्तकृदन्तावनु पठनीयता समर्थ्यते अन्यथा तिङन्तज्ञानादृते दुह्यादिधातूनाम्, तिङ्कृतोर्ज्ञानं विनानभिहितकर्तृत्वादीनां च बोधः कुतः स्यात्? किञ्च क्रियान्वयित्वं कारकत्वमित्युक्तदिशा क्रियाज्ञापकप्रकरणोत्तर एव कारक-प्रकरणमारब्धव्यम्। एवमेव 'उपपदमतिङ्' 'कर्तृकरणे कृता बहुलम्' इत्यादीनि समासस्य, 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' 'क्त्रेर्मम्नित्यम्' इत्यादीनि च सूत्राणि तद्धितस्य तिङन्तकृदन्तोत्तरस्थितिं ज्ञापयन्ति। 'टिड्ढाणञ्द्वयसज्०' 'द्विगोः' इत्यादीनि सूत्राणि च स्त्रीप्रत्ययस्य सर्व-प्रकरणान्तस्थितिं समर्थयन्तीत्यालोच्यैव श्रीमता वरदराजाचार्येणाध्येतृणां सौविध्यसम्पादनार्थं प्रकरणं व्यत्यस्य स्वीया सूक्ष्मदर्शितैव दर्शिता। किञ्चात्र विषये पूर्वप्रकरणमनु परप्रकरणारम्भस्योपयोगिताबोधकमवतरणं तत्र तत्र टिप्पणे द्रष्टव्यम्।

एवमियं लघुसिद्धान्तकौमुदी यद्यपि स्वभावत एव बालोपयोगिनी तथापीह क्वचित्क्वचिद् विषमस्थले सरलतापादनार्थं टिप्पणमावश्यकमस्ति। अद्यत्वे यद्यपि विविधटिप्पणोट्टङ्कितानि लघुसिद्धान्तकौमुद्या नानासंस्करणानि मुद्रितानि सन्ति, तथापि तानि नातीवोपयोगितां पिपुरतीति विशेषतो बालानामुपयोगमेवोद्दिश्य अस्माभिरिदं नूतनटिप्पणसंवलितं संस्करणं प्राकाशि। सम्प्रति गुरवः शिष्येभ्यो यथाध्यापयन्ति तामेव सरणिमनुसृत्यावश्यकस्थलेषु निगूढार्थप्रकाशकं टिप्पणं सरलसंस्कृतेनोल्लिखितम्। अत्रदुर्बोधार्थानां सूत्रवार्तिकानाम् अर्थाः स्पष्टीकृतास्तेषां च लक्ष्ये समन्वयो दर्शितः। संस्कृतभाषया पदसाधुत्वलेखनज्ञानसम्पाद-

नार्थं च प्रतिप्रकरणं कठिनप्रयोगाणां सरलसंस्कृतगिरा साधनमपि न्यबन्धि। अनुवादोपयोगायात्रोदाहृतानां पदानामर्था अप्युपन्यस्ताः। किं च ग्रन्थान्ते लिङ्गानुशासनोक्तदिशा लिङ्गपरिचयोऽप्यङ्कितो यतोऽनुवादादौ लिङ्गबोधे साहाय्यमुपलभ्येत। अभ्यासार्थं त्रयोदशवर्षाणां प्रश्नपत्राण्यपि सङ्कलितानि। विद्यार्थिनां सौविध्यार्थं सूत्रवार्तिकधातूनां सूचीभिः सहैव धातुषु सकर्मकाकर्मकत्वे अपि प्रादर्शिषाताम्। परिभाषाणां गणानां च पाठः संकलितः। एवमयं ग्रन्थः साम्प्रतिकपरीक्षार्थिनां कृतेऽतीवोपयोगी संवृत्तः। अथ गुणैकपक्षपातिनस्तत्र भवतोऽध्यापकानध्येतॄंश्चानुरुन्ध्महे वयं यदिमं ग्रन्थमात्मसात्कृत्य सफलयन्तु भवन्तोऽस्माकं परिश्रमं कृतार्थयन्तु चास्मान्।

अस्मिन् ग्रन्थे सूत्राणि स्थूलाक्षरैरुपन्यस्तानि। वार्तिकानि त्वित्थंभूते (  ) कोष्ठके मुद्रितानि सन्ति। (ग० सू०) इति गणसूत्राणां संकेतः। (प०) इति च परिभाषाया इत्यादि सम्यग् विवेचनीयम्।

इदानीमेतदीयं त्रयोदशं संस्करणं यथासम्भवं संशोध्य प्रकाश्यत इति नः परं प्रमोदास्पदम्। प्राक्तनं संस्करणद्वादशकमचिरेणैव समाप्तिमुपेतमिति ग्रन्थस्यास्य लोकप्रियता स्फुटं व्यज्यते। एतदपि संस्करणं गुणग्रहणपटवो वटवोऽविलम्बेनैवात्मसात्करिष्यन्तीत्याशास्महे।

अत्रास्माकं प्रमादवशाद् यद्यशुद्धयोऽवशिष्टा भवेयुस्तर्हि करुणावशंवदा विद्वांसो मानवस्वभावमाकलय्य क्षमन्तां सूचयन्तु च ता यतोऽग्रिमे संस्करणे संशोधयितुं प्रयतिष्यामह इति शिवम्। इति—

निवेदयते विदुषां विधेयो

रामनारायणदत्तपाण्डेयः

**( गीताप्रेस, गोरखपुर )**

# अथ लघुसिद्धान्तकौमुदीस्थविषयाणामनुक्रमः

सन् १९५४—६६

**इति लघुसिद्धान्तकौमुदीस्थविषयाणामनुक्रमः**





शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ।।



* श्रीगणेशाय नमः *

# लघुसिद्धान्तकौमुदी

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥

## अथ संज्ञाप्रकरणम्

अइउण् १। ऋलृक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥

---

एकद्वित्रिचतूरूपामरूपां बहुरूपिणीम् ।
गिरं नत्वा गिरं ज्ञातुं क्रियते लघुटिप्पणी ॥

१–अहं वरदराजाचार्यः शुद्धां दोषरहितां गुण्यां प्रशस्तगुणयुक्तां सरस्वतीं देवीं वाग्देवतां नत्वा नमस्कृत्य पाणिनीयप्रवेशाय बालानां पाणिनीयव्याकरणशास्त्रे प्रवेशार्थं लघ्वी चासौ सिद्धान्तकौमुदी ताम् करोमि इत्यन्वयः ।

इति माहेश्वराणि [2]सूत्राण्यणादिसंज्ञार्थानि[3]। [4]एषामन्त्या इतः। हकारादिष्वकार उच्चारणार्थः। ल[6]ण्मध्ये त्वित्संज्ञकः॥

---

१—इति इमानि पूर्वोक्तानि चतुर्दश सूत्राणि माहेश्वराणि महेश्वरादागतानि महेश्वरवरप्रसादात् पाणिनिना लब्धानीति फलितोऽर्थः। तदुक्तम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्॥ इति॥

किं चात्र—

'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्'

—इति शिक्षावचनमपि प्रमाणम्॥ २—सभेदं सूत्रलक्षणं यथा—

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥
अल्पाक्षरमसन्दिग्धं सारविद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥ इति॥

अणादिसंज्ञार्थतया शिवसूत्राण्यपि संज्ञासूत्राण्येवेति बोध्यम्॥ ३—किमर्थानि इमानि? अत उक्तम्—अणादीति। अण् आदिर्यासां ता अणादयस्ताश्च ताः संज्ञा अणादिसंज्ञास्ता अर्थः प्रयोजनं येषां तानि अणादिसंज्ञार्थानि॥ ४—ननु कथंकारमेषां सूत्राणामणादिसंज्ञार्थत्वम्? इति चेत्तत्राह—एषामिति; एषां चतुर्दशसूत्राणामन्ते भवा अन्त्या अन्तिमाश्चतुर्दश वर्णा इत इत्संज्ञका इत्यर्थः; ततश्च 'आदिरन्त्येन—' इति सूत्रप्रवृत्त्या अणादिसिद्धिरिति तत्रैव स्पष्टीकरिष्यते॥ ५—'हयवरट्' इत्यादिसूत्रेषु हकारादिप्रतिवर्णोत्तरमकारोच्चारणेन हशादिप्रत्याहारे अकारसहिता एव हकारादयो गृह्येरन्निति शङ्कामपाकरोति—हकारादिष्विति; अयं भावः, यद्यपि तत्र तत्र प्रत्याहारेऽकारसहितास्त उच्चार्यन्ते तथापि तेष्वकारो न विवक्षितः॥ ६—पूर्ववाक्येन लणोऽकारस्योच्चारणार्थत्वमुपपद्यतेऽत आह—लण्मध्ये त्विति; लण्मध्यवर्ती अकारस्तु इत्संज्ञको नोच्चारणार्थः। इत्संज्ञाफलं च दर्शयिष्यते—'लणसूत्रस्थावर्णेन०' इत्यादिना।

**हलन्त्यम् १ । ३ । ३ ॥**

उपदेशेऽन्त्यं हलित्स्यात् । उ[1]पदेश आद्योच्चारणम् । सू[2]त्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥

**अदर्शनं लोपः १ । १ । ६० ॥**

प्र[3]सक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥

**तस्य लोपः १ । ३ । ९ ॥**

तस्येतो लोपः स्यात् । णा[4]दयोऽणाद्यर्थाः ॥

**आदिरन्त्येन सहेता १ । १ । ७१ ॥**

अ[5]न्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् ।

---

१—पाणिनिकात्यायनपतञ्जलिकर्तृकं प्रथममुच्चारणमित्यर्थः । केचित्तु उपदेशपदार्थमित्थमाहुः—

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ इति ॥

२—ननु सूत्राधीना वृत्तिः, सूत्रं तु हलन्त्यमित्येतावन्मात्रम्, वृत्तावुपदेश इति कथनमधिकमित्याशङ्क्याह—सूत्रेष्विति; सूत्रेषु यत्पदं न दृष्टं तदन्यस्मात्सूत्रादनुवर्तनीयम् इति सर्वत्र ज्ञेयम् ॥ ३—विद्यमानस्येत्यर्थः ॥ ४—ननु यदि 'अइउण्' इत्यादिसूत्रेषु णकारादीनामित्संज्ञालोपौ क्रियेते तर्हि तदुच्चारणमेव न कार्यमित्यत आह—णादय इति; णकारादयो लकारपर्यन्ताः सूत्रान्त्यवर्णा अणादिप्रत्याहारार्थाः ॥ ५—यथाऽण्प्रत्याहारे साधनीयेऽन्त्य इत् णकारः, तत्सहित आदिः अकारोऽर्थाद् अणिति, तद् अण्पदमकारणकारयोर्मध्यवर्तिनः 'इउ' इति वर्णद्वयस्य संज्ञा स्वरूपस्याकारस्य च । तदेवाह 'यथाऽणिति०' इत्यादिना ॥

यथाऽणिति अइउवर्णानां संज्ञा। एवमच्हल्अलित्यादयः ❀ ॥

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः १ । २ । २७ ॥**

उश्च ऊश्च ऊ३श्च वः; वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। स प्रत्येकमुदात्तादिभेदेनत्रिधा।

**उच्चैरुदात्तः १ । २ । २९ ॥**

**नीचैरनुदात्तः १ । २ । ३० ॥**

---

❀ प्रत्याहाराणामकारादिक्रमेण परिसंख्या—

| | | | | | |
|---|---|---|---|---|---|
| १ अक् | ८ अश् | १५ ऐच् | २२ जश् | २९ भष् | ३६ रल् |
| २ अच् | ९ इक् | १६ खय् | २३ झय् | ३० मय् | ३७ वल् |
| ३ अट् | १० इच् | १७ खर् | २४ झर् | ३१ यञ् | ३८ वश् |
| ४ अण् | ११ इण् | १८ ङम् | २५ झल् | ३२ यण् | ३९ शर् |
| ५ अण् | १२ उक् | १९ चय् | २६ झश् | ३३ यम् | ४० शल् |
| ६ अम् | १३ एङ् | २० चर् | २७ झष् | ३४ यय् | ४१ हल् |
| ७ अल् | १४ एच् | २१ छव् | २८ बश् | ३५ यर् | ४२ हश् |

महेश्वरसूत्रसिद्धानां सर्वातिकपाणिनिसूत्रव्यवहृतानामेव प्रत्याहाराणामियं संख्येति बोध्यम् ॥

१—एकमात्रिकोकारोच्चारणकालसदृशकालकोऽच् ह्रस्वसंज्ञः, द्विमात्रिकोकारोच्चारणकालसदृशकालकोऽच् दीर्घसंज्ञः, त्रिमात्रिकोकारोच्चारणकालसदृशकालकोऽच् प्लुतसंज्ञ इति भावः ॥ २—स लब्धह्रस्वादिसंज्ञकोऽच् ॥ ३—तात्वादिषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तः ॥ ४—ताल्वादिषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तः ॥

## समाहारः स्वरितः १ । २ । ३१ ॥

स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा ।

## मुखनासिकावचनोऽनुनासिकः १ । १ । ८ ॥

मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः । लृवर्णस्य द्वादश तस्य दीर्घाभावात् । एचामपि द्वादश तेषां ह्रस्वाभावात् ॐ ॥

---

१—उदात्तत्वानुदात्तत्वयोरेकत्र समाहारो यत्र सोऽच् स्वरितः ॥ २—स लब्धोदात्तादिसंज्ञकः ॥ ३—मुखेन सहिता मुखसहिता, सा चासौ नासिका च मुखनासिका, उच्यतेऽसाविति वचनः, मुखनासिकया वचन इति विग्रहः ॥ ४—पूर्वोक्तैः 'ऊकालोऽच्'-इत्यादिभिः पञ्चभिः सूत्रैर्यत्कार्यमुक्तं तदित्थमनेन प्रकारेण ज्ञेयमित्यर्थः ॥

ॐ अचामष्टादशभेदविवरणम्—

| अ इ उ ऋ लृ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ लृ ए ओ ऐ औ |
|---|---|---|
| ह्रस्वभेदाः । | दीर्घभेदाः । | प्लुतभेदाः । |
| १ उदात्तानुनासिकः | ७ उदात्तानुनासिकः | १३ उदात्तानुनासिकः |
| २ उदात्ताननुनासिकः | ८ उदात्ताननुनासिकः | १४उदात्ताननुनासिकः |
| ३ अनुदात्तानुनासिकः | ९ अनुदात्तानुनासिकः | १५अनुदात्तानुनासिकः |
| ४अनुदात्ताननुनासिकः | १० अनुदात्ताननुनासिकः | १६अनुदात्ताननुनासिकः |
| ५ स्वरितानुनासिकः | ११ स्वरितानुनासिकः | १७ स्वरितानुनासिकः |
| ६ स्वरिताननुनासिकः | १२ स्वरिताननुनासिकः | १८स्वरिताननुनासिकः |

## [1]तुल्यास्यप्रयत्नं सवर्णम् १ । १ । ९ ॥

तात्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । (ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्)। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च[2]। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य*। यत्नो द्विधा--आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा--स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृत-

१—अस्यन्ति उच्चारयन्ति वर्णान् अनेनेति आस्यम्, आस्ये भवमास्यं प्रकृष्टो यत्नः प्रयत्न आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तुल्यावास्यप्रयत्नौ यस्य तत्तुल्यास्यप्रयत्नम् ॥ २—चकारेण स्वस्ववर्गानुकूलं तात्वादि समुच्चीयते ॥

* वर्णोद्भवस्थानकोष्ठकम्—

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | ऋ | ऌ | उ | ञ | ए | ओ | व | ≍क | |
| क | च | ट | त | प | म | ऐ | औ | | ≍ख | |
| ख | छ | ठ | थ | फ | ङ | | | | | |
| ग | ज | ड | द | ब | ण | | | | | वर्णाः |
| घ | झ | ढ | ध | भ | न | | | | | |
| ङ | ञ | ण | न | म | ं | | | | | |
| ह | य | र | ल | ≍प | | | | | | |
| : | श | ष | स | ≍फ | | | | | | |
| कण्ठः | तालु | मूर्धा | दन्ताः | ओष्ठौ | नासिका | कं ता. | कं.ओ. | दं.ओ. | जि.मू. | स्थानानि |

मूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । बा[1]ह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः ।❀ ≍ क ≍ ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वा-

---

१—बाह्यप्रयत्ना यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथापि वर्णानामान्तरतम्यपरीक्षायामेषामुपयोगो बोध्यः ॥

❀ आभ्यन्तरबाह्यप्रयत्नज्ञानार्थकं कोष्ठम्——

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| आभ्यन्तरप्रयत्नाः | स्पृष्टाः | | | ईषत्स्पृष्टाः | ईषद्विवृताः | | विवृताः | संवृतः |
| संज्ञाः | स्पर्शाः | | | अन्तःस्थाः | ऊष्माणः | | स्वराः | |
| वर्णाः | क ख<br>च छ<br>ट ठ<br>त थ<br>प फ | ग ङ<br>ज ञ<br>ड ण<br>द न<br>ब म | घ<br>झ<br>ढ<br>ध<br>भ | य<br>व<br>र<br>ल. | श<br>ष<br>स | ह | अ इ उ<br>ऋ ऌ ए<br>ओ ऐ औ | ह्रस्वोऽकारः प्रयोगे |
| बाह्यप्रयत्नाः | अ.प्रा.म.प्रा<br>विवाराः<br>श्वासाः<br>अघोषाः | अल्पप्राणाः<br>संवाराः<br>नादाः<br>घोषाः | म.प्रा.<br>संवाराः<br>नादाः<br>घोषाः | अ.प्रा.<br>संवाराः<br>नादाः<br>घोषाः | म.प्रा.<br>विवाराः<br>श्वासाः<br>अघोषाः | म,<br>सं.<br>ना.<br>घो. | उदात्तानुदात्तस्वरिताः | |

मूलीयः। ≍प≍ फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥

**अणुदित्सवर्णस्य चाप्रत्ययः १ । १ । ६९ ॥**

प्रतीयते विधीयत इति प्रत्ययः। [1]अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् [2]परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम्—अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं ऌकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा[3]; तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञाः॥

**परः संनिकर्षः संहिता १ । ४ । १०९ ॥**

वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात्॥

**हलोऽनन्तराः संयोगः १ । १ । ७॥**

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥

**सुप्तिङन्तं पदम् १ । ४ । १४ ॥**

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥

इति संज्ञाप्रकरणम्

---

१—विधीयमानोऽण् आदेशप्रत्ययागमरूपस्तद्भिन्नोऽण् उद्देश्यभूतः स स्वसवर्णस्य संज्ञा इत्यर्थः॥ २—अत्रेदं प्रमाणम्—

परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः।

ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु॥ इति॥

३—यँ, य् वँ, व् लँ, ल् इत्येवंरूपेणेति बोध्यम्; तेन हेतुना निरनुनासिका यरादिषु पठितास्ते यवला द्वयोर्द्वयोर्ग्राहका भवन्तीत्यर्थः॥

# अथाच्सन्धिः

**इको यणचि ६ । १ । ७७ ॥**

इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥

**तस्मिन्निति निर्दिष्टे पूर्वस्य १ । १ । ६६ ॥**

सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥

**स्थानेऽन्तरतमः १ । १ । ५० ॥**

प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ॥

**अनचि च ८ । ४ । ४७ ॥**

अचः परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते ॥

**झलां जश् झशि ८ । ४ । ५३ ॥**

स्पष्टम् । इति पूर्वधकारस्य दकारः ।

**संयोगान्तस्य लोपः ८ । २ । २३ ॥**

संयोगान्तं यत्पदं तस्य लोपः स्यात् ।

**अलोऽन्त्यस्य १ । १ । ५२ ॥**

षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात् । इति यलोपे प्राप्ते––(यणः प्रतिषेधो वाच्यः) । सुद्ध्युपास्यः[1]। मद्ध्वरिः[2]। धात्त्रंशः[3] । लाकृतिः[4] ॥

**एचोऽयवायावः ६ । १ । ७८ ॥**

एचः क्रमादय् अव् आय् आव् एते स्युरचि ।

**यथासंख्यमनुदेशः समानाम् १ । ३ । १० ॥**

समसम्बन्धी[5] विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः[6] । पावकः[7] ॥

**वान्तो यि प्रत्यये ६ । १ । ७९ ॥**

---

१–'सुधी + उपास्यः' इति स्थिते 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'स्थानेऽन्तरमः' इति सूत्रद्वयसहकारेण 'इको यणचि' इति सूत्रेण धकारेकारस्य यकारे 'अनचि च' इत्यनेन धकारस्य द्वित्वे 'झलां जश् झशि' इति पूर्वधकारस्य दकारे 'अदर्शनं लोपः' इति लोपसंज्ञायाम् अवगतायाम् 'अलोऽन्त्यस्य' इत्येतत्सहकारेण 'संयोगान्तस्य लोपः' इत्यनेन यकारस्य लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इति तन्निषेधे वर्णसम्मेलने च कृते 'सुद्ध्युपास्यः' इति सिद्धम्, द्वित्वाभावे 'सुध्युपास्यः' इति; अस्य 'पण्डितैराराधनीयः' इत्यर्थः । एवं 'दद्ध्यानय, मद्ध्वरिः' इत्याद्यपि ज्ञेयम् ॥ २–मधुदैत्यशत्रुर्भगवान् विष्णुः ॥ ३–ब्रह्मणो भागः ॥ ४–लृकारो देवजातीनां माता तस्या आकृतिः स्वरूपम् ॥ ५–संबन्धिन उद्देश्या एचो विधेया अयादयस्त उभय एव चत्वारश्चत्वारस्तुल्यसंख्याः, तत्रैकारादीनां क्रमेणायादयः ॥ ६–'अधिभूर्नायको नेता' इत्यमरः ॥ ७–'कृशानुः पावकोऽनलः' ( अग्निः ) इत्यमरः ॥

यकारादौ प्रत्यये परे ओदौतोरव्आव् एतौ स्तः। गव्यम्[1]। नाव्यम्[2]। (अध्वपरिमाणे च)[3]। गव्यूतिः॥

**अदेङ् गुणः १।१।२॥**

अत् एङ् च गुणसंज्ञः स्यात्॥

**तपरस्तत्कालस्य १।१।७०॥**

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव[6] संज्ञा स्यात्॥

**आद्गुणः ६।१।८७॥**

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात्। उपेन्द्रः[7]। गङ्गोदकम्[8]॥

**उपदेशेऽजनुनासिक इत् १।३।२॥**

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। प्रतिज्ञानुनासिक्याः पाणिनीयाः। लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा॥

---

१—गोर्विकारो दध्यादिः॥ २—नौकया तार्यम्—तरणीयं जलम्॥ ३—गोशब्दौकारस्य यूतिशब्दे परेऽवादेशो लोकेऽपि भवति मार्गपरिमाणे गम्ये। गव्यूतिरिति क्रोशद्वयस्य संज्ञा॥ ४—अस्योदाहरणम् 'अतो भिस ऐस्' इति॥ ५—अस्योदाहरणम् 'अदेङ् गुणः, वृद्धिरादैच्' इति॥ ६—अत्र पूर्वसूत्रात् सवर्णस्येत्यनुवर्तनात् समकालस्य सवर्णस्य संज्ञा इत्यर्थः, तेन हरिभिरित्यत्र भिस ऐस् न॥ ७—विष्णुः॥ ८—गङ्गाजलम्॥ ९—प्रतिज्ञा आनुनासिक्यं येषां ते तथोक्ताः पाणिनिप्रभृतिप्रोक्ता ये वर्णास्ते प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः॥ १०—लण् च तत् सूत्रं तत्र तिष्ठतीति लण्सूत्रस्थः स चासाववर्णश्च तेन सह उच्चार्यमाण इत्यर्थः॥ एवं च 'उरण् रपरः' इत्यत्र रशब्दो रप्रत्याहारबोधकस्तेन रलयोर्ग्रहणं सिद्धम्॥

**उरण् रपरः १ । १ । ५१ ॥**

ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः[1] । तवल्कारः ॥

**लोपः शाकल्यस्य ८ । ३ । १९ ॥**

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ॥

**पूर्वत्रासिद्धम् ८ । २ । १ ॥**

सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर[2] इह, हरयिह[3] । विष्ण इह, विष्णविह ॥

**वृद्धिरादैच् १ । १ । १ ॥**

आदैच्च वृद्धिसंज्ञः स्यात् ॥

**वृद्धिरेचि ६ । १ । ८८ ॥**

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम्[4] । गङ्गौघः[5] । देवैश्वर्यम्[6] । कृष्णौत्कण्ठ्यम्[7] ॥

**एत्येधत्यूठ्सु ६ । १ । ८९ ॥**

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति[9] । उपैधते[10] । प्रष्ठौहः[11] । एजाद्योः किम् ? उपेतः ।

---

१—कृष्णस्य समृद्धिः ॥ २—'आद्गुणः' इति गुणे प्राप्ते यलोपस्यासिद्धत्वान्न भवति, एवमन्यत्र ॥ ३—हे हरे ! विष्णो ! अस्मिन् स्थाने स्थितो भव इति शेषः ॥ ४—कृष्णस्यैकरूपता ॥ ५—गङ्गाया जलस्य वेगः ॥ ६—देवानामैश्वर्यम् ॥ ७—कृष्णस्य कृष्णे वा उत्कण्ठा ॥ ८—अवर्णाद् एजादिः 'इण्' धातुः 'एध' धातुश्च यत्र परः, एवमवर्णाद् यत्र ऊठ् परस्तत्र पूर्वपरयोर्वृद्धिरेकादेशः ॥ ९—समीपं गच्छति प्राप्नोति वा ॥ १०—निकटे वृद्धिशीलो भवति ॥ ११—दमनकाले स्कन्धारोपितकाष्ठवाहको वत्सः प्रष्ठवाडित्युच्यते, अथवा प्रष्ठमग्रेसरं वहतीति प्रष्ठवाट् तस्य षष्ठ्यन्तं रूपं प्रष्ठौह इति ॥

मा[1] भवान्प्रेदिधत् ( अक्षादूहिन्यामुपसंख्यानम् )। अक्षौहिणी[2] सेना। ( प्रादूहोढोढ्येषैष्येषु )। प्रौहः[3]। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। ( ऋते च तृतीयासमासे )। सुखेन ऋतः सुखार्तः[4]। तृतीयेति किम्। परमर्तः[5]। ( प्रवत्सतरकम्बलवसनार्णदशानामृणे )। प्रार्णम्[6], वत्सतरार्णम्[7] इत्यादि[8]॥

**उपसर्गाः क्रियायोगे १।४।५९॥**

प्रादयः[9] क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप—एते प्रादयः॥

**भूवादयो[10] धातवः १।३।१॥**

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥

**उपसर्गादृति धातौ ६।१।९१॥**

---

१—'न भवान् वृद्धिं करोतु'॥ २—'पूर्वपदात् संज्ञायामगः' इति णत्वम्। महाभारतेऽक्षौहिणीप्रमाणं यथा——रथाः २१८७०, गजाः २१८७०, अश्वाः ६५६१०, पदातयः १०९३५०——इयती सेनाक्षौहिणी॥ ३—प्रौहादिशब्दानां क्रमेणार्थः प्रकृष्टस्तार्किकः। वृद्धिं गतः। प्रौढता। प्रेषणम्। दासः॥ ४—सुखेन गतः॥ ५—परमश्चासावृतश्चेति कर्मधारयः; न तु तृतीयातत्पुरुष इति भावः। अस्य परमो मुक्तोऽर्थः॥ ६—प्रकृष्टम् ऋणम्॥ ७—वत्सतरनिमित्तकम् ऋणम्॥ ८—आदिपदात् कम्बलार्णम्, वसनार्णम्, ऋणार्णम्, दशार्णो देशः, इत्यादीन्युदाहरणानि बोध्यानि॥ ९—'प्रादयः' इति सूत्रमनुवर्त्याह—प्रादय इति॥ १०—भूश्च वाश्च भूवौ, आदिश्च आदिश्च आदी, भूवावादी येषां ते भूवादय इति विग्रहः। तथा च भूप्रभृतयो वासदृशा इत्यन्वयः; भूसाहचर्याद् वाशब्दोऽनव्ययं गृह्यते, वासाहचर्याद् भूशब्दोऽसत्त्ववाची गृह्यते। तथाभूतौ भूवाशब्दौ क्रियावाचकावेवेति फलितार्थमाह—क्रियावाचिन इति॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति[१]॥

**एङि पररूपम् ६ । १ । ९४ ॥**

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्। प्रेजते[२] उपोषति[३]॥

**अचोऽन्त्यादि टि १ । १ । ६४ ॥**

अचां[४] मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ( शकन्ध्वादिषु[५] पररूपं वाच्यम् ) । तच्च टेः । शकन्धुः । कर्कन्धुः । मनीषा । आकृतिगणोऽयम्[६] । मार्तण्डः[७] ॥

**ओमाङोश्च ६ । १ । ९५ ॥**

ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायों नमः । शिव एहि ॥

---

१—प्रकर्षेण गच्छति ॥ २—अतिशयेन प्रकाशते ॥ ३—उपगच्छति ॥ ४—यथा मनस् इत्यत्र अच्समुदायो मकारोत्तराकारो नकारोत्तराकारश्चेत्यकारद्वयम्, तयोर्मध्ये अन्त्योऽच् नकारोत्तराकारः स आदिर्यस्य समुदायस्य तादृशसमुदायः 'अस्' इति, तस्य टिसंज्ञा । शकादिशब्दे तादृशसमुदायः केवलाकाररूप एव व्यपदेशिवद्भावेन ॥ ५—शकन्ध्वादिष्विति विषयसप्तमी, एवञ्च शकन्ध्वादिगणविषये पूर्वपदस्य टेरुत्तरपदावयवेऽचि परे पूर्वपरयोः पररूपमित्यर्थः । 'शकन्धुः' इति पदस्य—शकस्य देशविशेषस्य अन्धुः कूप इत्यर्थः । 'कर्कन्धुः' बदरीफलम्, 'मनीषा' बुद्धिः ॥ ६—आकृत्या स्वरूपेण गण्यते इत्याकृतिगणः, अयं भावः—एत एव शब्दा अत्र गणे एवंरूपेण निर्दिष्टा इत्येवं नियमो नास्ति; किन्तु, यत्र शब्दे पररूपं दृश्यते तद्विधायकं च शास्त्रं नास्ति स शब्दः, शकन्ध्वादिः एवं रीत्यान्यत्राप्याकृतिगण इत्यस्यार्थो ज्ञेयो यथा—चादिषु स्वरादिषु ॥ ७—मार्त्तण्डः सूर्यः, मृताण्डादागत इति विग्रहे 'तत आगतः' इत्यण्विषये एव पररूपम् ॥

**अन्तादिवच्च ६ । १ । ८५ ॥**

योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्[1] । शिवेहि[2] ॥

**अकः सवर्णे दीर्घः ६ । १ । १०१ ॥**

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः[3] । श्रीशः[4] । विष्णूदयः । होतृकारः ॥

**एङः पदान्तादति ६ । १ । १०९ ॥**

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव[5] । विष्णोऽव ॥

**सर्वत्र विभाषा गोः ६ । १ । १२२ ॥**

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गोअग्रम्, गोऽग्रम् । एङन्तस्य किम् ? चित्रग्वग्रम्[6] । पदान्ते किम् ? गोः ॥

---

१–एकादेशे स्थानिद्वयम्, पूर्वः परश्च; तथा चाविकृतरूपे पूर्वस्थानिनि सति तत्सहिते समुदाये यो धर्मः स एकादेशविशिष्टे पूर्वान्तवद्भावेनायाति, एवमविकृते परस्थानिनि सति तत्सहिते समुदाये यो धर्मः स एकादेशविशिष्टे परादिवद्भावेनायाति; इत्येतत्फलितकथनम् ॥ २–'शिव+आ+इहि' इत्यवस्थायाम् 'शिव+आ' इत्यत्र 'अकः सवर्णे दीर्घः' इति दीर्घे प्राप्ते, 'आ+इहि' इत्यत्र 'आद्गुणः' इति गुणे च प्राप्ते धातूपसर्गकार्यत्वेन गुणस्यान्तरङ्गत्वाद् दीर्घस्य बहिरङ्गत्वात् पूर्वं गुणे जाते 'शिव+एहि' इत्यवस्थायाम् 'अन्तादिवच्च' इत्यनेन पूर्वान्तवद्भावेनाङत्वे 'ओमाङोश्च' इति पररूपे सिद्धमिदम् । अस्य 'हे शिव आगच्छ' इत्यर्थः ॥ ३–दैत्यशत्रुः ॥ ४–लक्ष्मीपतिः ॥ ५–'अव' इत्यस्य 'रक्ष' इत्यर्थः ॥ ६–एकदेशविकृतमनन्यवत्' इति न्यायेन गोशब्दत्वेऽप्येङन्तत्वाभावान्न प्रकृतिभावः । यस्य चित्रा गावस्तस्याग्रमिति शब्दार्थः ।

**अनेकाल्[1] शित्सर्वस्य १ । १ । ५५ ॥**

इति प्राप्ते[2] ॥

**ङिच्च १ । १ । ५३ ॥**

ङिदनेकालप्यन्त्यस्यैव स्यात् ॥

**अवङ् स्फोटायनस्य ६ । १ । १२३ ॥**

पदान्ते एङन्तस्य गोरवङ् वाऽचि । गवाग्रम्, गोऽग्रम् । पदान्ते किम् ? गवि ॥

**इन्द्रे च ६ । १ । १२४ ॥**

गोरवङ् स्यादिन्द्रे । गवेन्द्रः[3] ॥

**दूराद्धूते च ८ । २ । ८४ ॥**

दूरात्सम्बोधने[4] वाक्यस्य टेः प्लुतो वा ॥

**प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५ ॥**

एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ॥

**ईदूदेद्द्विवचनं प्रगृह्यम् १ । १ । ११ ॥**

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ॥

**अदसो मात् १ । १ । १२ ॥**

---

१—अनेकाल् शिच्चादेशौ सर्वस्य स्थाने भवतः ॥ २—अस्य 'सर्वादेशे' इत्यादिः ॥ ३—गवां पतिर्वृषभः ॥ ४—सम्यग्बोधनं सम्यग् ज्ञापनं न त्वभिमुखीकरणमात्रम् ॥

अस्मात्परावीदूतौ[1] प्रगृह्यौ स्तः । अमी ईशाः[2] । रामकृष्णावमू आसाते[3] । मात्किम् ? अमुकेऽत्र[4] ॥

**चादयोऽसत्त्वे १ । ४ । ५७ ॥**

अद्रव्यार्थाश्चादयो[5] निपाताः स्युः ॥

**प्रादयः १ । ४ । ५८ ॥**

एतेऽपि तथा[6] ॥

**निपात एकाजनाङ् । १ । १ । १४ ॥**

एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ[7] इन्द्रः । उ[8] उमेशः । 'वाक्यस्मरणयोरङित्'[9]; आ[10] एवं नु मन्यसे । आ[11] एवं किल तत् । अन्यत्र ङित्; आ ईषदुष्णम्[12] ओष्णम् ॥

**ओत् १ । १ । १५ ॥**

ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥

---

१–अदस्सम्बन्धिनो मकारादित्यर्थः ॥ २–'द्विवचनमिति तु नानुवर्तते' इति बोधयितुं बहुवचनमुदाहरति–'अमी ईशाः' इति । अस्य 'एते ईश्वराः' इत्यर्थः ॥ ३–उपविशत इत्यर्थः ॥ ४–असति माद्ग्रहणे एकारोऽप्यनुवर्तेत माद्ग्रहणे कृते मकारादव्यवहितपरस्यैकारस्याभावान्नानुवृत्तिरिति ॥ ५–सत्त्वं द्रव्यम्, तच्च लिङ्गसंख्यान्वितम् ॥ ६–निपातसंज्ञकाः स्युरित्यर्थः ॥ ७–इ विस्मये ॥ ८–उ वितर्के, उमेशो महादेवः ॥ ९–अयं भाष्यश्लोकस्य चरमः पादः; पूर्णः श्लोकस्त्वित्थम्—

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥ इति ॥

१०–इदं वाक्यस्योदाहरणम्, अवश्यमेव त्वम् एवम्—उक्तप्रकारेण मन्यसे, इति तदर्थः ॥ ११–किञ्चन वस्तु दृष्ट्वा तत् सदृशं प्राग्दृष्टं वस्तु स्मरति–आ एवं किल तत्–निश्चयेनैतादृशमेव तदासीदित्यर्थः ॥ १२–किञ्चित्तापयुक्तम् ॥

**सम्बुद्धौ शाकल्यस्येतावनार्षे १ । १ । १६ ॥**

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे। विष्णो इति, विष्ण[1] इति, विष्णविति ॥

**मय उञो वो वा ८ । ३ । ३३ ॥**

मयः परस्य उञो वो वाऽचि। किम्वुक्तम्[2], किमु उक्तम् ॥

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७ ॥**

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्व[3]विधि-सामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र, च[4]क्र्यत्र । पदान्ता इति किम् ? गौर्यौ—

**अचो रहाभ्यां द्वे ८ । ४ । ४६ ॥**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौ। ( न समासे ) । वाप्यश्वः ॥

**ऋत्यकः ६ । १ । १२८ ॥**

ऋति परे पदान्ता अकः प्रा[5]ग्वद्वा। ब्रह्म[6] ऋषिः, ब्रह्मर्षिः।

---

१—शाकल्यमते प्रगृह्यसंज्ञायां सत्यामपि मतान्तरे तदभावेऽवादेशे तत्राप्येतन्मते वलोपः ॥ २—अत्र 'पूर्वत्रासिद्धम्' इत्यनेन वत्वशास्त्रस्यासिद्धत्वात् 'मोऽनुस्वारः' इति नानुस्वारः। वत्वाभावपक्षे 'निपात एकाजनाङ्' इति प्रगृह्यत्वे प्रकृतिभावः ॥ ३—यदि कृतेऽपि ह्रस्वे यणादिकं स्यात्तर्हि ह्रस्वविधानमेवानर्थकं स्याद्दीर्घस्यापि यणि रूपवैचित्र्याभावादिति भावः ॥ ४—अत्र चक्री चक्रपाणिर्विष्णुर्वर्तत इति शेषः ॥ ५—'एङः पदान्तात्—' इत्यतः 'पदान्तात्' इति, 'इकोऽसवर्णे—' इत्यतः 'शाकल्यस्य ह्रस्वः' इति च वर्तते तदाह—प्राग्वदिति; पूर्ववदनेनापि ह्रस्व इत्यर्थः ॥ ६—अत्रापि ह्रस्वविधानसामर्थ्यात् 'आद्गुणः' इति गुणो न ॥

पदान्ताः किम् ? आर्च्छत्[1] ॥

इत्यच्सन्धिः ।

## अथ हल्सन्धिः

**स्तोः श्चुना श्चुः ८ । ४ । ४० ॥**

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ[2] स्तः । रामश्शेते[3] । रामश्चिनोति[4] । सच्चित् । शार्ङ्गिञ्जय[5] ॥

**शात् ८ । ४ । ४४ ॥**

शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः[6] प्रश्नः[7] ॥

**ष्टुना ष्टुः ८ । ४ । ४१ ॥**

स्तोः[8] ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते[9] । पेष्टा[10] । तट्टीका । चक्रिण्ढौकसे[11] ॥

**न पदान्ताट्टोरनाम् ८ । ४ । ४२ ॥**

---

१-'आडजादीनाम्' इति जातस्याडागमस्य धात्ववयवत्वेन पदान्तत्वाभाव इति भावः' अत्र 'आटश्च' इति वृद्धिः । आगच्छदिति तदर्थः ॥ २—सकारस्य शकारचवर्गाभ्यां योगे शकार एवं तवर्गस्य शकारचवर्गाभ्यां योगे चवर्गः इत्यर्थः ॥ ३—शयनं करोति ॥ ४-अस्य 'चयनं करोति' इति 'सच्चित्' इत्यस्य च 'सदा विद्यमानं ज्ञानस्वरूपं ब्रह्म' इत्यर्थः ॥ ५—हे शार्ङ्गाख्यधनुर्धर विष्णो ! विजयं लभस्व इत्यर्थः; अत्र तवर्गस्य शकारेण योगे सच्छास्त्रमित्युदाहरणं ज्ञेयम् ॥ ६—अस्य भाषणमर्थः । अत्र शकारेण योगे सच्छास्त्रमित्युदाहरणं ज्ञेयम् ॥६—अस्य भाषणमर्थः । शकारेण योगे तवर्गस्य नकारस्य ञकारः प्राप्तः ॥ ७—पृच्छा ॥ ८——तथा च सकारस्य षकारटवर्गाभ्यां योगे षकार एवं तवर्गस्य षकारटवर्गाभ्यां योगे टवर्गः ॥ ९-गच्छति ॥ १०—चूर्णकारकः ॥ ११-हे सुदर्शनाख्यचक्रधारिन् हरे ! गच्छसि ॥

पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट्[1] सन्तः[2]। षट् ते। पदान्तात्किम्? ईट्टे[3]। टोः[4] किम्? सर्पिष्टमम्[5]। (अ[6]नाम्नवतिनगरीणामिति वाच्यम्)। षण्णाम्। षँण्णवतिः[7]। षण्णगर्यः॥

**तोः षि ८।४।४३॥**

न ष्टुत्वम्। सन्षष्ठः॥

**झलां जशोऽन्ते ८।२।३९॥**

पदान्ते झलां जशः स्युः॥ वागीशः[8]॥

**यरोऽनुनासिकेऽनुनासिको वा ८।४।४५॥**

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात्। एतन्मुरारिः[9] एतद् मुरारिः। (प्रत्यये[10] भाषायां नित्यम्) तन्मात्रम्। चिन्मयम्[11]॥

---

१—अत्र ष्टुत्वनिषेधाभावे 'षट् षन्तः' 'षट्टे' इति स्यात्॥ २—सन्तो महात्मानः॥ ३-इड् ते इत्यवस्थायां डकारस्य पदान्तत्वाभावेन ष्टुत्वनिषेधाभावे ष्टुत्वेन तकारस्य टकारे चर्त्वेन डकारस्य टकारे सिद्धं रूपम्। स्तुतिं करोतीति तदर्थः॥ ४—टोर्ग्रहणाभावे पदान्ताभ्यां षकारटवर्गाभ्यां परस्य स्तोः ष्टुर्नेत्यर्थे सर्पिषः षकारस्य पदान्तत्वात् ततः परस्य तमपः तकारस्य ष्टुत्वं न स्यादिति भावः॥ ५—सर्पिर्धृतम्॥ ६—पदान्ताट्टवर्गात्परेषां नाम्नवतिनगरीशब्दानां स्तोः ष्टुत्वनिषेधो नेत्यर्थः, तथा च 'षड्+नाम्' 'षड्+नवतिः' 'षड्+नगर्यः' इत्येतेषु नस्य ष्टुत्वेन णकारे, आद्ये 'प्रत्यये भाषायां नित्यम्' इति डकारस्य नित्यमनुनासिकत्वे, अन्त्ययोः 'यरोऽनुनासिके' इत्यनुनासिकत्वविकल्पे सत्येषां सिद्धिः॥ ७—षडधिका नवतिः॥ ८—बृहस्पतिः॥ ९—विष्णुः॥ १०—अनुनासिकादौ प्रत्यये परे पदान्तस्य यरो नित्यमनुनासिको भाषायाम् (लोके) इत्यर्थः॥ ११—चेतनस्वरूपम्॥

**तोर्लि ८ । ४ । ६० ॥**

तवर्गस्य लकारे परे परसवर्णः । तल्लयः[1] । विद्वाँल्लिखति । नस्यानुनासिको लः ॥

**उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१ ॥**

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥

**तस्मादित्युत्तरस्य १ । १ । ६७ ॥**

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥

**आदेः[2] परस्य १ । १ । ५४ ॥**

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य[3] थः ॥

**झरो झरि सवर्णे ८ । ४ । ६५ ॥**

हलः परस्य झरो वा लोपः सवर्णे झरि ॥

**खरि च ८ । ४ । ५५ ॥**

खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम्[4] । उत्तम्भनम् ॥

---

१—तस्य नाशः ॥ २—'अलोऽन्त्यस्य' इत्यस्यापवादोऽयम् ॥ ३—सस्येति; अघोषमहाप्राणप्रयत्नवतः सस्य तादृश एव थकार इत्यर्थः ॥ ४—'उद्+स्थानम्' इत्यत्र 'तस्मादित्युत्तरस्य' इत्येकवाक्यतापन्नेन 'उदः स्थास्तम्भोः पूर्वस्य' इत्यनेन सूत्रेण 'आदेः परस्य' इत्येतत्सहकृतेन विवारमहाप्राणप्रयत्नवतः सकारस्य स्थाने तादृशे थकारे 'झरो झरि सवर्णे' इत्यनेन पूर्वथकारस्य वैकल्पिके लोपे दकारस्य 'खरि च' इति चर्त्वे 'उत्थानम्' इति सिद्धम् । लोपाभावपक्षे उदो दस्य चर्त्वे 'उत्थ्थानम्' इति । एवम् 'उत्तम्भनम्' 'उत्थ्तम्भनम्' । अत्र थकारस्य चर्त्वेन तकारत्वं तु नाशङ्क्यं 'चर्त्वदृष्टया पूर्वसवर्णस्यासिद्धत्वात् ।' 'उत्थानम्' इत्यस्य 'उन्नतिः' 'उत्तम्भनम्' इत्यस्य 'अवरोधः' इत्यर्थः ।

**झयो होऽन्यतरस्याम् ८ । ४ । ६२ ॥**

झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः, वाग्हरिः[1] ॥

**शश्छोऽटि ८ । ४ । ६३ ॥**

झयः परस्य शस्य छो वाऽटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः[2], तच्शिवः । ( छत्वममीति[3] वाच्यम् ) तच्छ्लोकेन ॥

**मोऽनुस्वारः ८ । ३ । २३ ॥**

मान्तस्य पदस्यानुस्वारो हलि । हरिं[4] वन्दे ॥

**नश्चापदान्तस्य झलि ८ । ३ । २४ ॥**

नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते[5] । झलि किम् ? मन्यते ॥

**अनुस्वारस्य[6] ययि परसवर्णः ८ । ४ । ५८ ॥**

---

१—एवं चवर्गटवर्गतवर्गपवर्गेभ्यः परस्य हस्य झकारढकारधकारभकारा भवन्ति । उदाहरणञ्च क्रमेण—अज्झीनम्, षड्ढलानि, तद्धविः, गुब्भसति इति बोध्यम् । वाग्घरिः इत्यस्य 'वाणीश्वरः' इत्यर्थः ॥ २—तस्य शिवः ॥ ३—'शश्छोऽटि' इत्यस्य स्थाने 'शश्छोऽमि' इति वक्तव्यमित्यर्थः ॥ ४—अत्र 'अलोऽन्त्यस्य' इति परिभाषासूत्रेणान्त्यस्य मस्यानुस्वारः ॥ ५—आक्रमणं करिष्यति ॥ ६—अपदान्तस्यैवानुस्वारस्यानेन परसवर्णः, स च नित्यस्तस्माद् गङ्गादिशब्देऽनुस्वारसहितः प्रयोगः प्रामादिकः ।

स्पष्टम् । शान्तः[1] ॥

**वा पदान्तस्य ८ । ४ । ५९ ॥**

त्वङ्करोषि, त्वं करोषि ॥

**मो राजि समः क्वौ ८ । ३ । २५ ॥**

क्विबन्ते राजतौ परे समो मस्य म एव[2] स्यात् । सम्राट्[3] ॥

**हे मपरे वा ८ । ३ । २६ ॥**

मपरे हकारे परे मस्य मो वा । किम् ह्मलयति[4], किं ह्मलयति ॥ ( यवलपरे[5] यवला वा ) । कियँ ह्यः[6], किं ह्यः, । किवँ ह्वलयति[7], किं ह्वलयति । किलँ ह्लादयति[8], किं ह्लादयति ॥

**नपरे नः ८ । ३ । २७ ॥**

नपरे हकारे मस्य नो वा । किन् ह्नुते[9], किं ह्नुते ॥

**आद्यन्तौ टकितौ १ । १ । ४६ ॥**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥

**ङ्णोः[10] कुक् टुक् शरि ८ । ३ । २८ ॥**

वा स्तः । (चयो[11] द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ।)

---

१–एवम् अङ्कितः, अञ्चितः, कुण्ठितः, गुम्फित इत्यादीन्युदाहरणानि ज्ञेयानि ॥ २–अत्र प्रकरणे नित्यं वैकल्पिकं वा मकारस्य मकारविधानमनुस्वारनिवृत्त्यर्थम् ॥ ३–चक्रवर्ती ॥ ४–चालयति ॥ ५–यवलपरे हकारे परे मकारस्य क्रमशो यवला वा भवन्ति । पक्षे 'मोऽनुस्वारः' । अत्र 'स्थानेऽन्तरतमः' इति परिभाषया मकारस्य स्थाने सानुनासिका यवला ज्ञेयाः ॥ ६–ह्यः पूर्वदिनम् ॥ ७–चालयति ॥ ८–सुखयति ॥ ९–अपनयति ॥ १०–ङकारणकारयोः क्रमेण कुक्टुकावागमौ स्तो वा शरि पर इत्यर्थः ॥ ११–चय्प्रत्याहारबोध्यवर्णानां स्वस्ववर्गद्वितीयवर्णा भवन्ति पौष्करसादेराचार्यस्य मते ॥

प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः । सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः ॥

**डः सि धुट् ८ । ३ । २९ ॥**

डात्परस्य सस्य धुड्वा । षट्त्सन्तः[1], षट् सन्तः ॥

**नश्च ८ । ३ । ३० ॥**

नान्तात्परस्य सस्य धुड्वा । सन्त्सः[2], सन्सः ॥

**शि तुक् ८ । ३ । ३१ ॥**

पदान्तस्य नस्य शे परे तुग्वा । सञ्छम्भुः[3], सञ्च्छम्भुः, सञ्चशम्भुः, सञ्शम्भुः ॥

**ङमो ह्रस्वादचि ङमुण् नित्यम् ८ । ३ । ३२ ॥**

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट्[4] । प्रत्यङ्ङात्मा[5] । सुगण्णीशः[6] । सन्नच्युतः[7] ॥

---

१–धुडागमे सति 'षड्+ध्+सन्तः' इति जाते तत्र पूर्वं धकारस्य चर्त्वेन तकारे कृते तस्मिन्परे डकारस्य पुनश्चर्त्वेन टकारे कृते 'षट्त्सन्तः' इति सिध्यति ॥ २–विद्यमानोऽसावित्यर्थः ॥ ३–'सन्+शम्भुः' इत्यत्र 'शि तुक्' इत्यनेन नकारस्य वैकल्पिके तुगागमेऽनुबन्धलोपे तकारस्य श्चुत्वेन चकारे नकारस्यापि श्चुत्वेन ञकारे कृते 'शश्छोऽटि' इत्यनेन वैकल्पिके छकारे 'झरो झरि'–इत्यनेन चकारस्य वैकल्पिकलोपे सञ्छम्भुः; लोपाभावपक्षे सञ्च्छम्भुः, छत्वलोपयोरभावे सञ्चशम्भुः, तुगागमाभावे सञ्शम्भुरिति रूपचतुष्टयम् ॥ ४–ङम्प्रत्याहारबोध्या ङकारणकारनकारास्तेषां प्रत्येकमुटा सह सम्बन्धेन 'ङुट्' 'णुट्' 'नुट्' इत्यागमत्रयं ज्ञेयम् ॥ ५–अन्तरात्मा ॥ ६–सुन्दरगणनाशीलानां पतिः ॥ ७–सद्रूपो विष्णुः ॥

**समः सुटि ८ । ३ । ५ ॥**

समो रुः सुटि ॥

**अत्रानुनासिकः पूर्वस्य तु वा ८ । ३ । २ ॥**

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥

**अनुनासिकात्परोऽनुस्वारः ८ । ३ । ४ ॥**

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥

**खरवसानयोर्विसर्जनीयः ८ । ३ । १५ ॥**

खरि अवसाने च पदान्तस्य रेफस्य विसर्गः । ( संपुंकानां सो वक्तव्यः ) । सँस्स्कर्ता[1], संस्स्कर्ता ॥

**पुमः खय्यम्परे ८ । ३ । ६ ॥**

अम्परे खयि पुमो रुः । पुँस्कोकिलः[2], पुंस्कोकिलः ॥

**नश्छव्यप्रशान् ८ । ३ । ७ ॥**

अम्परे छवि नान्तस्य पदस्य रुः; न तु प्रशान्शब्दस्य ॥

**विसर्जनीयस्य सः ८ । ३ । ३४ ॥**

---

१—'सम्+स्कर्ता' इत्यत्र मकारस्य 'समः सुटि' इति रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन सकारोत्तराकारस्यानुनासिकत्वविकल्पे, तदभावे 'अनुनासिकात्परोऽनुस्वारः' इति अनुस्वारागमे 'सँरु+स्कर्ता' 'संरु+स्कर्ता' इति जातेऽनुबन्धलोपे 'खरवसानयोर्विसर्जनीयः' इत्यनेनोभयत्रापि विसर्गे 'संपुंकानाम्—' इति विसर्गस्य सकारे जाते सिद्धं रूपद्वयम्—'सँस्स्कर्ता' 'संस्स्कर्ता' इति । अत्र 'सम्परिभ्यां करोतौ भूषणे' इति भूषणेऽर्थे सुडागमात् 'संस्कर्ता' इत्यस्य 'भूषयिता' 'अलंकर्ता' इत्यादयः पर्यायाः ॥ २—पुमान् पिकः ॥

खरि। चक्रिँस्त्रायस्व[1], चक्रिंस्त्रायस्व। अप्रशान् किम्? प्रशान्[2] तनोति। पदस्येति किम्? हन्ति॥

**नॄन्[3] पे ८।३।१०॥**

नॄनित्यस्य रुर्वा पे॥

**कुप्वोः ≍क≍पौ च ८।३।३७॥**

कवर्गे पवर्गे च विसर्गस्य ≍क ≍पौ स्तः, चाद्विसर्गः। नॄँ[4] ≍पाहि, नॄँः पाहि, नॄं ≍पाहि, नॄंः पाहि। नॄन्पाहि॥

**तस्य परमाम्रेडितम् ८।१।२॥**

द्विरुक्तस्य परमाम्रेडितं स्यात्॥

**कानाम्रेडिते[5] ८।३।१२॥**

कान्नकारस्य रुः स्यादाम्रेडिते। काँस्कान्, कांस्कान्॥

---

१—'त्रायस्व' इत्यत्राम्पदबोध्यो रेफस्तत्परकश्छव् तकारो ज्ञेयः। रक्षां कुरु, इति तदर्थः॥ २—प्रशमनशीलो विस्तारयति॥ ३—नॄन् इति नॄशब्दस्य द्वितीयान्तानुकरणं लुप्तषष्ठीकं पदम्॥ ४—'नॄन्+पाहि' इत्यत्र 'नॄन् पे' इत्यनेन नकारस्य वैकल्पिके रुत्वेऽनुनासिकेऽनुस्वारे च 'नॄँ रु पाहि' नॄं रु पाहि' इति जाते, उभयत्राप्यनुबन्धलोपे रेफस्य विसर्गे 'कुप्वोः ≍क≍ पौ च' इत्यनेन विसर्गस्योपध्मानीयत्वे, उभयत्रापि चकाराद् विसर्गस्य विसर्गेऽनुनासिकपक्षे 'नॄँ ≍पाहि, नॄँः पाहि' अनुस्वारपक्षे च 'नॄं ≍पाहि, नॄंः पाहि' इत्येवं रूपचतुष्टयं सिद्धम्, रुत्वाभावे 'नॄन् पाहि' इति पञ्चमं रूपम्। नरान् रक्षेति तदर्थः। 'नॄन् पे' इत्यत्र पशब्देऽकारो न विवक्षितः॥ ५—कानिति 'किम्' शब्दस्य द्वितीयाबहुवचनान्तानुकरणं लुप्तषष्ठीकं पदम्॥

**छे[1] च ६ । १ । ७३ ॥**

ह्रस्वस्य छे तुक् । शिवच्छाया[2] ॥

**पदान्ताद्वा ६ । १ । ७६ ॥**

दीर्घात्पदान्ताच्छे तुग् वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥

इति हल्सन्धिः ॥

## अथ विसर्गसन्धिः

**विसर्जनीयस्य सः ८ । ३ । ३४ ॥**

खरि । विष्णुस्त्राता[3] ॥

**वा शरि ८ । ३ । ३६ ॥**

शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥

**ससजुषो रुः ८ । २ । ६६ ॥**

पदान्तस्य सस्य सजुषश्च रुः स्यात् ॥

**अतो रोरप्लुतादप्लुते ६ । १ । ११३ ॥**

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः[4] ॥

**हशि च ६ । १ । ११४ ॥**

तथा[5] । शिवो वन्द्यः[6] ॥

**भोभगोअघोअपूर्वस्य योऽशि ८ । ३ । १७ ॥**

---

१-अत्रापि 'छे' इत्यत्र पूर्ववदकारो न विवक्षितः ॥ २-'छाया सूर्यप्रिया कान्तिः' इत्यमरः ॥ ३-रक्षकः ॥ ४-पूजनीयः ॥ ५-अप्लुतादतः परस्य रोरुः स्याद्धशि परे, इति सूत्रार्थः ॥ ६-प्रणम्यः ॥

एतत्पूर्वस्य[1] रोर्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां[2] रोर्यत्वे कृते ॥

**हलि सर्वेषाम् ८ । ३ । २२ ॥**

भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो[3] नमस्ते । अघो[4] याहि ॥

**रोऽसुपि ८ । २ । ६९ ॥**

अह्नो रेफादेशो न तु सुपि । अहरहः[5] । अहर्गणः[6] ॥

**रो रि ८ । ३ । १४ ॥**

रेफस्य रेफे परे लोपः ॥

**ढ्रलोपे पूर्वस्य दीर्घोऽणः ६ । ३ । १११ ॥**

ढ[7]रेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना[8] रमते । हरी रम्यः । शम्भू राजते । अणः किम् ? तृढः[9] । वृढः[10] । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते—

---

१—भोपूर्वस्य भगोपूर्वस्य अघोपूर्वस्य अवर्णपूर्वस्येत्यर्थः ॥ २—भोस्प्रभृतीनामित्यर्थः ॥ ३—भगवन् ॥ ४—हे अघवन् (पापपरायण) गच्छ इत्यर्थः ॥ ५—अहन् अहन् इति अलौकिकं रूपम् । प्रतिदिनमित्यर्थः ॥ ६—अत्र 'अहरादीनां पत्यादिषु वा रेफः' इति विसर्गापवादवार्तिकम्, तेन अहर्पतिः, गीर्पतिः, धूर्पतिः—इत्यादौ रेफस्य न विसर्गः, पक्षे तु विसर्गोपध्मानीयौ स्तः । अहर्गण इत्यस्य दिनसमूह इत्यर्थः ॥ ७—ढकारलोपनिमित्ते ढकारे परे रेफलोपनिमित्ते रेफे च परे पूर्वस्याणो दीर्घ इति स्पष्टार्थः ॥ ८—अत्र पूर्वग्रहणमुत्तरपदाधिकारनिवृत्त्यर्थमत एव व्यस्तप्रयोगमुदाहरति—'पुना रमते' इत्यादि ॥ ९—हिंसितः ॥ १०—उद्यतः ॥

**विप्रतिषेधे परं कार्यम् १ । ४ । २ ॥**

तुल्यबलविरोधे[1] परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः[2] ॥

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६ । १ । १३२॥**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? एषको रुद्रः । अनञ्समासे किम् ? असः शिवः । हलि किम् ? एषोऽत्र ॥

**सोऽचि लोपे चेत्पादपूरणम् ६ । १ । १३४ ॥**

सँ[3] इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत । [4]सेमा-

---

१—अन्यत्रान्यत्र लब्धावकाशयोरेकत्र युगपत्प्राप्तिस्तुल्यबलविरोधः । प्रकृते 'पुना रमते' इत्यत्र 'रो रि' इत्यस्य 'शिवो वन्द्यः' इत्यत्र 'हशि च' इत्यस्य लब्धावकाशतया 'मनोरथः' इत्येकस्मिँल्लक्ष्ये द्वयोः प्राप्तिरतो विप्रतिषेधः ॥ २—'मनस्+रथः' इति स्थिते 'ससजुषो रुः' इति रुत्वे कृते 'हशि च' इत्युत्वे 'रो रि' इति लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इत्यनेनोत्वं प्रबाध्य प्राप्तस्य लोपस्य 'पूर्वत्रासिद्धम्' इत्यनेन 'हशि च' इति दृष्टयाऽसिद्धत्वे, उत्वे, गुणे 'मनोरथः' इति सिद्धम् । 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः ॥ ३—'सस्' इति प्रथमान्तानुकरणलुप्तषष्ठ्यन्तम् । 'सुलोपः' इति वर्ततेऽत आह—स इत्यस्येति ॥ ४—'स सु+इमामविड्ढि, स सु+एष दाशरथी रामः' इत्युभयत्रापि यदि सोर्लोपो न स्यात्तदा सस्य रुत्वे यत्वे यकारस्य लोपे तस्यासिद्धत्वाद् गुणाद्यभावे एकाक्षराधिक्येन पादपूर्तिर्न स्यात् । 'दाशरथी रामः' इत्यत्र तु 'दाशरथिस् रामः' इत्यवस्थायां सकारस्य रुत्वे, रो रि लोपे दीर्घः ॥

मविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसन्धिः ॥

इति पञ्चसन्धिप्रकरणम्[1] ।



१—पञ्चसन्धिशब्दो विचार्यते-तत्र पञ्चजातीयानां वर्णानां स्थाने सन्धिर्वर्णसन्धानम् । तत्राज्झलविसर्गसन्धयः प्रसिद्धाः । चतुर्थः स्वादि-सन्धिः । यद्यपि स हल्सन्धिरेव शिवोऽर्च्य इत्यादौ विभक्तिसकारादेर्हल्-रूपत्वात्, तथापि तत्र प्रायो विभक्तिस्थानिककार्यस्यैव 'स्वौजसमौट्—' इति सु प्रत्यय इत्येव प्रवृत्त्यभिधानेन गोबलीवर्दन्यायेन हल्सन्धितः पृथक्कथनम् । पञ्चमः कः ? इति प्रश्ने केचित् प्रकृतिभावस्य तत्त्वमाच-क्षते, तन्न; सन्धेर्मेलनरूपस्य तत्राभावात् । वयं तु ब्रूमः—पञ्चमोऽनुस्वार-सन्धिः परसवर्णरूपः; हल्सन्धौ तद्विधायकसूत्रोल्लेखस्तु मकारनकार-रूपहल्वर्णयोस्तत्र प्रकरणेऽनुस्वारे सम्पन्ने एवानुस्वारस्य वर्णान्तर-सन्धानात् ॥

# अथ षड्लिङ्गेषु अजन्तपुँल्लिङ्गाः

**अर्थवदधातुरप्रत्ययः[1] प्रातिपदिकम् १ । २ । ४५ ।**

धातुं प्रत्ययं[2] प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥

**कृत्तद्धितसमासाश्च १ । २ । ४६ ॥**

कृत्तद्धितान्तौ समासाश्च तथा[3] स्युः ॥

**स्वौजस[4]मौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४ । १ । २ ॥**

सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ।

**ङ्याप्प्रातिपदिकात् । ४ । १ । १ ॥**

**प्रत्ययः ३ । १ । १ ॥**

---

१—'सुप्तिङन्तम्—'इति सूत्रे प्रथमं निर्दिष्टं सुबन्तं साधयितुं प्रकरणषट्कमारभमाणस्तत्रादौ सुब्विधौ प्रातिपदिकस्य प्रधानतयोद्देशेन तत्संज्ञाविधायकसूत्रमाह–अर्थवदित्यादि । 'धनं वनम्' इत्यादौ प्रतिवर्णं संज्ञावारणाय—अर्थवदिति । 'अहन्' इत्यादौ नलोपाद्यापत्तिवारणाय-अधातुरिति ॥ २—अप्रत्यय इत्यत्र प्रत्ययपदमावर्त्यते, तत्रैकः प्रत्ययपरोऽपरश्च प्रत्ययान्तपरः प्रत्ययग्रहणपरिभाषया प्रत्ययशब्दात्तदन्तविधिरत आह—प्रत्ययं प्रत्ययान्तं चेत्यादि । प्रत्ययपर्युदासात् 'हरिषु' इत्यत्र सोर्न प्रातिपदिकत्वम् । प्रत्ययान्तपर्युदासेन समुदायस्य न संज्ञा ॥ ३—प्रातिपदिकसंज्ञकाः स्युरित्यर्थः ॥ ४—अत्रायं लेखक्रमो ज्यायान्—पूर्वम् 'प्रत्ययः', 'परश्च', 'ङ्याप्प्रातिपदिकात्' इत्यधिकारसूत्रत्रयं ततः 'स्वौजसमौट्—'इति सूत्रं ततः 'ङ्यन्तादाबन्तात्०—इति वृत्तिस्ततः 'सु औ जस् इति प्रथमा' इत्यादीति बोध्यम् ॥

**परश्च ३ । १ । २ ॥**

इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥

**सुपः १ । ४ । १०३ ॥**

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि[1] स्युः ॥

**द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२ ॥**

द्वित्वैकत्वयोरेते[2] स्तः ॥

**विरामोऽवसानम् १ । ४ । ११० ॥**

वर्णानामभावोऽवसानसंज्ञः[3] स्यात् । रुत्वविसर्गौ । रामः ॥

**सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४ ॥**

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

**प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ॥**

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥

**नादिचि ६ । १ । १०४ ॥**

आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥

---

१—यथा 'सु' इत्येकवचनम्, 'औ' इति द्विवचनम्; 'जस्' इति बहुवचनम्; एवमन्यत्रापि ॥ २—घटादिपदार्थद्वयविवक्षायां द्विवचनम् एवं तदर्थैकत्वविवक्षायामेकवचनम् ॥ ३—यदुच्चारणानन्तरमव्यवहितोत्तरकाले वर्णान्तरं नोच्चार्यते तत्र पूर्वोच्चारितान्तवर्णोऽवसानसंज्ञक इति भावः ॥

**बहुषु बहुवचनम् १ । ४ । २१ ॥**

बहुत्वविवक्षायां बहुवचनं स्यात् ॥

**चुटू १ । ३ । ७ ॥**

प्रत्ययाद्यौ चुटू इतौ स्तः ॥

**विभक्तिश्च १ । ४ । १०४ ॥**

सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥

**न विभक्तौ तुस्माः १ । ३ । ४ ॥**

विभक्तिस्थास्तवर्गसमा[1] नेतः । इति सस्य नेत्त्वम् । रामाः[2] ॥

**एकवचनं सम्बुद्धिः २ । ३ । ४९ ॥**

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥

**यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३॥**

यः प्रत्ययो यस्मात् क्रियते तदादिशब्दस्वरूपं तस्मिन्नङ्गं स्यात् ॥

**एङ्ह्रस्वात्सम्बुद्धेः ६ । १ । ६९ ॥**

---

१—सकारमकारा इत्यर्थः। सर्वस्मात्, रामाः, रामान्, रामम् इत्युदाहरणानि ॥ २—रामशब्दस्य अव्युत्पत्तिपक्षे 'अर्थवत्—' इति व्युत्पत्तिपक्षे च 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा, बहुत्वविवक्षायां 'रामश्च रामश्च रामश्च' इति विग्रहे रामरामरामेतिशब्दत्रयमध्ये 'सरूपाणाम्–'इत्यनेनैकस्य शेषे 'बहुषु बहुवचनम्' इत्येतत्सहकृतेन 'स्वौजसमौट्— इति सूत्रेण जसि 'चुटू' इत्यनेन जस्येत्त्वे 'तस्य लोपः' इति लोपे च कृते सकारस्य 'हलन्त्यम्' इति प्राप्तेत्संज्ञायाः 'विभक्तिश्च' इति विभक्तिसंज्ञापुरस्सरं 'न विभक्तौ—' इत्यनेन निषेधे 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे सस्य रुत्वविसर्गयोः 'रामाः' इति सुसम्पन्नम् ॥

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम[१] । हे रामौ । हे रामाः ॥

**अमि पूर्वः ६ । १ । १०७ ॥**

अकोऽम्यचि[२] पूर्वरूपमेकादेशः । रामम् । रामौ ॥

**लशक्वतद्धिते १ । ३ । ८ ॥**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥

**तस्माच्छसो नः पुंसि ६ । १ । १०३ ॥**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥

**अट्कुप्वाङ्नुम्व्यवायेऽपि ८ । ४ । २ ॥**

---

१—सम्बोधनं कारकविशेषस्तत्प्रयोगे प्रायः पूर्वं 'हे' शब्दप्रयोगः, एवं 'अयि, है' इत्यनयोरपि प्रयोगः, कुत्सया क्रोधेन वा वाक्योच्चारणे रेशब्दधिक्शब्दयोरपि सम्बोधने प्रयोगो यथा——'रे मूर्ख, धिङ्मूर्ख' इति; क्वचित्त्वरायाम् 'रे' 'हे' शब्दयोः सम्बोधने द्विर्वचनम्, यथा—

'रे रे रावण दीयतां जनकजा'

'हे हे यशोदे तव बालकोऽसौ'

इत्यादौ । क्वचिदन्तेऽपि 'है' 'हे' शब्दयोः प्रयोगः, क्वचिद् 'हे' शब्दादिकं विनापि सम्बोधनप्रयोगः, यदुक्तम्—

हैहेशब्दौ विनापि स्यात्क्वचिदन्ते तयोः स्थितिः ।
यथा राम प्रसीद त्वं राम हे त्वां भजाम्यहम् ॥ इति ॥

२—'इको यणचि' इत्यतोऽचीति 'एकः पूर्वपरयोः' इति च वर्ततेऽत आह—अचीति । तथा चामोऽवयवेऽचि परे इति फलितार्थः ॥

अट् कवर्गः पवर्ग आङ नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि[1] रषाभ्यां परस्य नस्य णः समानपदे। इति प्राप्ते॥

**पदान्तस्य ८ । ४ । ३७ ॥**

नस्य णो न। रामान्॥

**टाङसिङसामिनात्स्याः ७ । १ । १२ ॥**

अदन्ताट्टादीनामिनादयः स्युः॥ णत्वम्। रामेण॥

**सुपि च ७ । ३ । १०२ ॥**

यञादौ सुपि अतोऽङ्गस्य दीर्घः। रामाभ्याम्॥

**अतो भिस ऐस् ७ । १ । ९ ॥**

अनेकाल् शित्सर्वस्य। रामैः॥

**ङेर्यः ७ । १ । १३ ॥**

अतोऽङ्गात्परस्य ङेर्यादेश[2]ः॥

**स्थानिवदादेशोऽनल्विधौ १ । १ । ५६ ॥**

आदेशः स्थानिवत्स्यान्न[3] तु स्थान्यलाश्रयविधौ। इति स्थानिवत्त्वात् सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥

---

१–अट् कवर्गः पवर्ग आङ नुमित्येतेषां मध्ये प्रत्येकं व्यवधाने यथासम्भवमिलितद्वयादिव्यवधानेऽपि रषाभ्यां परस्य नस्य णत्वमित्यर्थः॥ २–चतुर्थ्येकवचनस्य 'ङे' इत्येतस्येत्यर्थः॥ ३–स्थानिसम्बन्धी योऽल् तन्निमित्तके विधौ (कार्ये) स्थानिवद्भावो नेत्यर्थः॥

**बहुवचने झल्येत् ७ । ३ । १०३ ॥**

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् ? पचध्वम् ॥

**वाऽवसाने ८ । ४ । ५६ ॥**

अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥

**ओसि च ७ । ३ । १०४ ॥**

अतोऽङ्गस्यैकारः[1] । रामयोः ॥

**ह्रस्वनद्यापो नुट् ७ । १ । ५४ ॥**

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ॥

**नामि ६ । ४ । ३ ॥**

अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे । रामयोः । सुपि-एत्वे कृते ।

**आदेशप्रत्यययोः ८ । ३ । ५९ ॥**

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयो[2]ऽप्यदन्ताः ॥

---

१—ओसि पर इति शेषः ॥ २—आदिशब्दाद् देवघटपटकुम्भ-स्तम्भनागरागपाकशाकप्रभृतयः शब्दा ग्राह्याः ॥

**सर्वादीनि[1] सर्वनामानि १ । १ । २७ ॥**

सर्व विश्व उभ उभय डतर-डतम अन्य अन्यतर इतर त्वत्[2] त्व नेम सम सिम[3]। पूर्वपरावर[4]दक्षिणोत्तरापराधराणि[5] व्यवस्थायामसंज्ञायाम्। स्वमज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः[6]। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥

**जसः शी ७ । १ । १७ ॥**

अदन्तात्सर्वनाम्नो जसः शी स्यात्। अनेकाल्त्वात्सर्वादेशः। सर्वे ॥

**सर्वनाम्नः स्मै ७ । १ । १४ ॥**

अतः सर्वनाम्नो ङेः स्मै। सर्वस्मै ॥

**ङसिङ्योः स्मात्स्मिनौ ७ । १ । १५ ॥**

अतः सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात् ॥

**आमि सर्वनाम्नः सुट् ७ । १ । ५२ ॥**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः ॥ उभशब्दो नित्यं द्विवचनान्तः। उभौ २।

१—सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युरित्यर्थः ॥ २—त्वत्त्वशब्दावन्यार्थवाचिनौ ॥ ३—सिमशब्दः सर्वपर्यायः ॥ ४—अवरशब्दो लघ्वर्थवाचकः ॥ ५—अधरशब्दो नीचार्थकः ॥ ६—उपसंव्यानशब्दः परिधानीयार्थकः ॥

उभाभ्याम् ३ । उभयोः २ । तस्येह[1] पाठोऽकजर्थः । उभयशब्दस्य द्विवचनं नास्ति[2] । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । उभयस्मात् । उभयेभ्यः । उभयस्य । उभयेषाम् । उभयस्मिन् । उभयेषु ॥ डतरडतमौ प्रत्ययौ, प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता[3] ग्राह्याः ॥ नेम इत्यर्धे ॥ समः[4] सर्वपर्यायस्तुल्यपर्यायस्तु न, यथासंख्यमनुदेशः समानामिति ज्ञापकात् ॥

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १ । १ । ३४ ॥**

एतेषां व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । असंज्ञायां किम् ? उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो[5] व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः, कुशला इत्यर्थः ॥

---

१—ननु सर्वनामसंज्ञानिमित्तकं कार्यमेकवचनबहुवचनविभक्त्योर्दृष्टम्, उभशब्दश्च द्विवचनान्त इति तस्य पाठो व्यर्थ इत्यत आह—तस्येहेति । 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति सूत्रेणेति शेषः ॥ २—'उभयो मणिः, उभये देवमनुष्याः' इति भाष्यकृता द्विवचनस्यादर्शितत्वात् । तेनैकवचनबहुवचनयोरेव तत्प्रयोगः, द्विवचने तु तयप्रत्ययान्तस्य, तथा च—उभयः, उभतयौ, उभये । उभयम्, उभतयौ, उभयान् इत्यादि ॥ ३—कतर-कतम-यतर-यतम-ततर-ततम-एकतर-एकतमशब्दाः ॥ ४—समशब्दः सर्वार्थवाची तुल्यार्थवाची च, तत्राद्यस्यैव सर्वादिगणे पाठो न द्वितीयस्य, अत एव समानामिति सूत्रकृतोक्तम् । तुल्यपर्यायस्य ग्रहणे समेषामित्युक्तं भवेत् ॥ ५—स्वस्य पूर्वादिशब्दस्याभिधेयो दिग्देशकालरूपोऽर्थस्तेनापेक्ष्यमाणो जिज्ञास्यमानो योऽवधेर्नियमः 'काशी पूर्वा, कुतः पूर्वा ? प्रयागात्' इत्येवंरूपः स व्यवस्थेति ॥

**स्वमज्ञातिधनाख्यायाम् १ । १ । ३५ ॥**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा। स्वे, स्वाः, आत्मीयाः, आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः, ज्ञातयोऽर्था वा ॥

**अन्तरं बहिर्योगोपसंव्यानयोः १ । १ । ३६ ॥**

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे, अन्तरा वा गृहाः; बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः, परिधानीया इत्यर्थः ॥

**पूर्वादिभ्यो नवभ्यो[2] वा ७ । १ । १६ ॥**

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च १ । १ । ३३ ।**

एते जसि उक्तसंज्ञा वा स्युः। प्रथमे, प्रथमाः ॥ तयः प्रत्ययः[3]। द्वितये, द्वितयाः । शेषं रामवत्[4] ॥ नेमे, नेमाः । शेषं सर्ववत् ॥

---

१—स्वशब्दस्य चत्वारोऽर्था आत्मात्मीयज्ञातिधनरूपाः, तत्राद्यद्वयार्थे सर्वनामसंज्ञा, नान्त्यद्वयार्थे । उदाहरणं मूले स्पष्टम् ॥ २—पूर्वपरावर—' इतिसूत्रपठितसप्तशब्दाः 'स्वमज्ञाति-' इत्यत्र पठितस्वशब्दः 'अन्तरं बहिः-' इतिसूत्रपठितान्तरशब्दश्चेत्येते नव पूर्वादयः । प्राप्तविभाषेयम्; तेन संज्ञोपसर्जनयोर्न प्रवर्तते ॥ ३—तेन तयप्प्रत्ययान्ता द्वितयत्रितयचतुष्टयपञ्चतयप्रभृतयः शब्दा ग्राह्याः । ४—एवमल्पार्धकतिपयशब्दानां जसोऽन्यत्र रामवद्रूपम् । इयमुभयत्रविभाषा; प्रथमादिशब्देऽप्राप्ता सर्वनामसंज्ञा नेमशब्दे च प्राप्ता ॥

( तीयस्य[1] ङित्सु वा ) । द्वितीयस्मै, द्वितीयायेत्यादि । एवं तृतीयः ॥ निर्जरः ॥

**जराया[2] जरसन्यतरस्याम् । ७ । २ । १०१ ॥**

अजादौ विभक्तौ । (प.) पदाङ्गाधिकारे[3] तस्य च तदन्तस्य च । (प.) निर्दिश्यमानस्यादेशा[4] भवन्ति । (प.) एकदेशविकृतमनन्यवत्[5] इति जरशब्दस्य जरस् । निर्जरसौ । निर्जरस इत्यादि । पक्षे हलादौ च रामवत् ॥ विश्वपाः ॥

**दीर्घाज्जसि च ६ । १ । १०५ ॥**

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् । विश्वपौ ॥

**सुडनपुंसकस्य १ । १ । ४३ ॥**

---

१-तीयप्रत्ययान्तस्य ङिति सुपि परे सर्वनामसंज्ञा वा भवति ॥ २—जराशब्दस्य जरस् वा स्यादजादौ विभक्तावित्यर्थः । इयमेवाप्राप्तविभाषा ॥ ३—ननु सूत्रेण जराशब्दस्यैव जरसादेशः प्राप्यते, निर्जरशब्दस्तु न तथा, तत्कथं तत्रास्य सूत्रस्य प्रवृत्तिः ? इति चेत्तत्राह—पदेति; पदाधिकारेऽङ्गाधिकारे च तस्य सूत्रोच्चारितस्य 'जरा' इत्यादेः, तदन्तस्य सूत्रोच्चारितशब्दान्तस्य 'परमजरा' इत्यादिकस्य च ग्रहणं भवति ॥ ४—ननु 'पदाङ्गाधिकारे—' इति परिभाषया तदन्तग्रहणे निर्जरेति समुदायस्य जरसादेशः स्यादित्याशङ्कायामाह—निर्दिश्यमानस्येति; सूत्रे उच्चार्यमाणस्यैवादेशा भवन्तीत्यर्थः ॥ ५—नन्वेवं सूत्रे जराशब्द उच्चरितो न तु जरशब्दस्तत्कथमत्र जरसादेशः ? इति चेत्तत्राह—एकदेशेति; एकदेशेन विकृतं रूपान्तरमापन्नमन्यसदृशं न भवतीत्यर्थः' छिन्नपुच्छेऽपि शुनि श्वत्वव्यवहारवत् ॥

स्वादिपञ्चवचनानि[1] सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥

**स्वादिष्वसर्वनामस्थाने १ । ४ । १७ ॥**

कप्प्रत्ययावधिषु[2] स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥

**यचि भम् १ । ४ । १८ ॥**

यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥

**आ कडारादेका संज्ञा १ । ४ । १ ॥**

इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या[3] पराऽनवकाशा च ॥

---

१–'सुट्' इत्ययं 'सु'प्रत्ययादारभ्य औटष्टकारपर्यन्तं प्रत्याहारः, सर्वनामस्थाने चासम्बुद्धावित्यत्र 'असम्बुद्धौ' इति विशेषणसामर्थ्यात् । 'शि सर्वनामस्थानम्' इत्यतः 'सर्वनामस्थानम्' इति वर्ततेऽत आह—स्वादीति ॥ २–भपदसंज्ञयोरयं विवेकः—'स्वौजसमौट्–' इत्येतत्सूत्रपठितशस्प्रत्ययादारभ्य चतुर्थपञ्चमाध्याययोः पठितेषु कप्प्रत्ययान्तेषु प्रत्ययेषु ये यकारादयोऽजादयश्च तेषु परतः प्रकृतेर्भसंज्ञा । तद्भिन्नेषु प्रत्ययेषु परतः प्रकृतेः पदसंज्ञा । क्वचिदजादावपि 'सिति च' इत्यनेन पदसंज्ञा, इति त्वन्यत् । नपुंसके प्रथमाद्वितीयाद्विवचने प्रकृतेर्भसंज्ञा तत्र सर्वनामसंज्ञाया अभावात् । अत एव सुपथी इत्यत्र टिलोपो भवति, सुपुंसी इत्यत्रासुङ्ङादेशश्च न भवति ॥ ३–ननु आ कडारादेका–' इति सूत्रमेकस्मिँल्लक्ष्ये संज्ञाद्वयाभावस्य बोधकम्, न त्वत्रैका भसंज्ञा भवति पदसंज्ञा वेत्यवधारयति इति कथं जानीयां विश्वपाशब्दे भसंज्ञैव न पदसंज्ञा इत्याशङ्कमानम्प्रत्याह—या परेति; तत्र उभयोः संज्ञयोरन्यत्रान्यत्र लब्धावकाशत्वे विरोधिनि लक्ष्ये परसंज्ञैव भवति विप्रतिषेधशास्त्रात् । तयोर्मध्ये एकस्या निरवकाशत्वे तु या निरवकाशा सैव भवति । निरवकाशत्वं च उत्सर्गाप्राप्तिस्थले चारितार्थ्याभावरूपम् । उत्सर्गश्चासति प्रतिबन्धके वर्तमानः, 'उत्सृज्यते बाधकसद्भावे त्यज्यते' इति तद्व्युत्पत्तेः । प्रकृते परा निरवकाशा च भसंज्ञैव ॥

**आतो धातोः ६ । ४ । १४० ॥**

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः[1] । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? हाहान्[2] ॥ हरिः । हरी ॥

**जसि च ७ । ३ । १०९ ॥**

ह्रस्वान्तस्याङ्गस्य गुणः । हरयः ॥

**ह्रस्वस्य गुणः ७ । ३ । १०८ ॥**

सम्बुद्धौ[3] । हे हरे । हरिम् । हरी । हरीन् ॥

**शेषो घ्यसखि १ । ४ । ७ ॥**

शेष[4] इति स्पष्टार्थम् । ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम् ॥

**आङो नाऽस्त्रियाम् ७ । ३ । १२० ॥**

---

१—विश्वपाशब्दात् शसि, अनुबन्धलोपे 'स्वादिष्वसर्वनामस्थाने' इति प्राप्तां पदसंज्ञां बाधित्वा 'आ कडारादेका संज्ञा' इति सूत्रसहकारेण परत्वानवकाशत्वाभ्यां 'यचि भम्' इति विश्वपाशब्दस्य भसंज्ञायाम् 'अलोऽन्त्यस्य' इति सूत्रसहकारेण 'आतो धातोः' इत्याकारलोपे विभक्तिसकारस्य रुत्वे विसर्गे च 'विश्वपः' इति सिद्धम् । विश्वपाशब्दस्य विश्वपालकोऽर्थः ॥ २—हाहाशब्दस्येदृशं रूपम्—हाहाः, हाहौ २, हाहाः हाहाम्, हाहान्, हाहा, हाहाभ्याम् ३, हाहाभिः, हाहैः, हाहाभ्यः २, हाहाः, २, हाहौः २, हाहाम्, हाहे, हाहासु; इति । हाहा इति गन्धर्वविशेषस्य संज्ञा ॥ ३—ह्रस्वान्तस्याङ्गस्य गुणः स्यादिति शेषः ॥ ४—तेन अनदीसंज्ञौ ह्रस्वाविदुतौ घिसंज्ञौ भवतः ।

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा:। हरिणा। हरिभ्याम् ३। हरिभिः ॥

**घेर्ङिति ७। ३। १११॥**

घिसंज्ञस्य ङिति सुपि गुणः। हरये। हरिभ्यः २।

**ङसिङसोश्च ६। १। ११०॥**

एङो ङसिङसोरति पूर्वरूपमेकादेशः। हरेः २। हर्योः २। हरीणाम् ॥

**अच्च घेः ७। ३। ११९॥**

इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च[1]। हरौ। हरिषु। एवं कव्यादयः[2] ॥

**अनङ् सौ। ७१। ९३॥**

सख्युरङ्गस्यानङ् आदेशोऽसम्बुद्धौ सौ॥

**अलोऽन्त्यात्पूर्व उपधा १। १। ६५॥**

अन्त्यादलः पूर्वो वर्ण[3] उपधासंज्ञः॥

**सर्वनामस्थाने चासम्बुद्धौ ६। ४। ८॥**

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने॥

**अपृक्त एकाल् प्रत्ययः १। २। ४१॥**

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६। १। ६८॥**

---

१—घिसंज्ञकस्यान्त्यस्याकारादेश इत्यर्थः॥ २—अग्निगिरिरविविधिपविप्रभृतय आदिशब्दार्थः॥ ३—चरमावयवाल्वर्णमात्रोऽवधिस्तत्पूर्वोऽन्त्यालसजातीय एव ग्राह्यः, स च वर्ण एव॥

हलन्तात्परं[1] दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते ॥

**नलोपः प्रातिपदिकान्तस्य ८ । २ । ७ ॥**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा[2] ॥

**सख्युरसम्बुद्धौ ७ । १९२ ॥**

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥

**अचो ञ्णिति ७ । २ । ११५ ॥**

अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ । सखायः । हे सखे । सखायम् । सखायौ । सखीन् । सख्या । सख्ये ॥

**ख्यत्यात्परस्य ६ । १ । ११२ ॥**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः । सख्युः ॥

**औत् ७ । ३ । ११८ ॥**

इतः[3] परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥

---

१–हलन्तात्परं 'सुतिसि' इत्येतदपृक्तं हल्लुप्यते, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं 'सु' इत्येतदपृक्तं हल्लुप्यते' इति स्पष्टोऽर्थः । अत्रेदमवधेयम्––ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः, व्याख्यानात् । तेन मालेवाचरत्––अमालात्, गङ्गेवाचरत्––अगङ्गात्, इत्यत्र नातिप्रसङ्गः ॥ २–प्रातिपदिकात्सखिशब्दात्सौ, अङ्गसंज्ञायाम् ङिच्च' इतिसहकारेण 'अनङ् सौ' इति शास्त्रेण इकारस्यानङादेशेऽनुबन्धलोपे 'अलोऽन्त्यात्पूर्व उपधा' इत्यनेन नकारात्पूर्वाकारस्योपधासंज्ञायाम् 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे 'अपृक्त एकाल् प्रत्ययः' इत्यपृक्तसंज्ञां विधाय 'हल्ङ्याब्भ्यो दीर्घात्–' इति सोः सकारस्य लोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे सखेति सिद्धम् । अस्य मित्रमर्थः ॥ ३–'इदुद्भ्याम्' :इत्यत्रैकदेशे स्वरितत्वप्रतिज्ञयाऽऽह–– इत इति; उकारानुवृत्तेरत्र फलाभावात् ॥

**पतिः[1] समास एव १ । ४ । ८ ॥**

घिसंज्ञः[2] । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥

**बहुगणवतुडति[3] संख्या १ । १ । २३ ॥**

**डति च १ । १ । २५ ॥**

डत्यन्ता संख्या षट्संज्ञा स्यात् ॥

**षड्भ्यो लुक् ७ । १ । २२ ॥**

जश्शसोः[4] ॥

**प्रत्ययस्य लुक्श्लुलुपः १ । १ । ६१ ॥**

लुक्श्लुलुप्शब्दैः[5] कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥

**प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ ॥**

प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥

**न लुमताऽङ्गस्य १ । १ । ६३ ॥**

लुमता[6] शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति[7] २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु । युस्मदस्मत्षट्-

---

१—पतिशब्दः समास एव घिसंज्ञको न तु केवल इत्यर्थः ॥ २—'शेषो घ्यसखि' इत्यतः 'घि' इत्यनुवर्ततेऽत आह—घिसंज्ञ इति ॥ ३—बहुगणशब्दौ वतुडतिप्रत्ययान्तौ चेत्येते संख्यासंज्ञकाः स्युरित्यर्थः ॥ ४—षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुगित्यर्थः ॥ ५—लुक्शब्दमुच्चार्य यत्र प्रत्ययादर्शनं तत्र लुक्संज्ञेत्येवं क्रमेणार्थः ॥ ६—'लुक् श्लु लुप्' एते लुमन्तः ॥ ७—कतिशब्दाज्जसि 'बहुगणवतुडति संख्या' इत्यनेन कतिशब्दस्य संख्यासंज्ञां विधाय 'डति च' इत्यनेन षट्संज्ञां च कृत्वा 'प्रत्ययस्य लुक्श्लुलुपः' इति लुक्संज्ञायाम्, 'षड्भ्यो लुक्' इति जसो लुकि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनेन प्राप्तस्य जस्निमित्तकस्य गुणस्य 'न लुमताऽङ्गस्य' इति निषेधे सिद्धं रूपम् ॥

संज्ञकास्त्रिषु सरूपाः ॥ त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः त्रिभ्यः २ ॥

**त्रेस्त्रयः[2] ७ । १ । ५३ ॥**

त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि[3] प्रियत्रयाणाम् ॥

**त्यदादीनामः ७ । २ । १०२ ॥**

एषामकारो विभक्तौ । ( द्विपर्यन्तानामेवेष्टिः ) द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ ॥ पाति लोकमिति पपीः सूर्यः ॥

**दीर्घाज्जसि च ६ । १ । १०५ ॥**

पप्यौ २ । पप्यः । हे पपीः । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये । पपीभ्यः २ । पप्यः २ । पप्योः । दीर्घत्वान्न नुट्, पप्याम् । ङौ तु सवर्णदीर्घः, पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः[4] ॥ बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥

**यू स्त्र्याख्यौ नदी १ । ४ । ३ ॥**

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ( प्रथमलिङ्गग्रहणं च )[5] पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ।

---

१–पुँल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेषु समानरूपाः; यथा–कति पुरुषाः ? कति स्त्रियः ? कति फलानि ? इत्यादि ॥ २–ननु त्रिशब्दो नित्यं बहुवचनान्त इत्युक्तम्, तत्कथं षष्ठ्येकवचने त्रेरिति रूपम् ? इति चेदुच्यते; यत्रार्थपरस्त्रिशब्दस्तत्रैव बहुवचनान्तः, अत्र तु त्रिशब्दः त्रिशब्दस्वरूपस्य बोधकः ॥ ३–स्वार्थमुत्सृज्य परार्थावलम्बनत्वं गौणत्वम् ॥ ४–वातप्रमीः शीघ्रगामी हरिण इत्यर्थः ॥ ५–पूर्वं समासादिवृत्तेः प्राक् स्त्र्याख्यस्य नित्यस्त्रीवाचकस्य सम्प्रति समासादिवृत्तावुपसर्जनत्वे सत्यपि नदीसंज्ञा भवतीत्यर्थः ॥

**अम्बार्थनद्योर्ह्रस्वः ७ । ३ । १०७ ॥**

सम्बुद्धौ[1] । हे बहुश्रेयसि ॥

**आण्नद्याः ७ । ३ । ११२ ॥**

नद्यन्तात्परेषां ङितामाडागमः ॥

**आटश्च ६ । १ । ९० ॥**

आटोऽचि परे वृद्धिरेकादेशः । बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयसीनाम् ॥

**ङेराम्नद्याम्नीभ्यः ७ । ३ । ११६ ॥**

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् ॥ अङ्यन्तत्वान्न सुलोपः[2] । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् ॥ प्रधीः[3] ॥

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६ । ४ । ७७ ॥**

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥

**एरनेकाचोऽसंयोगपूर्वस्य ६ । ४ । ८२ ॥**

धात्ववयवसंयोगपूर्वो[4] न भवति य इवर्णस्तदन्तो यो धातुस्त-

---

१—अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धावित्यर्थः ॥ २—तथा चोक्तम्—

अवीतन्त्रीतरीलक्ष्मीधीह्रीश्रीणामुणादिषु ।
अपि स्त्रीलिङ्गवृत्तीनां सोर्लोपो न कदाचन ॥ इति ॥

क्वचित् 'सप्तानामिति शब्दानाम्' इत्येवं तृतीयपादपाठः ॥ ३—प्रकृष्टबुद्धियुक्त इत्यर्थः ॥ ४—प्रधीशब्दे धीधातुस्तदवयवो धकारः स च संयोगसंज्ञकः, स पूर्वमीकारस्य, तदन्तस्तादृशेकारान्तो धीधातुस्तदन्तस्यानेकाचोऽङ्गस्य—स धातुः अन्तो यस्य अङ्गस्य तादृशम् अङ्गं प्रधीशब्दरूपं तच्चानेकाच्; इत्येवं समन्वयः ॥

दन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये। प्रध्यौ। प्रध्यः। प्रध्याम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्। एवं ग्रामणीः[1]। ङौ तु ग्रामण्याम्[2]॥ अनेकाचः किम्? नीः। नियौ। नियः। अमि शसि च परत्वादियङ्[3], नियम्। ङेराम्, नियाम्॥ असंयोगपूर्वस्य किम्? सुश्रियौ। यवक्रियौ॥

## गतिश्च १।४।६०॥

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। (गतिकारकेतरपूर्वपदस्य[4] यण् नेष्यते)। शुद्धधियौ॥

## न[5] भूसुधियोः ६।४।८५॥

एतयोरचि सुपि यण्न। सुधियौ। सुधिय इत्यादि॥ सुखमिच्छतीति सुखीः। सुतीः। सुख्यौ। सुत्यौ। सुख्युः। सुत्युः। शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥

## तृज्वत्क्रोष्टुः ७।१।९५॥

असम्बुद्धौ[6] सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥

---

१–ग्रामनायकः। 'नीः' इत्यस्य तु नेता' इत्यर्थः॥ २–'ङेराम्नद्याम्–' इति ङेरामादेशः॥ ३–'अमि पूर्वः' इत्यतः 'प्रथमयोः पूर्वसवर्णः' इत्यतश्च परत्वादित्यर्थः॥ ४–गतिकारकाभ्यामितरद् भिन्नं पूर्वपदं यस्य तस्याङ्गस्येत्यर्थः॥ ५–'इको यणचि' इति यण् प्राप्तस्तं बाधित्वा 'अचि श्नु–' इति इयङुवङौ प्राप्तौ तौ बाधित्वा 'एरनेकाचो–' 'ओः सुपि' इति सूत्राभ्यां यण् प्राप्तस्तस्यायं निषेधः॥ ६–अङ्गसंज्ञकः क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते, इति वृत्तौ वाक्यशेषः॥

**ऋतो ङिसर्वनामस्थानयोः ७ । ३ । ११० ॥**

ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च । इति प्राप्ते—

**ऋदुशनस्पुरुदंसोऽनेहसां च ७ । १ । ९४ ॥**

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६ । ४ । ११ ॥**

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टून् ।

**विभाषा तृतीयादिष्वचि ७ । १ । ९७ ॥**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ॥

**ऋत उत् ६ । १ । १११ ॥**

ऋतो ङसिङसोरति उदेकादेशः । रपरः ॥

**रात्सस्य ८ । २ । २४ ॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । रस्य विसर्गः । क्रोष्टुः २ । क्रोष्ट्रोः २ । (नुमचिरतृज्वद्भावेभ्यो[२] नुट्[३] पूर्वविप्रति-

---

१—क्रोष्टुशब्दात्सौ 'तृज्वत्क्रोष्टुः' इति सूत्रेण तृज्वद्भावेन क्रोष्टुशब्दस्य क्रोष्टृभावे जाते 'ऋतो ङिसर्वनामस्थानयोः' इति प्राप्तं गुणं बाधित्वा 'ऋदुशनस्—' इति सूत्रेण ऋकारस्यानङ्ङादेशेऽनुबन्धलोपे 'अप्तृन्तृच्—'इत्यादिनोपधादीर्घे नलोपे च क्रोष्टेति सिद्धम् । औजसादिषु तृज्वद्भावोत्तरम् 'ऋतो ङि—' इति गुणे कृते 'अप्तृन्—' इति दीर्घो बोध्यः । क्रोष्टुशब्दस्य शृगालोऽर्थः ॥ २—नुम्, अचि र ऋतः' तृज्वद्भावश्च; एतान् बाधित्वा नुडागमो भवति पूर्वविप्रतिषेधेनेत्यर्थः ॥ ३—विप्रतिषेधसूत्रे 'अपरम्' इतिच्छेदात् 'पूर्वं कार्यं स्यात्' इत्यर्थस्वीकारेणेत्यर्थः । यथोत्तरं मुनीनां प्रामाण्याद् वार्तिककाराद्यभिमतस्थलेष्वेवेष्यते पूर्वविप्रतिषेधः ॥

षेधेन )। क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥ हूहूः[1]। हूह्वौ। हूह्वः। हूहूम् इत्यादि॥ अतिचमूशब्दे तु नदीकार्यं विशेषः[2]। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्॥ खलपूः[3]॥

**ओः सुपि ६।४।८३॥**

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः[4]॥ स्वभूः[5]। स्वभुवौ। स्वभुवः॥ वर्षाभूः[6]॥

**वर्षाभ्वश्च[7] ६।४।८४॥**

अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ दृन्भूः[8]। (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ। एवं करभूः[9]॥ धाता। हे धातः। धातारौ। धातारः (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्[10]। तेनेह न। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः। ना। नरौ॥

---

१–हूहूर्गन्धर्वविशेषस्य संज्ञा॥ २–हूहूशब्दादित्यस्यादिः। अस्य सेनाविजयीत्यर्थः॥ ३–खलं भूमिं पुनातीति विग्रहः॥ ४–सुष्ठु लुनातीति सुलूः॥ ५–स्वेनैव भवतीति विग्रहः। ब्रह्मेत्यर्थः॥ ६–'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति कोषः॥ ७–'न भूसुधियोः' इत्यस्यापवादोऽयम्॥ ८–अस्य नृपो वज्रं सूर्यः सर्पश्चेत्यर्थः। ९–कराद् भवतीति विग्रहः॥ १०–'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेव' इति नियमार्थम्। एवं च पित्रादिशब्देषु न दीर्घः, यदाहुः—

'पिता माता ननान्दा च सव्येष्टृभ्रातृयातरः।
जामाता दुहिता देवा तृन्तृज्भ्यां रहिता नव॥' इति॥

**नृ च ६ । ४ । ६ ॥**

अस्य नामि वा दीर्घः । नृणाम् । नृणाम् ॥

**गोतो णित् ७ । १ । ९० ॥**

ओकाराद्विहितं[1] सर्वनामस्थानं णिद्वत् । गौः । गावौ । गावः ॥

**औतोऽम्शसोः ६ । १ । ९३ ॥**

ओतोऽम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः । इत्यादि ॥

**रायो हलि ७ । २ । ८५ ॥**

अस्याकारादेशो हलि विभक्तौ । राः[2] । रायौ । रायः । राभ्यामित्यादि । ग्लौः[3] । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्तपुंल्लिङ्गाः ।

## अथाजन्तस्त्रीलिङ्गाः

रमा[4] ।

**औङ आपः ७ । १ । १८ ॥**

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥

---

१—'ओतो णिदिति वाच्यम्' इति वार्तिकानुरोधेन फलितमर्थमाह—ओकारादिति ॥ २—रा धनम् ॥ ३—चन्द्रमाः ॥ ४—रमते विष्णुना साकमिति विग्रहे पचाद्यजन्तः 'अजाद्यतष्टाप् इति' टाप्प्रत्ययः, अत्र प्रकरणे प्राय आकारान्तशब्देषु टाप् । रमा लक्ष्मीः ॥

**सम्बुद्धौ च ७ । ३ । १०६ ॥**

आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति[1] सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ।

**आङि चापः ७ । ३ । १०५ ॥**

आङि ओसि चापि एकारः । रमया । रमाभ्याम् । रमाभिः ॥

**याडापः ७ । ३ । ११३ ॥**

आपो[2] ङितो याट् । वृद्धिः[3] । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमासु ॥ एवं दुर्गाम्बिकादयः[4] ॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च ७ । ३ । ११४ ॥**

आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः । सर्वासाम् । सर्वस्याम् । शेषं रमावत् ॥ एवं विश्वादय आबन्ताः ॥

**विभाषा दिक्समासे बहुव्रीहौ १ । १ । २८ ॥**

सर्वनामता[5] वा । उत्तरपूर्वस्यै[6], उत्तरपूर्वायै । तीयस्येति वा

---

१—'हल्ङ्याप्—' इति लोपं बाधित्वा परत्वात् 'सम्बुद्धौ च' इति सूत्रेणैत्वे ततः 'एङ्ह्रस्वात्—' इति सम्बुद्धेर्लोप इत्यर्थः ॥ २—आबन्तादङ्गात्परस्य ङिद्वचनस्य याट् स्यादित्यर्थः ॥ ३—'वृद्धिरेचि' इत्यनेनेत्यर्थः, एवं स्याडागमस्थलेऽपि । न तु 'आटश्च' इत्यनेनेति भ्रमितव्यम् इह आटोऽभावात् ॥ ४—आदिना श्रद्धामेधाविद्याशालामालाहेलादोलादयो ग्राह्याः ॥ ५—दिग्वाचके बहुव्रीहिसमासे सर्वनामता वा स्यादित्यर्थः ॥ ६—उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालमिति विग्रहः । अत्र 'दिङ्नामान्यन्तराले' इति बहुव्रीहिसमासः ॥

सर्वनामसंज्ञा । द्वितीयस्यै, द्वितीयायै ।। एवं तृतीया ॥ अम्बार्थेति ह्रस्वः । हे अम्ब[1] । हे अक्क । हे अल्ल ।। जरा[2] । जरसौ इत्यादि । पक्षे रमावत् ।। गोपा[3] विश्वपावत् ।। मती:[4] । मत्या ।।

**ङिति ह्रस्वश्च १ । ४ । ६ ॥**

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ चेवर्णोवर्णौ, स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै, मतये । मत्याः २ । मतेः २ ॥

**इदुद्भ्याम्[5] ७ । ३ । ११७ ॥**

इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम् । मत्याम्, मतौ । शेषं हरिवत् ।। एवं बुद्ध्यादयः[6] ।।

**त्रिचतुरोः स्त्रियां तिसृचतसृ ७ । २ । ९९ ॥**

स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ ।।

**अचि र ऋतः ७ । २ । १०० ॥**

---

१–'अम्बा, अक्का, अल्ला' इति सर्वेऽपि मातृवाचकाः ।। २–वृद्धावस्था ।। ३–गोपालिका ।। ४–मतिशब्दो बुद्धिपर्यायः ।। ५–ननु नदीसंज्ञापक्षे मत्यामित्यत्र 'ङेराम्नद्याम्–' इति सूत्रेणैव ङेरामि सिद्धे 'इदुद्भ्याम्' इति व्यर्थमिति चेन्न, गौर्यामित्यादौ 'ङेराम्–' इत्यस्य, सख्यौ, पत्यावित्यत्र च 'औत्' इत्यस्य चारितार्थ्येन परत्वात् प्रकृते 'औत्' इत्यस्य प्रवृत्त्यापत्तेः । सति त्वस्मिन् निरवकाशेन अनेन 'औत्' इत्यस्य बाध इत्याशयेनाह–इदुद्भ्यामिति ।। ६–आदिना मतिभूतिधृतिकान्तिगतिरुचिदीप्तिश्रुतिस्मृतिप्रभृतयो ग्राह्याः ।।

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घो[1]-त्त्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः आमि नुट्॥

**न तिसृचतसृ ६।४।४॥**

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु॥ द्वे[2]। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः॥ गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्य्यै। इत्यादि॥ एवं नद्यादयः[3]। लक्ष्मीः। शेषं गौरीवत्॥ एवं तरीतन्त्र्यादयः[4]॥ स्त्री। हे स्त्रि।

**स्त्रियाः ६।४।७९॥**

अस्येयङ् स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥

**वाम्शसोः ६।४।८०॥**

अमि शसि च स्त्रिया इयङ् वा स्यात्। स्त्रियम्। स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुट्। स्त्रीणाम्। स्त्रीषु॥ श्रीः[5]। श्रियौ। श्रियः॥

**नेयङुवङ्स्थानावस्त्री १।४।४॥**

---

१—'तिस्रः' इति प्रथमायाम् 'ऋतो ङि—' इति प्राप्तम् 'जसि च' इति वा प्राप्तं गुणम्, 'तिस्रः' इति द्वितीयायां 'प्रथमयोः पूर्वसवर्णः' इति प्राप्तं दीर्घम्, प्रियतिस्र इत्यादौ 'ऋत उत्' इति प्राप्तमुत्त्वं च बाधत इत्यर्थः॥ २—'द्वि औ' इत्यत्र त्यदाद्यत्वे टापि, 'औङ आपः' इति शीभावे गुणे च सिद्धम्॥ ३—आदिना सरस्वतीचेटीब्राह्मणीकुमारी-नारीसारङ्गीप्रभृतयो ग्राह्याः॥ ४—'नौकायां तरणिस्तरीः' इत्यमरः। तन्त्रीः, वीणा। आदिना 'अवीधीह्री' शब्दा ज्ञेयाः॥ ५—लक्ष्मीः॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै, श्रिये। श्रियाः, श्रियः॥

**वामि १।४।५॥**

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री। श्रीणाम्, श्रियाम्। श्रियि, श्रियाम्॥ धेनुर्मतिवत्॥

**स्त्रियां च ७।१।९६॥**

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥

**ऋन्नेभ्यो ङीप् ४।१।५॥**

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री गौरीवत्[1]॥ भ्रूः[2] श्रीवत्॥ स्वयम्भूः[3] पुंवत्॥

**न षट्स्वस्रादिभ्यः ४।१।१०॥**

ङीप्टापौ न स्तः॥

स्वसा[4] तिस्रश्चतस्रश्च ननान्दा[5] दुहिता[6] तथा।
याता[7] मातेति सप्तैते स्वस्रादय उदाहृताः॥

स्वसा। स्वसारौ॥ माता पितृवत्। शसि मातॄः॥ [8]द्यौर्गोवत्॥ राः[9] पुंवत्॥ [10]नौर्ग्लौवत्॥

इत्यजन्तस्त्रीलिङ्गाः

---

१—वधूजम्बूकरभोरूप्रभृतयोऽपि शब्दाः सुभिन्नविभक्तौ गौरीवज्ज्ञेयाः॥ २—नयनोर्ध्वरोमराजिः॥ ३—मूलप्रकृतिः॥ ४—भगिनी॥ ५—पत्युर्भगिनी॥ ६—पुत्री॥ ७—पतिभ्रातृपत्नी॥ ८—आकाशः॥ ९—लक्ष्मीः, धनं वा॥ १०—नौका॥

# अथाजन्तनपुंसकलिङ्गाः

**अतोऽम् ७ । १ । २४ ॥**

अतोऽङ्गात् क्लीबात्स्वमोरम् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः[१] । हे ज्ञान ॥

**नपुंसकाच्च ७ । १ । १९ ॥**

क्लीबादौङः शी स्यात् । भसंज्ञायाम्[२] ॥

**यस्येति च ६ । ४ । १४८ ॥**

ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यल्लोपे प्राप्ते ( औङः[३] श्यां प्रतिषेधो वाच्यः ) । ज्ञाने ॥

**जश्शसोः शिः ७ । १ । २० ॥**

क्लीबादनयोः शिः स्यात् ॥

**शि सर्वनामस्थानम् १ । १ । ४२ ॥**

शि इत्येतदुक्तसंज्ञं स्यात् ॥

**नपुंसकस्य झलचः ७ । १ । ७२ ॥**

झलन्तस्याजन्तस्य च क्लीबस्य नुम स्यात् सर्वनामस्थाने ।

**मिदचोऽन्त्यात्परः १ । १ । ४७ ॥**

---

१–अत्र परत्वात् सोरमादेशपूर्वरूपयोः कृतयोः 'एङ्ह्रस्वात्—' इत्यनेन मकारस्य लोप इत्यर्थः ॥ २–नपुंसकत्वेन औङः सर्वनामस्थानत्वाभावात् 'यचि भम्' इति भसंज्ञायामित्यर्थः ॥ ३–औङ्स्थानिकश्यां विभक्तौ 'यस्येति च' इति लोपो न प्रवर्तत इत्यर्थः ॥

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि[1] । पुनस्तद्वत् । शेषं पुंवत् ॥ एवं धन-वनफलादयः[2] ॥

**अद्ड्डतरादिभ्यः पञ्चभ्यः ७ । १ । २५ ॥**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥

**टेः ६ । ४ । १४३ ॥**

डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । कतरत् । शेषं पुंवत् ॥ एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव[3] । (एकतरात्प्रतिषेधो[4] वक्तव्यः) एकतरम् ॥

**ह्रस्वो नपुंसके प्रातिपदिकस्य १ । २ । ४७ ॥**

अजन्तस्येत्येव[5] । श्रीपं ज्ञानवत् ॥

**स्वमोर्नपुंसकात् ७ । १ । २३ ॥**

लुक्[6] स्यात् । वारि[7] ॥

---

१—ज्ञानशब्दाज्जसि 'जश्शसोः शिः' इत्यनेन जसः श्यादेशे 'शि सर्वनामस्थानम्' इत्यनेन सर्वनामस्थानसंज्ञायाम् 'मिदचोऽन्त्यात्परः' इति शास्त्रबलेन 'नपुंसकस्य झलचः' इति शास्त्रेण ज्ञानशब्दान्त्यस्याचः परत्र नुमागमेऽनुबन्धलोपे 'सर्वनामस्थाने—' इति दीर्घे ज्ञानानीति सिद्धम् ॥ २—आदिना मूलपत्रपुष्पकुलकुटुम्बादयो ग्राह्याः ॥ ३—अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य डतरादिमध्ये पाठाभावाद् अद्डादेशो न ॥ ४—एकतरशब्दात्परयोः स्वमोरद्डादेशो नेत्यर्थः ॥ ५—नपुंसके विद्यमानस्याजन्तस्य प्रातिपदिकस्य ह्रस्व इत्यर्थः ॥ ६—क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् ॥ ७—जलम् ॥

**इकोऽचि विभक्तौ ७ । १ । ७३ ।**

इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि । न लुमतेत्यस्या[1]नित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे, हे वारि, । घेर्ङितीति गुणे प्राप्ते । (वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो[2] नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७ । १ । ७५ ॥**

एषामनङ् स्याट्टादावचि ॥

**अल्लोपोऽनः ६ । ४ । १३४ ॥**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः । दध्नः । दध्नोः । दध्नोः ।

**विभाषा[3] ङिश्योः ६ । ४ । १३६ ॥**

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य

---

१—'इकोऽचि विभक्तौ' इत्यत्र अचिग्रहणात् 'न लुमता—' इति निषेधोऽनित्यस्तथा हि—अज्ग्रहणं हलादिव्यावृत्त्यर्थम् । तत्र नुमि सत्यपि 'स्वादिषु—' इति पदत्वे नलोपे वारिभ्यामित्यादौ रूपे विशेषाभावः । सम्बोधने नुमि 'न ङिसम्बुद्ध्योः' इति निषेधेन नकारलोपाभावे तत्र नकारश्रवणापत्तिरिति तु न वाच्यम्, सम्बुद्धेर्लुका लुप्तत्वेन तत्र प्रत्ययलक्षणाप्रवृत्तेः । एवं च हलादौ दोषाभावेन 'अचि' ग्रहणं व्यर्थं सत् 'न लुमता—' इति निषेधस्यानित्यत्वं कल्पयति । तथा सति प्रत्ययलक्षणेन सम्बोधने नुमि नकारश्रवणं स्यादतस्तद्वारणाय 'अचि' इति स्वांशे चरितार्थम् । फलं च ज्ञापनस्य—'हे त्रपो, हे त्रपु' इति भाष्यप्रयोगसिद्धिरित्यादि ॥ २—अतिसखीनि, वारिणि, प्रियक्रोष्टूनि, वारिणे इत्यादीनि वृद्ध्यादेरुदाहरणानि ॥ ३—'अल्लोपोऽनः' इति सूत्रविहितस्यैव कार्यस्य विकल्प इति भावः ॥

लोपो वा स्यात् ङिश्योः परयोः। दध्नि, दधनि। शेषं वारिवत्॥

एवमस्थिसक्थ्यक्षि[1]॥ सुधि। सुधिनी। सुधीनि। हे सुधे, हे सुधि॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७४॥**

प्रवृत्तिनिमित्तैक्ये[2] भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि। सुधिया, सुधिनेत्यादि॥ मधु। मधुनी। मधूनि। हे मधो, हे मधु॥ सुलु। सुलुनी। सुलूनि। सुलुनेत्यादि॥ धातृ। धातृणी। धातॄणि। हे धातः, हे धातृ। धातॄणाम्॥ एवं ज्ञात्रादयः॥

**एच इग्घ्रस्वादेशे १।१।४८॥**

आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु[3]। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि॥ प्ररि[4]। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्रराभ्याम्। प्ररीणाम्॥ सुनु[5]। सुनुनी। सुनूनि। सुनुनेत्यादि॥

इत्यजन्तनपुंसकलिङ्गाः

---

१—सक्थिशब्द ऊरौ शकटावयवे च। अक्षि नेत्रम्॥ २—सुधीशब्दस्य प्रवृत्तिनिमित्तं शोभनध्यानकर्तृत्वम्, तच्च पुंस्त्रीक्लीबेषु समानम्, तस्मिन्सति भाषितपुंस्कसुधीशब्दस्योक्तस्थले वा पुंवद्भाव इति। एवं सुलुशब्दे शोभनलवनकर्तृत्वम्, धातृशब्दे धारणपोषणकर्तृत्वं त्रिषु तुल्यम्। प्रद्युप्रभृतिषु तु नानेन पुंवद्भावविकल्पः, इगन्तस्य प्रद्युशब्दस्य भाषितपुंस्कत्वाभावात्, भाषितपुंस्कस्य प्रद्योशब्दस्येगन्तत्वाभावात्॥ पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने। अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात्॥ ३—प्रद्योशब्दस्य ह्रस्वे प्रद्यु इति, प्रकृष्टा द्यौर्यस्मिस्तदिति विग्रहः॥ ४—प्ररैशब्दस्य प्ररीति, प्रकृष्टो राः—धनं यस्मिस्तदिति विग्रहः॥ ५—सुनौ शब्दस्य सुनु इति, शोभना नौर्यस्मिन्कुले तदिति विग्रहः॥

# अथ हलन्तपुँल्लिङ्गाः

**हो ढः ८ । २ । ३१ ॥**

हस्य ढः स्याज्झलि पदान्ते च । लिट्[1], लिड् । लिहौ । लिहः । लिड्भ्याम्[2] । लिट्त्सु[3], लिट्सु ॥

**दादेर्धातोर्घः ८ । २ । ३२ ॥**

झलि[4] पदान्ते चोपदेशे दादेर्धातोर्हस्य घः ॥

**एकाचो बशो भष् झषन्तस्य स्ध्वोः ८ । २ । ३७ ॥**

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च[5] । धुक्[6], धुग् । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ॥

**वा द्रुहमुहष्णुहष्णिहाम् ८ । २ । ३३ ॥**

एषां हस्य वा घो झलि पदान्ते च । ध्रुक्[7], ध्रुग्; ध्रुट्, ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम्, ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्त्सु, ध्रुट्सु ॥ एवं मुक्[8], मुग् इत्यादि ॥

**धात्वादेः[9] षः सः ६ । १ । ६४ ॥**

स्नुक्[10], स्नुग्; स्नुट्, स्नुड् । एवं स्निक्[11], स्निग्; स्निट्, स्निड् ॥ विश्ववाट्[12], विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ ॥

---

१–सपादसप्ताध्यायीस्थकार्यत्वात्प्रथमं हल्ङ्यादिलोपे कृते ढत्वम् ॥ २–'स्वादिषु–' इति पूर्वभागस्य पदत्वाड्ढत्वम् ॥ ३–अत्र 'डः सि धुट्' इति धुड्विकल्पः ॥ ४–'हो ढः' इत्यतः 'हः' इति वर्तते । दादिपदं चौपदेशिकदादिपरम्, इत्याह झलीति ॥ ५–'हो ढः' इत्यादिवदत्र झलीति पदं न सम्बध्यते स्ध्वोर्ग्रहणात् ॥ ६–दोग्धा ॥ ७–द्रोही ॥ ८–मुग्धः ॥ ९–धात्वादेः षकारस्य सकारः स्यात् ॥ १०–वमनकर्ता ॥ ११–स्नेही ॥ १२–विश्ववाहकः ॥

**इग्यणः संप्रसारणम् १ । १ । ४५ ॥**

यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥

**वाह ऊठ् ६ । ४ । १३२ ॥**

भस्य वाहः संप्रसारणमूठ् ॥

**संप्रसारणाच्च ६ । १ । १०८ ॥**

संप्रसारणादचि पूर्वरूपमेकादेशः । एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः[1], इत्यादि ॥

**चतुरनडुहोराम्रुदात्तः ७ । १ । ९८ ॥**

अनयोराम् स्यात्सर्वनामस्थाने परे ॥

**सावनडुहः ७ । १ । ८२ ॥**

अस्य नुम् स्यात् सौ परे । अनड्वान्[2] ॥

**अम्[3] सम्बुद्धौ ७ । १ । ९९ ॥**

हे अनड्वन्[4] । हे अनड्वाहौ । हे अनड्वाहः । अनडुहः । अनडुहा ।

**वसुस्रंसुध्वंस्वनडुहां दः ८ । २ । ७२ ॥**

---

१—एवं प्रष्ठवाह् भारवाह् इत्यादयः शब्दा ज्ञेयाः ॥ २—अत्र नलोपो न संयोगान्तलोपस्यासिद्धत्वात् । अनड्वानित्यस्य शकटवाही वृषभ इत्यर्थः ॥ ३—चतुरनडुहोरम् स्यात् सम्बुद्धौ परे ॥ ४—अत्र 'एङः पदान्तात्—' इति पूर्वरूपं तु न, हैहप्रयोगे हैहेयोः' इति प्लुते प्रकृतिभावात्, एवं सर्वत्राजादिशब्देषु सम्बुद्धौ सन्धिकार्याभावः ॥

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि ॥ सान्तेति किम् ? विद्वान्[1] । पदान्ते किम् ? स्रस्तम्[2] । ध्वस्तम् ॥

**सहेः साडः सः ८ । ३ । ५६ ॥**

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः[3] । तुराषाट्[4], तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ॥

**दिव औत्[5] ७ । १ । ८४ ॥**

दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः[6] । सुदिवौ ॥

**दिव उत् ६ । १ । १३१ ॥**

दिवोऽन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्यामित्यादि ॥ चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ॥

**षट्चतुर्भ्यश्च ७ । १ । ५५ ॥**

एभ्य आमो नुडागमः ॥

**रषाभ्यां[7] नो णः समानपदे ८ । ४ । १ ॥**

**अचो रहाभ्यां द्वे ८ । ४ । ४६ ॥**

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्ण्णाम्, चतुर्णाम् ॥

---

१—अत्र वस्वन्तत्वेऽपि सान्तत्वाभावान्न दत्वम् ॥ २—अ 'सुप्तिङन्तम्—' इति समुदायस्य पदान्तत्वम् । स्रस्तम्—भ्रष्टम् । ध्वस्त नष्टम् ॥ ३—'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् ॥ ४—तुराषाड् इन्द्र ५—तकार उच्चारणार्थः, उच्चारणार्थानामित्संज्ञालोपाभ्यां वि निवृत्तिः । एवमग्रे 'दिव उत्' इत्यत्रापि ॥ ६—शोभना द्यौर्यस्मिन्दि स सुद्यौः ॥ ७—रेफषकाराभ्यां परस्य नस्य णः स्यादेकपदे ॥

**रोः सुपि ८ । ३ । १६ ॥**

रोरेव[1] विसर्गः सुपि । । षत्वम् । षस्य द्वित्वे प्राप्ते ॥

**शरोऽचि ८ । ४ । ४९ ॥**

अचि परे शरो न द्वे स्तः । चतुर्षु ॥

**मो नो धातोः ८ । २ । ६४ ॥**

धातोर्मस्य नः पदान्ते । प्रशान्[2] ॥

**किमः कः ७ । २ । १०३ ॥**

किमः कः स्याद्विभक्तौ । कः । कौ । के, इत्यादि । शेषं सर्ववत् ॥

**इदमो मः ७ । २ । १०८ ॥**

सौ[3] । त्यदाद्यत्वापवादः ॥

**इदोऽय् पुंसि ७ । २ । १११ ॥**

इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे ॥

**अतो गुणे ६ । १ । ९७ ॥**

अपदान्तादतो गुणे पररूपमेकादेशः ॥

**दश्च ७ । २ । १०९ ॥**

---

१–सप्तमीबहुवचने सुपि रोरेव रेफस्य विसर्गो नान्यरेफस्य इति स्पष्टः सूत्रार्थः ॥ २–नत्वस्यासिद्धत्वान्नलोपो न । सप्तमीबहुवचने 'प्रशान्सु' इत्यत्र 'नश्च' इति वैकल्पिके धुडागमे सति 'प्रशान्त्सु' 'प्रशान्सु' इति रूपद्वयं सम्भाव्यते ॥ ३–इदमो मस्य मः स्यात्सौ । मकारस्य मकारविधानम् 'त्यदादीनामः' इत्यत्वबाधनार्थम् ॥

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे ।। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ।।

**अनाप्यकः ७ । २ । ११२ ॥**

अककारस्येदम इदोऽनापि विभक्तौ । आबिति[1] प्रत्याहारः । अनेन ।।

**हलि लोपः ७ । २ । ११३ ॥**

अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे[2] ।।

**आद्यन्तवदेकस्मिन्[3] १ । १ । २१ ॥**

एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ।।

**नेदमदसोरकोः ७ । १ । ११ ॥**

अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै[4] । एभ्यः । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ।।

**द्वितीयाटौस्स्वेनः २ । ४ । ३४ ॥**

---

१—'टा' इत्यस्याकारादारभ्य सुपः पकारपर्यन्तम् 'आप्' इति प्रत्याहार इति व्याख्यानादिति भावः ।। २—अनर्थकेऽलोऽन्त्यसूत्रं न प्रवर्तते, अभ्यासविकारे त्वनर्थकेऽपि तत् प्रवर्तते यथा बिभर्ति ।। अतः 'इदम्' शब्दे 'इद्' भागस्यानर्थकत्वात् तत्रालोऽन्त्यस्येतिसूत्रस्याप्रवृत्त्या कृत्स्नस्यैवेद्भागस्य लोपः । ३—'सुपि च' इत्यनेनाकारान्तस्य दीर्घो विधीयते, हलि लोपे जाते 'अ भ्याम्' इत्यवस्थायामिदंशब्दऽकारान्तो नास्ति, अतोऽनेनाकारान्तवुद्धौ दीर्घः ।। ४—'इदम् ए' इत्यत्र त्यदाद्यत्वे पररूपे स्मैभावे कृते हलि लोपः । एवम् अस्मात्, अस्य, एषाम्, अस्मिन् इत्येतेषु विभक्तिकार्ये कृते ततो हलि लोपः।।

इदमेतदोरन्वादेशे। किञ्चित्कार्यं[1] विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा—अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति॥ एनम्। एनौ। एनान्। एनेन। एनयोः। एनयोः॥ राजा॥

**न ङिसम्बुद्ध्योः ८।२।८॥**

नस्य[2] लोपो न ङौ सम्बुद्धौ च। हे राजन्। (ङावुत्तरपदे[3] प्रतिषेधो वक्तव्यः) ब्रह्मनिष्ठः[4]। राजानौ। राजानः। राज्ञः॥

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र—राजाश्व इत्यादौ। इत्यसिद्धत्वादात्वमेत्वमैस्त्वं[5] च न। राजभ्याम्। राजभिः। राज्ञि, राजनि। राजसु॥ यज्वा[6]। यज्वानौ। यज्वानः॥

**न संयोगाद्वमन्तात् ६।४।१३७॥**

वमन्तसंयोगादनोऽकारस्य लोपो न। यज्वनः। यज्वना। यज्वभ्याम्॥ ब्रह्मणः। ब्रह्मणा॥

---

१—किञ्चित्कार्यं व्याकरणाध्ययनादिरूपं विधातुमपूर्वं बोधयितुमुपात्तस्योच्चरितस्येदमादिशब्दस्य पुनः कार्यान्तरं छन्दोऽध्ययनादिरूपं विधातुमपूर्वं बोधयितुमुपादानमिदमादिशब्दोच्चारणम् अन्वादेशः॥ २—'नलोपः प्रातिपदिकान्तस्य' इति सूत्रमेवानुवर्तते॥ ३—उत्तरपदपरके ङौ नकारलोपस्याप्रतिषेधः, विधिरेवेत्यर्थः॥ ४—एवं 'चर्मतिलः, कर्मनिष्ठ' इत्यादि॥ ५—'राजभ्याम्' इत्यत्रात्वम्, 'राजभिः' इत्यत्रैस्त्वम्' 'राजभ्यः' इत्यत्रैत्वं च नेत्यर्थः॥ ६—सविधिकृतयज्ञो यजमानः॥

**इन्हन्पूषार्यम्णां शौ ६ । ४ । १२ ॥**

एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते—

**सौ च ६ । ४ । १३ ॥**

इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ[1] सौ । वृत्रहा[2] । हे वृत्रहन् ॥

**एकाजुत्तरपदे[3] णः ८ । ४ । १२ ॥**

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्रहणौ ॥

**हो हन्तेर्ञ्णिन्नेषु ७ । ३ । ५४ ॥**

ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् । वृत्रघ्नः, इत्यादि । एवं शार्ङ्गिन्[4], यशस्विन्, अर्यमन्, पूषन् ॥

**मघवा बहुलम् ६ । ४ । १२८ ॥**

मघवन्शब्दस्य वा तृ इत्यन्तादेशः । ऋ इत् ॥

**उगिदचां[5] सर्वनामस्थानेऽधातोः ७ । १ । ७० ॥**

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राजवत् ॥

---

१—'शावेव' इति नियमेन सौ दीर्घेऽप्राप्ते विध्यर्थमिदमित्याह—दीर्घोऽसम्बुद्धावित्यादि ॥ २—वृत्रहा इन्द्रः ॥ ३—एकाजुत्तरपदं ह इति, तस्मिन् समासे वृत्रहन्निति समुदायरूपं पूर्वपदं वृत्रेति, तत्र निमित्तं रेफः, तस्मात्परस्य प्रातिपदिकान्तनकारस्य—हनो नकारस्य णकारः ॥ ४—शार्ङ्गी विष्णुः । यशस्वी कीर्तिमान् पुरुषः । अर्यमा पूषा च सूर्य एव । मघवा इन्द्रः । ५—उक्प्रत्याहार इद् येषान्ते उगितः ते च अचश्च उगिदचस्तेषाम् ॥

**श्वयुवमघोनामतद्धिते ६ । ४ । १३३ ॥**

अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन्[1], युवन् ॥

**न संप्रसारणे संप्रसारणम् ६ । १ । ३७ ॥**

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत[2] एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्याम् इत्यादि । अर्वा[3] । हे अर्वन् ॥

**अर्वणस्त्रसावनञः ६ । ४ । १२७ ॥**

नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥

**पथिमथ्यृभुक्षामात्[4] ७ । १ । ८५ ॥**

एषामाकारोऽन्तादेशः स्यात् सौ परे ॥

**इतोऽत्सर्वनामस्थाने ७ । १ । ८६ ॥**

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ॥

**थो न्थः ७ । १ । ८७ ॥**

पथिमथोस्थस्य[5] न्थादेशः सर्वनामस्थाने ॥ पन्थाः[6] । पन्थानौ । पन्थानः ॥

---

१–श्वा कुक्कुरः । युवा तरुणः ॥ २–ननु युवन् 'अस्' इत्यत्र पूर्वं यकारस्य सम्प्रसारणे ततो वकारस्योभयोर्वा युगपत्सम्प्रसारणे निषेधो व्यर्थोऽत आह–अत एवेति ॥ ३–अर्वा अश्वः ॥ ४–आदित्यत्र तकार उच्चारणार्थः ॥ ५–अनुवृत्तानां पथि-मथि ऋभुक्षिन्-शब्दानाम् ऋभुक्षिन् शब्दे थकारासम्भवादाह–पथिमथोरिति ॥ ६–पन्था मार्गः ॥

**भस्य टेर्लोपः ७ । १ । ८८ ॥**

भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् । एवं मथिन्[1], ऋभुक्षिन् ॥

**ष्णान्ता षट् १ । १ । २४ ॥**

षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । नुट् ॥

**नोपधायाः ६ । ४ । ७ ॥**

नान्तस्योपधाया दीर्घो नामि पञ्चानाम्[2] । पञ्चसु ॥

**अष्टन आ विभक्तौ ७ । २ । ८४ ॥**

हलादौ[3] वा स्यात् ॥

**अष्टाभ्य औश् ७ । १ । २१ ॥**

कृताकारादष्टनो[4] जश्शसोरौश् । अष्टभ्य[5] इति वक्तव्ये कृतात्व-

---

१—मन्था मन्थनदण्डः । ऋभुक्षा इन्द्रो नेता च ॥ २—पञ्चन् आमित्यत्र 'षड्चतुर्भ्यश्च' इति नुटि 'नोपधायाः' इति दीर्घे 'स्वादिषु—' इति पदसंज्ञायां नलोपे पञ्चानामिति सिद्धम् ॥ ३—अष्टन्शब्दस्य आत्वं वा स्याद् हलादौ विभक्तौ ॥ ४—यस्मिन्नष्टन्शब्दे आत्वं कृतं तस्मात् कृताकारादर्थादष्टाशब्दात्परयोर्जश्शसोरौश् इत्यर्थः ॥ ५—ननु जश्शसोर्जकारशकारयोरित्संज्ञालोपयोर्हलादित्वाभावात् 'अष्टाभ्यः—' इत्यौश् न स्यादित्याशङ्क्याह—अष्टभ्य इति । अष्टभ्य इति कथनेऽष्टन्-शब्दात्परयोरनयोरौश् इत्यर्थः स्यात्, अष्टाभ्य इति कथने अष्टा इत्यस्यानुकरणशब्दत्वाद् अष्टाशब्दात्परयोरनयोरौश् इत्यर्थः स्यात्, एवं च तथा सूत्रकरणादनयोः परत आत्वमनुमीयत इत्यर्थः ॥

निर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ[1] । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट, पञ्चवत् ।

[2]**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९॥**

एभ्यः क्विन्, अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः केवलयोः, क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ ॥

**कृदतिङ् ३ । १ । ९३ ॥**

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥

**वेरपृक्तस्य ६ । १ । ६७ ॥**

अपृक्तस्य वस्य लोपः ॥

**क्विन्प्रत्ययस्य कुः ८ । २ । ६२ ॥**

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते । अस्या-

---

१–अष्टन्शब्दात्परयोर्जकारशकारयोरित्संज्ञालोपयोस्तयोरजादित्वाद्यद्यपि 'अष्टन आ विभक्तौ' इत्यात्वं न प्राप्नोति, तथापि 'अष्टाभ्यः' इति कृताकारानुकरणेन ज्ञापनादात्वे 'अष्टाभ्य औश्' इति शित्त्वात्सर्वस्य स्थाने औशादेशे शकारस्येत्संज्ञालोपयोर्वृद्धौ–'अष्टौ' पदं साधु जातम् ॥

२–उष्णिगन्तं प्रथमान्तपदम्, अञ्चुयुजिक्रुञ्चामिति पञ्चम्यर्थे षष्ठी, तथा च ऋत्विगादय उष्णिगन्ताः शब्दाः क्विन्नन्ता निपात्यन्ते । अञ्चुप्रभृतिभ्यः क्विन् इति सूत्रार्थः ॥

सिद्धत्वाच्चोः कुरिति कुत्वम्। ऋत्विक्[1], ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम्॥

**युजेरसमासे ७। १। ७१॥**

युजेः सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन[2] नस्य ङः। युङ्[3]। अनुस्वारपरसवर्णौ[4]। युञ्जौ। युञ्जः। युग्भ्याम्॥

**चोः कुः ८। २। ३०॥**

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। सुयुक्,[5] सुयुग्, सुयुजौ। सुयुग्भ्याम्॥ खन्[6]। खञ्जौ। खन्भ्याम्॥

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६॥**

झलि[7] पदान्ते च। जश्त्वचर्त्वे। राट्, राड्। राजौ। राजः।

---

१-ऋतुशब्दे उपपदे यज्धातोः 'ऋत्विग्दधृक्—' इत्यादीनां क्विनि ककारस्य 'लशक्वतद्धिते' इति सूत्रेण नकारस्य 'हलन्त्यम्' इत्यनेनेत्संज्ञायां तयोर्लोपे, इकारस्योच्चारणार्थकत्वे—यजेः सम्प्रसारणे यणि 'कृदतिङ्' इति प्रत्ययस्य कृत्संज्ञायाम् 'वेरपृक्तस्य' इति वस्य लोपे कृदन्तत्वात्प्रातिपदिकत्वे सौ तस्य 'हल्ङ्याब्भ्यः—' इति लोपे 'क्विन्प्रत्ययस्य—' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वविकल्पे 'ऋत्विक्' 'ऋत्विग्' इति रूपद्वयं सिद्धम्। अस्य याजक इत्यर्थः॥ २-'क्विन्प्रत्ययस्य—' इति सूत्रेणेत्यर्थः। 'चोः कुः' इत्यस्य तु न प्राप्तिश्चवर्गाभावात्॥ ३-योगी॥ ४-अत्र श्चुत्वेन नकारस्य ञकारस्तु न, अनुस्वारे कर्तव्ये श्चुत्वस्यासिद्धत्वात्॥ ५-सुयोगी॥ ६-खञ्जः॥ ७-व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। राजार्थकः 'राट्' शब्दः। विशेषेण भ्राजत इति विभ्राट्। देवेड् देवयाजकः। विश्वसृड् ब्रह्मा॥

राड्भ्याम् ।। एवं विभ्राट्, देवेट्, विश्वसृट् ।। ( परौ व्रजेः षः पदान्ते ) । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि । परिव्राट्[1] । परिव्राजौ ।।

**विश्वस्य वसुराटोः ६ । ३ । १२८ ।।**

विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ[2] राट्शब्दे च परे । विश्वाराट्[3], विश्वाराड् । विश्वाराजौ । विश्वाराड्भ्याम् ।।

**स्कोः संयोगाद्योरन्ते च ८ । २ । २९ ।।**

पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः । भृट्[4] । सस्य श्चुत्वेन शः । झलां जश् झशि इति शस्य जः । भृज्जौ । भृड्भ्याम् ।। त्यदाद्यत्वं पररूपत्वं च ।।

**तदोः सः सावनन्त्ययोः ७ । २ । १०६ ।।**

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । त्यौ । त्ये ।। सः । तौ । ते ।। यः । यौ । ये ।। एषः । एतौ । एते ।।

**ङेप्रथमयोरम् ७ । १ । २८ ।।**

युष्मदस्मद्भ्यां परस्य 'ङे' इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ।।

---

१—परित्यज्य सर्वं व्रजतीति परिव्राट् संन्यासी ।। २—वसुशब्दे परे विश्वशब्दस्य दीर्घे 'विश्वावसुः' इत्युदाहरणम् । गन्धर्वविशेषस्य संज्ञा । तद्रूपं च विष्णुवज्ज्ञेयम् ।। ३—विश्वेश्वरः ।। ४—'भ्रस्ज् सु' इति स्थिते 'हल्ङ्याब्भ्यः—' इत्यादिना सोर्लोपे 'स्कोः—' इत्यादिना सकारलोपे 'व्रश्चभ्रस्ज—' इत्यादिना षकारे तस्य 'वाऽवसाने' इति वैकल्पिकचर्त्वे पक्षे 'झलां जशोऽन्ते' इति जश्त्वे च 'भृट्, भृड्' इत्युभयं रूपं सिद्धम् । अस्य भर्जनकर्त्तेत्यर्थः ।।

**त्वाहौ सौ ७ । २ । ९४ ॥**

अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः ॥

**शेषे लोपः ७ । २ । ९० ॥**

एतयोष्टिलोपः । त्वम्[१] । अहम् ॥

**युवावौ द्विवचने ७ । २ । ९२ ॥**

[२]द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥

**प्रथमायाश्च[३] द्विवचने भाषायाम् ७ । २ । ८८ ॥**

औङ्येतयोरात्वं लोके । युवाम् । आवाम् ॥

**यूयवयौ जसि ७ । २ । ९३ ॥**

अनयोर्मपर्यन्तस्य[४] । यूयम् । वयम् ॥

**त्वमावेकवचने ७ । २ । ९७ ॥**

[५]एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥

**द्वितीयायाञ्च ७ । २ । ८७ ॥**

[६]अनयोरात्स्यात् । त्वाम् । माम् ॥

**शसो न[७] ७ । १ । २९ ॥**

---

१—युष्मदस्मच्छब्दयोस्त्रिषु लिङ्गेषु समानं रूपम् । त्वं पुमान्, अहं पुमान् । त्वं स्त्री, अहं स्त्री । त्वं दैवतम्, अहं दैवतम् ॥ २—द्वयोरुक्तावनयोः—द्वित्वार्थवाचिनोर्युष्मदस्मदोरित्यर्थः ॥ ३—प्रथमाया द्विवचने औविभक्तौ परतो युष्मदस्मदोरन्त्यस्यात्वं स्याल्लोके ॥ ४—अनयोर्मपर्यन्तस्य यूयवयौ स्तो जसि परे ॥ ५—एकार्थवाचिनोर्युष्मदस्मदोरित्यर्थः ॥ ६—युष्मदस्मदोरात्स्याद् द्वितीयायां विभक्तौ परतः ॥ ७—नेत्यविभक्तिको निर्देशः ॥

आभ्यां शसो नः स्यात् । अमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान्[1] । अस्मान् ॥

**योऽचि ७ । २ । ८९ ॥**

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥

**युष्मदस्मदोरनादेशे ७ । २ । ८६ ॥**

अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥

**तुभ्यमह्यौ ङयि ७ । २ । ९५ ॥**

अनयोर्मपर्यन्तस्य[2] । टिलोपः । तुभ्यम् । मह्यम् ॥

**भ्यसोऽभ्यम् ७ । १ । ३० ॥**

आभ्यां[3] परस्य । युष्मभ्यम् । अस्मभ्यम् ॥

**एकवचनस्य च ७ । १ । ३२ ॥**

आभ्यां[4] ङसेरत् । त्वत् । मत् ॥

**पञ्चम्या अत् ७ । १ । ३१ ॥**

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ।

**तवममौ ङसि ७ । २ । ९६ ॥**

---

१—युष्मच्छब्दाच्छसि शस्येत्संज्ञालोपयोः, 'द्वितीयायाञ्च' इत्यात्वे दीर्घे च 'युष्मा अस्' इति जाते 'आदेः परस्य' इत्येतत्सहकारेण 'शसो न' इति शसोऽकारस्य नकारे सकारस्य संयोगान्तलोपे युष्मानिति सिद्धम् ॥ २—अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङेविभक्तौ परतः ॥ ३—युष्मदस्मद्भ्यां परस्य भ्यसोऽभ्यमादेशः स्यात् । अत्र मकारस्य नेत्त्वम् 'न विभक्तौ—' इति निषेधात् ॥ ४—युष्मदस्मद्भ्यां परस्य पञ्चम्या एकवचनस्य अदादेशः स्यात् । अत्रापि पूर्ववत्तकारस्य नेत्त्वम् । एवमेवाकमित्यादौ मकारस्य ॥

अनयोर्मपर्यन्तस्य तवममौ स्तौ ङसि ॥

**युष्मदस्मद्भ्यां ङसोऽश् ७ । १ । २७ ॥**

तव । मम । युवयोः । आवयोः ॥

**साम[1] आकम् ७ । १ । ३३ ॥**

आभ्यां परस्य साम आकं स्यात् । युष्माकम्[2] । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ८ । १ । २० ॥**

पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः ॥

**बहुवचनस्य वस्नसौ ८ । १ । २१ ॥**

उक्तविधयोरनयोः[3] षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥

**तेमयावेकवचनस्य ८ । १ । २२ ॥**

उक्तविधयोरनयोष्षठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥

**त्वामौ द्वितीयायाः ८ । १ । २३ ॥**

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ॥

---

१–भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः ॥ २–'युष्मत् आम्' इत्यत्र आमः सामबुद्ध्या 'साम आकम्' इत्याकमादेशे 'शेषे लोपः' इति टिलोपे निर्दिष्टं रूपं सिद्धम् ॥ ३–उक्तविधयोः—पदात्परयोरपादादौ स्थितयोरित्यर्थः ॥

[1]श्रीशस्त्वाऽवतु माऽपीह दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः॥

( एकवाक्ये युष्मदस्मदादेशा वक्तव्याः )। एकतिङ् वाक्यम्। ओदनं पच तव भविष्यति। ( एते वान्नावादयोऽनन्वादेशे वा वक्तव्याः )। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा। तस्मै ते नम इत्येव॥ सुपात्[2], सुपाद्। सुपादौ॥

**पादः पत् ६। ४। १३०॥**

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः॥

---

१–श्रीशो विष्णुः त्वा–त्वाम् अवतु रक्षतु, इह लोके मा माम् अपि अवतु। स श्रीशः ते–तुभ्यम्, मे मह्यमपि शर्म सुखं दत्ताद् ददातु। स हरिः ते–तव, मे मम अपि स्वामी अस्ति। इति द्वितीयाचतुर्थीषष्ठ्येकवचनानां क्रमेणोदाहरणानि। विभुर्व्यापको हरिः वाम्–युवाम्, नौ–आवाम् अपि पातु रक्षतु। ईशो हरिः वाम्–युवाभ्याम्, नौ–आवाभ्यां सुखं ददातु। हरिः वाम्–युवयोः, नौ–आवयोरपि पती रक्षकोऽस्ति। इति सर्वासां क्रमेण द्विवचनोदाहरणानि। स हरिः वः–युष्मान्, नः–अस्मान् अव्यात् पायात्। स हरिः वः–युष्मभ्यम्, नः–अस्मभ्यं शिवं मङ्गलं दद्यात्। अत्र लोके स हरिः वः–युष्माकम्, नः–अस्माकं सेव्यो भजनीयः। इति सर्वासां क्रमेण बहुवचनोदाहरणानि। अत्रेदं बोध्यम्—द्वितीयैकवचने 'त्वां माम्' इत्यत्र 'त्वा मा' इत्यादेशौ, चतुर्थ्येकवचने 'तुभ्यं मह्यम्' इत्यनयोः स्थाने 'ते मे' इत्यादेशौ, एवं षष्ठ्येकवचने 'तव मम' इत्यत्रापि। सर्वासां द्विवचने 'वां नौ' इत्यादेशौ, बहुवचने तु 'वस्नसौ' इति॥ २–शोभनौ पादौ यस्य स सुपात्॥

सुपदः । सुपदा । सुपाद्भ्याम् ॥ [1]अग्निमत्, अग्निमद् । अग्निमथौ । अग्निमथः ॥

**अनिदितां हल उपधायाः क्ङिति ६ । ४ । २४ ॥**

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति । नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ्[2] । प्राञ्चौ । प्राञ्चः ॥

**अचः ६ । ४ । १३८ ॥**

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः ॥

**चौ ६ । ३ । १३८ ॥**

लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् ॥ [3]प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् ॥ उदङ्[4] । उदञ्चौ ॥

**उद ईत् ६ । ४ । १३९ ॥**

उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् । उदीचः । उदीचा । उदग्भ्याम् ॥

**समः[5] समि ६ । ३ । ९३ ॥**

---

१–यः शम्यादिमन्थनेनाग्निमुत्पादयति सोऽग्निमदित्युच्यते ॥ २–प्रकर्षेण अञ्चतीति विग्रहे 'प्र अञ्च्' इत्यस्माद् 'ऋत्विग्–' इत्यादिसूत्रेण क्विन्प्रत्यये तस्य सर्वापहारिलोपे कृदन्तत्वात् प्रातिपदिकत्वेन सौ 'अनिदिताम्–' इत्यनेन नलोपे दीर्घे 'उगिदचाम्–' इति नुमागमे सोर्हल्ङ्यादिलोपे, चकारस्य संयोगान्तलोपे नकारस्य कुत्वेन ङकारे 'प्राङ्' इति सिद्धम् । एवं प्रत्यङ्, उदङ्, सम्यङ्, सध्र्यङ्, तिर्य्यङ्, न्यङ्, अवाङ् इत्यादयः । 'दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः' इति कोषात् 'प्राञ्च्' शब्दः पूर्वदिग्देशकालेषु प्रयुज्यते, तत्र भवोऽपि 'प्राङ्' इत्युच्यते प्राचीनश्च ॥ ३–पश्चिमदिग्देशकालभवः प्रत्यङ् प्रतीचीनश्च । प्रत्यक्पराक्छब्दौ क्रमेणान्तर्बहिर्वाचिनौ च ॥ ४–उत्तरदिग्देशकालभव उदङ् उदीचीनश्च ॥ ५–वप्रत्ययान्तेऽञ्चतौ परे सम्शब्दस्य समिरादेशः ॥

वप्रत्ययान्तेऽञ्चतौ । सम्यङ्[1] । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ॥

**सहस्य सध्रिः ६ । ३ । ९५ ॥**

तथा[2] । सध्र्यङ्[3] ॥

**तिरसस्तिर्यलोपे । ६ । ३ । ९४ ॥**

अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ्[4] । तिर्यञ्चौ । तिरश्चः[5] । तिर्यग्भ्याम् ॥

**नाञ्चेः पूजायाम् । ६ । ४ । ३० ॥**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाभावादलोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु[6] । एवं

---

१–समीचीनः ॥ २–वप्रत्ययान्तेऽञ्चतौ परे सहशब्दस्य सध्रिरादेश इत्यर्थः ॥ ३–यः सहाञ्चति स सध्र्यङ (सहचरः) ॥ ४–स तिर्यङ यस्तिरोऽञ्चति–पशुपक्ष्यादिः ॥ ५–क्विन्प्रत्ययान्तात् 'तिरस् अञ्च्' शब्दाच्छसि अनिदिताम्–' इति नलोपे शस्येत्संज्ञालोपयोः भसंज्ञासहकारेण 'अचः' इत्याकारलोपे श्चुत्वेन सस्य शकारे विभक्तिसकारस्य रुत्वे विसर्गे च 'तिरश्चः' इति सिद्धम् । एवं 'तिरश्चा' इत्यादयः ॥ ६–प्रपूर्वकादञ्चतेः 'ऋत्विग्–' इत्यादिना क्विन्प्रत्यये तस्य सर्वापहारिलोपे नलोपे प्राप्ते 'नाञ्चेः पूजायाम्' इति तन्निषेधे प्राञ्च्शब्दात् सुपि पस्येत्संज्ञालोपयोः पदत्वेन चकारस्य संयोगान्तलोपे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन चकारलोपे कृते अनुस्वारपरसवर्णयोरभावे नकारस्थितौ प्रान् सु इति जाते नकारस्य कुत्वेन ङकारे 'ङणोः कुक्–' इति कुगागमे षत्वे च 'चयो द्वितीयाः–' इति ककारस्य खकारे 'प्राङ्ख्षु' इति, द्वितीयाभावे 'प्राङ्क्षु' इति, कुगागमाभावे 'प्राङ्षु' इति रूपत्रयम्; एवं पूजापक्षे प्रत्यञ्चादेरपि रूपत्रयं बोध्यम् ॥

पूजार्थे प्रत्यङ्ङादयः ॥ क्रुङ्[1] । क्रुञ्चौ । क्रुङ्भ्याम् ॥ पयोमुक्[2], पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् ॥ उगित्त्वान्नुमि—

**सान्तमहतः संयोगस्य ६ । ४ । १० ॥**

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥

**अत्वसन्तस्य चाधातोः ६ । ४ । १४ ॥**

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ सौ परे । उगित्त्वान्नुम् । धीमान्[3] । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् ॥　भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य[4] भवन् ॥

**उभे अभ्यस्तम् ६ । १ । ५ ॥**

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

**नाभ्यस्ताच्छतुः ७ । १ । ७८ ॥**

---

१–क्रुञ्च्धातोः 'ऋत्विग्–' इत्यादिना क्विन्प्रत्यये तद्विधानसामर्थ्येन अस्य ञकारोपधत्वेन नलोपाभावे कृदन्तत्वेन प्रातिपदिकत्वात् सौ तस्य हल्ङ्यादिलोपे चकारस्य संयोगान्तलोपे ञकारस्य कुत्वेन ङकारे 'क्रुङ्' इति। अस्य सुपि पूजार्थ 'प्राञ्च्' शब्दवद्रूपम् । अस्य ञुपधत्वादेव क्रुञ्च्यादित्यत्र नलोपो न । वकजातीयः पक्षिविशेषः 'क्रुङ्' इत्युच्यते ॥ २–पयोमुग् मेघः ॥ ३–बुद्धिमान् ॥ ४–'यचि भम्' इत्यनेन चतुर्थपञ्चमाध्यायविहितप्रत्ययेषु परतो भसंज्ञाविधानाद् डवतुप्रत्ययस्योणादित्वेन तृतीयाध्यायस्थत्वात् तस्मिन् परे भत्वाभाव इति भावः ॥ ५–शत्रन्तस्यात्वन्तत्वाभावान्न दीर्घः ॥

अभ्यस्तात्परस्य शतुर्नुम् न। ददत्[1], ददद्। ददतौ। ददतः॥

**जक्षित्यादयः षट् ६।१।६॥**

षड्धातवोऽन्ये[2] जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्,[3] जक्षद्। जक्षतौ। जक्षतः॥ एवं जाग्रत्[4]। दरिद्रत्[5]। शासत्[6]। चकासत्[7]॥ गुप्[8], गुब्। गुपौ। गुपः। गुब्भ्याम्॥

**त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६०॥**

त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेः कञ् स्यात्। चात् क्विन्॥

**आ सर्वनाम्नः ६।३।९१॥**

सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु। तादृक्[9], तादृग्। तादृशौ। तादृशः। तादृग्भ्याम्॥ व्रश्चेति षः। जश्त्वचर्त्वे। विट्[10], विड्। विशौ। विशः। विड्भ्याम्॥

---

१—दानं कुर्वन्॥ २—जागृ, दरिद्रा, शासु, चकासृ. दीधीङ्, वेवीङ्—इति षड् धातवः। तत्रान्तिमौ द्वौ धातू छान्दसौ दीप्तिदेवनार्थकौ। जाग्रत्, दरिद्रत्, शासत्, चकासत् दीध्यत्, वेव्यत्—इति क्रमेणैषां प्रथमैकवचने रूपं बोध्यम्॥ ३—भक्षयन् हसंश्च॥ ४—जागरणं कुर्वन्॥ ५—दुर्गतिं दैन्यं वा प्राप्नुवन्॥ ६—शासनं कुर्वन्॥ ७—शोभमानः॥ ८—रक्षकः॥ ९—तद्दृश् इत्यस्मात् 'त्यदादिषु—' इति क्विन्प्रत्यये तस्य सर्वापहारिलोपे, 'आ सर्वनाम्नः' इति तदो दकारस्याकारे दीर्घे च प्रातिपदिकत्वात्सौ सोर्लोपे, शकारस्य 'व्रश्च—' इति षत्वे तस्य जश्त्वेन डकारे 'क्विन्प्रत्ययस्य—' इति कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वविकल्पे 'तादृक् तादृग्' इति रूपद्वयम्। सुपि 'खरि च' इति चर्त्वेन गस्य ककारे यथाप्राप्तकार्ये 'तादृक्षु' इति ज्ञेयम्। एवम् 'नक्' इत्यत्र कुत्वपक्षे प्रक्रिया उन्नेया। एवं 'घृतस्पृक्' इत्यत्रापि॥ १०—वैश्यः॥

**नशेर्वा ८ । २ । ६३ ॥**

नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्[1], नग्, नट्, नड्
नशौ । नशः । नग्भ्याम्, नड्भ्याम् ॥

**स्पृशोऽनुदके क्विन् ३ । २ । ५८ ॥**

अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्[2], घृतस्पृग्
घृतस्पृशौ । घृतस्पृशः ॥ दधृक्[3], दधृग् । दधृषौ । दधृग्भ्याम् ।
रत्नमुषौ[4] । रत्नमुड्भ्याम् ॥ षट्, षड् । षड्भिः । षड्भ्यः
षण्णाम् । षट्सु ॥ रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषो
रुरिति रुत्वम् ॥

**र्वोरुपधाया दीर्घ इकः ८ । २ । ७६ ॥**

रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते । पिपठीः[5]
पिपठिषौ । पिपठीर्भ्याम् ॥

**नुम्विसर्जनीयशर्व्यवायेऽपि ८ । ३ । ५८ ॥**

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य
मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु[6], पिपठीःषु ।

---

१–नश्वरः ॥ २–घृतस्पर्शकारी ॥ ३–'ऋत्विग्–'इत्यादिना क्विन्नन्त
दधृष्शब्दात् सौ तस्य लोपे षस्य जश्त्वेन डकारे कुत्वेन गकारे वैकल्पि
कचर्त्वे निर्दिष्टरूपद्वयं सिद्धम् । दधृक्–घर्षणकारकः ॥ ४–रत्ना
पहारकौ ॥ ५–पठितुमिच्छुः ॥ ६–पिपठिष्शब्दात् सुप्यनुबन्धलो
'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायाम् 'पूर्वत्रासिद्धम्' इति षत्वस्या
सिद्धत्वात् 'ससजुषो रुः' इति रुत्वेऽनुबन्धलोपे 'र्वोरुपधाया दीर्घ इकः'
इति दीर्घे 'रोः सुपि' इति रोर्विसर्गे तस्य 'वा शरि' इत्यनेन पाक्षिक
स्थितौ तदभावे विसर्गस्य सकारादेशे 'पिपठीःसु' 'पिपठीस्सु' इति
रूपद्वये जाते 'नुम्विसर्जनीय–' इतिसूत्रेणोभयत्र सुपः सकारस्य षत्वे
द्वितीयलक्ष्ये ष्टुत्वेन पूर्वसकारस्य षकारे निर्दिष्टरूपद्वयं सिद्धम् ॥

चिकीः[1]। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु॥ विद्वान्। विद्वांसौ। हे विद्वन्॥

**वसोः सम्प्रसारणम् ६। ४। १३१॥**

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः[2]। वसुस्रंस्विति दः। विद्वद्भ्याम्॥

**पुंसोऽसुङ् ७। १। ८९॥**

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्। पुमान्[3]। हे पुमन्। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु॥ ऋदुशनेत्यनङ्। उशना[4]। उशनसौ। (अस्य सम्बुद्धौ वानङ्, नलोपश्च वा वाच्यः)। हे उशन, हे उशनन्, हे उशनः। हे उशनसौ। उशनोभ्याम्। उशनस्सु॥ अनेहा[5]। अनेहसौ। हे अनेहः॥ वेधाः[6]। वेधसौ। हे वेधः। वेधोभ्याम्॥

**अदस औ सुलोपश्च ७। २। १०७॥**

अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च। तदोरिति सः। असौ। त्यदाद्यत्वम्। पररूपत्वम्। वृद्धिः॥

**अदसोऽसेर्दादु दो मः ८। २। ८०॥**

---

१–चिकीर्ष् शब्दात् सौ तस्य लोपे षत्वस्यासिद्धत्वात् 'रात्सस्य' इति संयोगान्तलोपे रेफस्य विसर्गे 'चिकीः' इति। एवं चिकीर्भ्यामित्यत्रापि 'रात्सस्य' इति संयोगान्तलोपः। अस्य सुपि रेफस्य विसर्गस्तु न, 'रोः सुपि' इति नियमात्। 'शरोऽचि' इत्यनेन द्वित्वाभावश्च। अस्य कर्तुमिच्छुरित्यर्थः॥ २–वस्प्रत्ययावयवत्वेनात्र सस्य षः॥ ३–पुरुषः॥ ४–शुक्राचार्यः॥ ५–कालः॥ ६–ब्रह्मा॥

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च। आन्तरतम्याद्ध्रस्वस्य उ:, दीर्घस्य ऊः। अमू। जसः शी। गुणः।

**एत ईद्बहुवचने ८।२।८१॥**

अदसो दात्परस्यैत ईदस्य च मो बह्वर्थोक्तौ। अमी। पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। मुत्वे कृते घिसंज्ञायां नाभावः॥

**न मु ने ८।२।३॥**

नाभावे कर्तव्ये कृते च मुभावो नासिद्धः। अमुना[1]। अमूभ्याम् ३। अमीभिः। अमुष्मै। अमीभ्यः २। अमुष्मात्। अमुष्य। अमुयोः २। अमीषाम्। अमुष्मिन्। अमीषु॥

इति हलन्तपुँल्लिङ्गाः।

---

## अथ हलन्तस्त्रीलिङ्गाः

**नहो धः ८।२।३४॥**

नहो हस्य धः स्याज्झलि पदान्ते च॥

**नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६॥**

---

१–'अदस्' शब्दात् टाविभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'अदसोऽसेः–' इति मुत्वे 'अमु आ' इति जाते घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति नाभावे कर्तव्ये मुत्वस्यासिद्धत्वं प्राप्तम् 'न मु ने' इत्यनेन निषिद्धयते, ततश्च नाभावे कृते अमुना इति सिद्धम्। मुत्वस्यासिद्धत्वात् 'सुपि च' इति दीर्घस्तु न शङ्कयः, तेनैव सूत्रेण नाभावे जातेऽपि मुत्वस्यासिद्धत्वनिषेधात्॥

क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत्[1], उपानद् । उपानहौ । उपानत्सु ॥ क्विन्नन्तत्वात् कुत्वेन घः[2] । उष्णिक्[3], उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् ॥ द्यौः[4] । दिवौ । दिवः । द्युभ्याम् ॥ गीः[5] । गिरौ । गिरः ॥ एवं पूः[6] ॥ चतस्रः । चतसृणाम् ॥ का । के । काः । सर्वावत् ॥

## यः सौ ७ । २ । ११० ॥

इदमो दस्य यः । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम्[7] । आसु ॥ त्यदाद्यत्वम् । टाप् । स्याः । त्ये । त्याः ॥ एवं तद्[8], एतद् ॥ वाक्, वाग्[9] । वाचौ । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः[10] । अपः ॥

## अपो भि ७ । ४ । ४८ ॥

अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अद्भ्यः ।

---

१–एवं नीवृत्, प्रावृट्, मर्मावित्, नीरुक्, अभीरुक्, ऋतीषट्, परीतत्–इत्येतेषु पूर्वपदस्य दीर्घो बोध्यः । 'उपानद्'इत्यस्य पादत्राणम् अर्थः ॥ २–महाप्राणसंवारादिप्रयत्नसाम्यात् ॥ ३–वेदमन्त्रेषूपलभ्यमानश्छन्दोविशेषः ॥ ४–द्यौः स्वर्गो नभश्च ॥ ५–वाणी ॥ ६–ग्रामः ॥ ७–इदम् शब्दान्ङौ विभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपे टापि दीर्घे 'ङेराम्–'इति ङेरामादेशे 'सर्वनाम्नः स्याड्–' इति आमः स्याडागमे आपश्च ह्रस्वे हलि लोपे आमा सह सवर्णदीर्घे च 'अस्याम्' इति सिद्धम् ॥ ८–सा, ते, ताः । एषा, एते, एताः । इत्यादिरूपाणि ॥ ९–वाणी । १०–जलम् ॥

अपाम् । अप्सु[1] ।। दिक्[2], दिग् । दिशौ । दिशः । दिग्भ्याम् ।। त्यदादिष्विति[3] दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्[4], दृग् । दृशौ । दृग्भ्याम् ।। त्विट्,[5] त्विड् । त्विषौ । त्विड्भ्याम् ।। ससजुषो रुरिति रुत्वम् । सजूः[6] । सजुषौ । सजूर्भ्याम् । आशीः[7] । आशिषौ । आशीर्भ्याम् ।। असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्मै । अमूभ्यः २ । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम्[8] । अमूषु ।।

इति हलन्तस्त्रीलिङ्गाः ।

---

# अथ हलन्तनपुंसकलिङ्गाः

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद्[1] । स्वनडुही । चतुरनडुहोरित्याम् ।। स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ।।

---

१–अत्र 'चयो द्वितीयाः—' इति तु न प्रवर्तते, पकारस्य जश्त्वेन बकारे तस्य चर्त्वेन पकारः क्रियते, तस्यासिद्धत्वात् । एवं 'गुप्सु' इत्यादावपि ज्ञेयम् ।। २–'ऋत्विग्–' आदिना क्विन्नन्तदिश्शब्दात्सौ तल्लोपे 'व्रश्च–इत्यादिसूत्रेण शस्य षत्वे जश्त्वे क्विन्नन्तत्वात्कुत्वेन गकारेऽवसाने पाक्षिकचर्त्वे निर्दिष्टरूपद्वयं सिद्धम्, एवं दृगित्यत्रापि सर्वं कार्यम् । दिक्छन्दः प्राच्यादिषु रूढः । दृक्शब्दो नेत्रपर्यायः ।। ३–क्विन्प्रत्ययो यस्माद् दृष्टस्तस्य कुत्वम् इति 'क्विन्प्रत्ययस्य कुः' इत्यस्यार्थस्वीकारात् । क्विन्प्रत्ययश्च'तादृग्' इत्यत्र दृशेर्दृष्ट इति भावः ।। ४–लोचनम् ।। ५–कान्तिः ।। ६–सजूःशब्दो मित्रवाची त्रिलिङ्गः ।। ७–आशीः इष्टार्थाशंसनम् ।। ८–अदस्शब्दान्ङौ त्यदाद्यत्वे पररूपे टापि दीर्घे ङेरामादेशे स्याडागमे पूर्वस्य ह्रस्वे आमा सह दीर्घे मुत्वे षत्वे च अमुष्यामिति ।। ९–शोभना अनड्वाहो यस्य यस्मिन् वा तत् स्वनडुत्कुलम् ।।

चाः[1]। वारी। वारि। वार्भ्याम्॥ चत्वारि॥ किम्[2]। के। कानि॥ इदम्। इमे। इमानि॥ (अन्वादेशे नपुंसके एनद्वक्तव्यः)॥ एनत्[3]। एने। एनानि। एनेन। एनयोः॥ अहः[4]। विभाषा ङिश्योः। अह्नी, अहनी। अहानि॥

**अहन् ८। २। ६८॥**

अहन्नित्यस्य रुः पदान्ते। अहोभ्याम्॥ दण्डि। दण्डिनी। दण्डीनि। दण्डिना। दण्डिभ्याम्॥ सुपथि। टेर्लोपः। सुपथी। सुपन्थानि[5]॥ ऊर्क्[6], ऊर्ग्,। ऊर्जी। ऊर्न्जि। नरजानां[7] संयोगः। तत्। ते। तानि॥ यत्। ये। यानि॥ एतत्। एते एतानि॥ गवाक्[8],गवाग्। गोची। गवाञ्चि। पुनस्तद्वत्। गोचा। गवाग्भ्याम्॥

---

१–वाः–जलम्॥ २–स्वमोर्लुकि 'न लुमताऽङ्गस्य' इति निषेधेन प्रत्ययलक्षणाभावे विभक्तिपरत्वाभावात् कादेशो न। एवम् इदम्, त्यद्, तद्, यद्, एतद् इत्यत्र स्वमोर्लुकि अत्वसत्वाद्यभावः॥ ३–इदमेतदोः क्लीबे द्वितीयैकवचने एनादेशं बाधित्वा 'अन्वादेशे–' इति वार्तिकेन एनदादेशः। अमो लुकि चर्त्वविकल्पेन 'एनत्, एनद्' इति रूपद्वयम्। अम्येवैनदादेशो विधीयते न त्वौट् शसादिषु फलाभावात्। अतो द्वितीयाद्विवचनादौ एनादेश एव॥ ४–अत्र 'रोऽसुपि' इति रेफादेशः। अस्य दिनमित्यर्थः॥ ५–सुपथिन्शब्दाज्जश्शसोः श्यादेशे सर्वनामस्थानत्वेन 'इतोऽत् सर्वनामस्थाने' इति अत्वे 'थो न्थः' इति थस्य न्थादेशे 'सर्वनामस्थाने–' इति दीर्घे 'सुपन्थानि' इति रूपं सिद्धयति। प्रथमैकवचने सुपथीत्यत्रात्वादिकं तु न सोर्लुका लुप्तत्वात्॥ ६–बलं तेजश्च॥ ७–ऊर्ज्शब्दाज्जश्शसोः श्यादेशे झलन्तलक्षणे उकारात्परनुमागमे नकाररेफजकाराणां क्रमेण सन्निधानमतः तवर्गस्य चवर्गेण योगाभावात् श्चुत्वं न॥ ८–गवाक्छब्दे गतिपूजाभेदेन रूपबाहुल्यान्मूलानुसारेण केवलगतिपक्षे रूपाणि लिख्यन्ते– गवाक्, गवाग् २। गोची २। गवाञ्चि २। गोचा। गवाग्भ्याम् ३। गवाग्भिः गोचे। गवाग्भ्यः २। गोचः २। गोचोः २। गोचाम्। गोचि। गवाक्षु॥

शकृत्[1]। शकृती। शकृन्ति॥ ददत्॥

**वा नपुंसकस्य ७।१।७९॥**

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने। ददन्ति, ददति॥ तुदत्॥

**आच्छीनद्योर्नुम् ७।१।८०॥**

अवर्णान्तादङ्गात्परो[2] यः शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः। तुदन्ती, तुदती। तुदन्ति॥

**शप्श्यनोर्नित्यम्। ७।१।८१॥**

शप्श्यनोरात्परो[3] यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः। पचन्ती। पचन्ति॥ दीव्यत्। दीव्यन्ती। दीव्यन्ति॥ धनुः। धनुषी। सान्तेति दीर्घः। नुम्विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्। एवं चक्षुर्हविरादयः॥ पयः। पयसी। पयांसि। पयसा। पयोभ्याम्। सुपुम्। सुपुंसी। सुपुमांसि[4]॥ अदः[5]। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥

इति हलन्तनपुंसकलिङ्गाः

इति षड्लिङ्गप्रकरणम्।

---

१–शकृत् पुरीषपर्यायः॥ २–अवर्णान्ताङ्गं 'तुद' इति ततः परः शतुरवयवस्तकारः, तदन्तः 'तुदत्' इति॥ 'पचत् ई,' 'दीव्यत् ई' इत्यत्र शपोऽकारश्चकारोत्तरः, श्यनोऽकारो यकारोत्तरः, तस्मात् परः शतुरवयव उभयत्रापि तकारस्तदन्तस्य 'पचत्' शब्दस्य 'दीव्यत्' शब्दस्य च शीपरे नित्यं नुमागमः॥ ४–'सुपुंस्' शब्दाज्जश्शसोः श्यादेशे सर्वनामस्थानत्वे 'पुंसोऽसुङ्' इति असुङादेशे 'सुपुमस् इ' इति जाते झलन्तलक्षणनुमागमे 'सान्तमहतः–' इति दीर्घे 'नश्चापदान्तस्य–' इति नस्यानुस्वारे 'सुपुमांसि' इति॥ ५–'अदस्' शब्दात्स्वमोर्लुकि लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् 'अदस औ–' इति न प्रवर्तते 'अदसोऽसेर्दादु दो मः' इति मुत्वमपि न, अदश्शब्दस्य सान्तत्वात्। सकारस्य रुत्वे विसर्गे च 'अदः' इति॥

# अथाऽव्ययानि

**स्वरादिनिपातमव्ययम्**[1] **१ । १ । ३७ ॥**

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् ।

---

१—अत्र स्वरादीनामर्था निर्दिश्यन्ते—स्वरिति स्वर्गे परलोके च । अन्तरिति मध्ये । प्रातरिति प्रत्यूषे । पुनरित्यप्रथमे विशेषे च । सनुतरित्यन्तर्धाने । उच्चैरिति महति । नीचैरित्यल्पे । शनैः क्रियामान्द्ये । ऋधक् सत्ये । ऋते वर्जने । युगपदित्येककाले । आराद्दूरसमीपयोः । पृथक् भिन्ने । ह्यस् अतीतेऽह्नि । श्वस् अनागतेऽह्नि । दिवा दिवसे । रात्रौ निशि । सायमिति निशामुखे । चिरमिति बहुकाले । मनाक्, ईषत् इमावल्पे । जोषं सुखे मौने च । तूष्णीमिति मौने । बहिस्, अवस्, इमौ बाह्ये । समयेति समीपे मध्ये च । निकषेत्यन्तिके । स्वयमिति आत्मनेत्यर्थे । वृथेति व्यर्थे । नक्तमिति रात्रौ । नञिति निषेधे । हेताविति निमित्ते । इद्धेति प्राकाश्ये । अद्धेति स्फुटावधारणयोः । सामि इत्यर्धे जुगुप्सिते च । वत् इति तुल्येऽर्थे तद्धितप्रत्ययः, तस्य 'ब्राह्मणवत्', 'क्षत्रियवत्' इत्युदाहरणे । सना, सनत्, सनात् एते नित्ये । उपधेति भेदे । तिरस् अन्तर्धौ तिर्यगर्थे परिभवे च । अन्तरेति मध्ये विनार्थे च । अन्तरेणेति वर्जने । ज्योगिति कालाधिक्ये प्रश्ने शीघ्रे सम्प्रत्यर्थे च । कमिति वारिमूर्धनिन्दासुखेषु । शमिति सुखे । सहसेति आकस्मिकाविमर्शयोः । विनेति वर्जने । नानेत्यनेकविनार्थयोः । स्वस्तीति मङ्गले ।

अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम्, प्रवाहिका । आर्यहलम् । अभीक्षणम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । प्रतान् । मा । माङ् । आकृतिगणोऽयम्[1] ।

स्वधा पितृदाने । अलं भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषट्, श्रौषट्, वौषट् एते हविर्दाने । अन्यदन्यार्थे । अस्तीति सत्तायाम् । उपांशु इति अप्रकटोच्चारणरहस्ययोः । क्षमेति क्षान्तौ । विहायसा इति आकाशार्थे । दोषेति रात्रौ । मृषा मिथ्येत्येतौ वितथे । मुधेति व्यर्थे । पुरा इत्यविरते चिरातीते भविष्यदासन्ने च । मिथो, मिथस् एतौ रहःसहार्थयोः । प्रायस् इति बाहुल्ये । मुहुरिति पुनरर्थे । प्रवाहुकमिति समानकाले ऊर्ध्वार्थे च । प्रवाहिकेति पाठान्तरम् । आर्यहलमिति बलात्कारे ( आर्येति प्रतिबन्धे, अलमिति प्रतिषेधविवादयोर्वा ) । अभीक्ष्णमिति पौनःपुन्ये । साकम्, सार्धमेतौ सहार्थे । नमस् नतौ । हिरुक् वर्जने । धिङ् निन्दाभर्त्सनयोः । अथ आनन्तर्ये । अम् शैघ्र्येऽल्पे च । आम् अङ्गीकारे । प्रताम् ग्लानौ । प्रशान् समानार्थे । प्रतान् विस्तारे । मा माङ् एतौ निषेधाशङ्कयोः ॥

१—तेनान्येऽपि ज्ञेयाः । तथा हि— कामं स्वाच्छन्द्ये । प्रकाममित्यतिशये । भूय इति पुनरर्थे । साम्प्रतमिति न्याय्ये । परमिति किन्त्वर्थे । साक्षात् प्रत्यक्षे । साचीति तिर्यगर्थे । सत्यमित्यर्धाङ्गीकारे । मङ्क्षु, आशु एतौ शैघ्र्ये । संवत् वर्षे । अवश्यं निश्चये । उषेति रात्रौ । ओमित्यङ्गीकारे ब्रह्मणि च । भूरिति पृथिव्याम् । भुवरित्यन्तरिक्षे । झटिति, झगिति, तरसा —-एते शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु निकृष्टे । सु पूजायाम् । कु कुत्सितेषदर्थयोः । अञ्जसेति तत्त्वशीघ्रार्थयोः । मिथु इति द्वावित्यर्थे । अस्तमिति विनाशे । स्थाने इति युक्ते । वरमिति ईषदुत्कर्षे । सुदि शुक्लपक्षे । वदि कृष्णपक्षे इत्यादि ॥

च[1]। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। भूयस्। कूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। माकिः। माकिस्। नकिः। नकिम्। माङ। नञ्। यावत्। तावत्। त्वै। द्वै। न्वै। रै। श्रौषट्। वौषट्। स्वाहा। स्वधा। तुम्। तथाहि। खलु। किल। अथो। अथ। सुष्ठु। स्म। आदह। (उपसर्गविभक्तिस्वरप्रतिरूपकाश्च)। अवदत्तम्[2]।

---

१—चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये। ह इति प्रसिद्धौ। अह इति पूजायाम्। एवेत्यवधारणेऽनवक्लृप्तौ च। एवमित्युक्तपरामर्शे। नूनमिति निश्चये तर्के च। शश्वदिति पौनःपुन्ये नित्ये सहार्थे च। युगपदित्येककाले। भूयस् इति पुनरर्थे आधिक्ये च। कूपदिति प्रश्ने प्रशंसायां च। कुविदिति भूर्यर्थे प्रशंसायां च। नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। चेदिति यद्यर्थे। चण् चेदर्थे। कच्चिदितीष्टप्रश्ने। यत्रेति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नहेति प्रत्यारम्भे। हन्तेति हर्षे। विषादेऽनुकम्पायां वाक्यारम्भे च। माकिः माकिं नकिः नकिमिति चत्वारोऽपि वर्जने। माङ्नञौ स्वरादिषूक्तौ। यावत्तावतौ साकल्यावधिमानावधारणेषु। त्वै विशेषवितर्कयोः। द्वै वितर्के। न्वै इति पाठान्तरम्। रै दानेऽनादरे च। श्रौषट्, वौषडिति स्वरादिषूक्तौ। स्वाहा देवताभ्यो दाने। स्वधेति पितृभ्यः। तुमिति तुंकारे (गुरुं तुंकृत्य हुंकृत्य)। तथाहि निदर्शने। खलु इति निषेधवाक्यालंकारनिश्चयेषु। किलेति वार्तायामलीके च। अथो, अथेति मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। सुष्ठु प्रशंसायाम्। स्मेत्यतीते पादपूरणे च। आदहेति— उपक्रमहिंसाकुत्सनेषु॥ २—अवदत्तमित्यत्रावशब्द उपसर्गसमानाकारोऽपि न साक्षादुपसर्गः, अत उपसर्गप्रतिरूपकत्वात्तस्याव्ययत्वं भवति। एवमेव विदत्तं प्रदत्तमित्यादि। उपसर्गभिन्नत्वादेव 'अच उपसर्गात्तः' इति तादेशो न। तथा चोक्तम्—

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥ इति॥

अहंयु[1]: । अस्तिक्षीरा । अ[2] । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ॥ तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोऽर्थाः । तसिवती । नानाञौ । एतदन्तमप्यव्ययम् ॥

**कृन्मेजन्तः १ । १ । ३९ ॥**

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारं स्मारम् । जीवसे । पिबध्यै ॥

**क्त्वातोसुन्कसुनः १ । १ । ४० ।**

एतदन्तमव्ययम् । कृत्वा । उदेतोः । विसृपः ॥

**अव्ययीभावश्च १ । १ । ४१ ॥**

अधिहरि ॥

**अव्ययादाप्सुपः २ । ४ । ८२ ॥**

अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

वगाहः[4], अवगाहः । पिधानम्[5], अपिधानम् ॥

इत्यव्ययानि ।

---

१—अहमिति विभक्तिप्रतिरूपकमहंकारे बोध्यम् । अहंयुरित्यस्याहंकारीत्यर्थः ॥ २—अ इति सम्बोधने निषेधेऽधिक्षेपे च । आ इति वाक्यस्मरणयोः । इ सम्बोधनजुगुप्साविस्मयेषु । ई उ ऊ ए ऐ ओ औ सम्बोधने । पशु इति सम्यगर्थे । शुकं शैघ्र्ये । यथाकथाचेत्यनादरे । पाट्प्रभृतयः सप्त सम्बोधने । द्येति हिंसाप्रातिलोम्यपादपूरणेषु । विषु नानार्थे । एकपदे इत्यकस्मादित्यर्थे । युत् कुत्सायाम् । आत इति इतोऽपीत्यर्थे ॥ ३—तद्यथा—यत्तदिति हेतौ । आहोस्विद्विकल्पे । सीम सर्वतोभावे । शुकमतिशये । अनुकं वितर्के । शंवद् अन्तःकरणे आभिमुख्ये च । व पादपूरणे इवार्थे च । दिष्टचेत्यानन्दे । चटु, चाटु इत्येतौ प्रियवाक्ये । हुमिति भर्त्सने । इवेति सादृश्ये । अद्यत्वे ईति इदानीमित्यर्थे इत्यादि ॥ ४—वगाहावगाह शब्दौ स्नानार्थकौ ॥ ५—पिधानापिधानशब्दावाच्छादनपर्यायौ ॥

## अथ तिङन्ते भ्वादयः

लट् लिट् लुट् लृट् लेट् लोट् लङ लिङ लुङ लृङ। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥

**लः[1] कर्मणि च भावे चाकर्मकेभ्यः ३ । ४ । ६९ ॥**

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥

**वर्तमाने लट् ३ । २ । १२३ ॥**

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम् । भू सत्तायाम्[2] ॥ १ ॥ कर्तृविवक्षायां भू ल् इति स्थिते—

**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८ ॥**

एतेऽष्टादश लादेशाः[3] स्युः ॥

**लः परस्मैपदम् १ । ४ । ९९ ॥**

---

१–धातवो द्विधा, सकर्मका अकर्मकाश्च, तत्र सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च, अकर्मकेभ्यो भावे कर्तरि च लकारा भवन्ति ॥ २–आत्मधारणानुकूलो व्यापारः सत्ता ॥ ३—ननु एकस्य लस्य स्थाने कथमष्टादशादेशा भवेयुरिति चेत् प्रतिप्रधानं गुणावृत्तिरिति न्यायेन प्रधानादेशानुरोधेन एकस्यैव लस्य पुनः पुनरुच्चारणात् ॥

लादेशाः परस्मैपदसंज्ञाः स्युः ॥

**तङानावात्मनेपदम् १ । ४ । १०० ॥**

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥

**अनुदात्तङित आत्मनेपदम् १ । ३ । १२ ॥**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥

**स्वरितञितः कर्त्रभिप्राये क्रियाफले १ । ३ । ७२ ॥**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥

**शेषात्कर्तरि परस्मैपदम् १ । ३ । ७८ ॥**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ॥

**तिङस्त्रीणि[1] त्रीणि प्रथममध्यमोत्तमाः १।४।१०१ ॥**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥

**तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२ ॥**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १ । ४ । १०५ ॥**

---

१–तिङ उभे पदे परस्मैपदमात्मनेपदं च । तत्र परस्मैपदे 'तिप् तस् झि'–इत्येकं त्रिकम्, तस्य प्रथमपुरुषः संज्ञा । 'सिप् थस् थ' इति द्वितीयं त्रिकम् । तस्य मध्यमपुरुषः संज्ञा । 'मिप् वस् मस्' इति तृतीयं त्रिकम्, तस्योत्तमपुरुषः संज्ञा । एवमात्मनेपदे 'त आताम् झ' इति प्रथमः, 'थास् आथाम् ध्वम्' इति मध्यमः, 'इट् वहि महिङ्' इत्युत्तमः पुरुषः ॥

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ॥

**अस्मद्युत्तमः १ । ४ । १०७ ॥**

तथाभूतेऽस्मद्युत्तमः[1] ॥

**शेषे प्रथमः १ । ४ । १०८ ॥**

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ॥

**तिङ्शित्सार्वधातुकम् ३ । ४ । ११३ ॥**

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

**कर्तरि शप् ३ । १ । ६८ ॥**

कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥

**सार्वधातुकार्धधातुकयोः ७ । ३ । ८४ ॥**

अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति[2] । भवतः ॥

**झोऽन्तः ७ । १ । ३ ॥**

प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ॥

---

१–तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च उत्तम इत्यर्थः । २–सत्तार्थकाद् धातुसंज्ञकाद् भूशब्दात् 'वर्तमाने लट्' इति लटि अकारटकारयोरित्त्वे लोपे च जाते 'तिप्तस्झि–' इत्यादिना लस्य तिबादेशे पस्येत्त्वे लोपे च 'तिङशित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायाम् 'कर्तरि शप्' इति शप्प्रत्ययेऽनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायाम् 'सार्वधातुकार्धधातुकयोः' इति गुणे, अवादेशे 'भवति' इति सिद्धम् ॥

**अतो दीर्घो यञि ७ । ३ । १०१ ॥**

अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥*

**परोक्षे लिट् ३ । २ । ११५ ॥**

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥

**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२ ॥**

लिटस्तिबादीनां नवानां णलादयः स्युः । भू अ इति स्थिते—

**भुवो वुग् लुङ्लिटोः ६ । ४ । ८८ ॥**

भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥

**लिटि धातोरनभ्यासस्य ६ । १ । ८ ॥**

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते—

**पूर्वोऽभ्यासः ६ । १ । ४ ॥**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥

---

*अत्रेदं तत्त्वम्—यत्र सः त्वम् इति कर्तृपदद्वयम्, तत्र मध्यमपुरुषद्विवचनान्तप्रयोगः 'भवथः' इति, यत्र सः त्वम् अहम् इति त्रयाणां कर्तृत्वम्, तत्र 'भवामः' इति उत्तमपुरुषबहुवचनम् । एवं त्वम् अहम् इत्यनयोः कर्तृत्वे 'भवावः' इति । त्रयाणां प्रथममध्यमोत्तमपुरुषाणां द्वयोः सर्वेषां वा प्रयोगे यः परः पुरुषः स एव प्रयोक्तव्यः । परत्वं चात्र व्यवस्थितम्, प्रथमापेक्षया मध्यमः परः, उभयोरपेक्षया उत्तमः पुरुषः पर इति बोध्यम् । अनया रीत्या व्यत्ययेनापि प्रथमादीनां प्रयोगे परः पुरुषो निर्धारणीयः । तथा च अहम्, त्वम्, स चेत्येवंकर्तृपदप्रयोगेऽपि 'भवामः' इत्येव क्रिया ॥

**हलादिः शेषः ७ । ४ । ६० ॥**

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः॥

**ह्रस्वः ७ । ४ । ५९ ॥**

अभ्यासस्याचो ह्रस्वः स्यात् ॥

**भवतेरः ७ । ४ । ७३ ॥**

भवतेरभ्यासोकारस्य वः स्याल्लिटि ॥

**अभ्यासे चर्च ८ । ४ । ५४ ॥**

अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवेकः । बभूव । बभूवतुः । बभूवुः ॥

**लिट् च ३ । ४ । ११५ ॥**

लिडादेशस्तिङ्ङार्धधातुकसंज्ञः ॥

**आर्धधातुकस्येड्वलादेः ७ । २ । ३५ ।**

वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ[1] । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ॥

---

१—भूधातोः 'परोक्षे लिट्' इति लिट्यनुबन्धलोपे लकारस्य सिबादेशे तस्य 'लिट् च' इत्यार्धधातुकत्वे 'परस्मैपदानाम्—' इति सिपस्थलादेशे 'भू थ' इति जाते स्थानिवत्त्वेन थस्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इतीडागमे 'भुवो वुग्—' इति भुवो वुगागमे 'भूव्' शब्दस्य 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति पूर्वस्याभ्यासत्वे 'हलादिः शेषः' इत्यनेन वस्य लोपे 'ह्रस्वः' इत्यनेन ह्रस्वे 'भवतेरः' इत्युकारस्याकारे । 'अभ्यासे चर्च' इति भस्य बकारे 'बभूविथ' इति सिद्धम् ॥

**अनद्यतने[1] लुट् ३ । ३ । १५ ॥**

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥

**स्यतासी ऌलुटोः ३ । १ । ३३ ॥**

धातोः स्यतासी एतौ प्रत्ययौ स्तो ऌलुटोः परतः। शबाद्यपवादः । ऌ इति लृङ्लृटोर्ग्रहणम् ॥

**आर्धधातुकं शेषः ३ । ४ । ११४ ॥**

तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥

**लुटः प्रथमस्य डारौरसः २ । ४ । ८५ ॥**

डा रौ रस् एते क्रमात् स्युः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ।

**तासस्त्योर्लोपः ७ । ४ । ५० ॥**

तासेरस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे ॥

**रि च ७ । ४ । ५१ ॥**

रादौ प्रत्यये तथा । भवितारौ[2] । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥

---

१—अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः । २—भूधातोः 'अनद्यतने लुट्' इति लुटि लस्य तसादेशे 'भू तस्' इति जाते शपं प्रबाध्य 'स्यतासी ऌलुटोः' इत्यनेन धातोः तासि प्रत्यये तासः 'आर्धधातुकं शेषः' इत्यार्धधातुकसंज्ञायामिडागमे धातोर्गुणावादेशयोः 'भवितास् तस्' इति जाते तसः 'लुटः प्रथमस्य—' इति यथासंख्यसूत्रसाहचर्येण रौभावे 'रि च' इत्यनेन सस्य लोपे 'भवितारौ' इति सिद्धम् । आगामिनि परदिनादौ लुट्प्रयोगः, न तु वर्तमानदिनस्यागामिनि काले, तत्र तु ऌट्प्रयोगः साधुः ॥

**लट् शेषे च ३ । ३ । १३ ॥**

भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ॥

**लोट् च ३ । ३ । १६२ ॥**

विध्याद्यर्थेषु धातोर्लोट् ॥

**आशिषि लिङ्लोटौ ३ । ३ । १७३ ।**

**एरुः ३ । ४ । ८६ ॥**

लोट इकारस्य उः । भवतु ॥

**तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७ । १ । ३५ ॥**

आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ॥

**लोटो लङ्वत् ३ । ४ । ८५ ॥**

लोटस्तामादयः सलोपश्च ॥

**तस्थस्थमिपां तान्तन्तामः ३ । ४ । १०१ ॥**

ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥

**सेर्ह्यपिच्च ३ । ४ । ८७ ॥**

लोटः सेर्हिः सोऽपिच्च ॥

**अतो हेः ६ । ४ । १०५ ॥**

अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ॥

**मेर्निः ३ । ४ । ८९ ॥**

लोटो मेर्निः स्यात् ॥

**आडुत्तमस्य पिच्च ३ । ४ । ९२ ॥**

लोडुत्तमस्याट् स्यात् पिच्च। हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् ॥

**ते प्राग्धातोः १ । ४ । ८० ॥**

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥

**आनि लोट् ८ । ४ । १६ ॥**

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि[1]। (दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) । दुःस्थितिः। दुर्भवानि । (अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) अन्तर्भवाणि ॥

**नित्यं ङितः ३ । ४ । ९९ ॥**

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः। अलोऽन्त्यस्येति सलोपः। भवाव। भवाम ॥

**अनद्यतने लङ् ३ । २ । १११ ॥**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥

---

१—भू धातोः 'लोट् च' इति 'आशिषि—' इति वा लोटचनुबन्धलोपे तस्य उत्तमपुरुषैकवचने मिबादेशे तस्य सार्वधातुकत्वेन शपि गुणेऽवादेशे च 'मेर्निः' इत्यनेन मिशब्दस्य निशब्दादेशे 'आडुत्तमस्य पिच्च' इति आडागमे दीर्घे 'भवानि' इति जातमत्र 'एरुः' इत्युत्वं तु न, 'मेर्निः' इत्यत्रेकारोच्चारणसामर्थ्यात् । तस्मात् 'ते प्राग्धातोः' इति सूत्रेण प्रशब्दस्य प्राक्प्रयोगे 'आनि लोट्' इति सूत्रेण नस्य णत्वे 'प्रभवाणि' इति सिद्धम् । लोट आशिषि प्रयोगो यथा—भवान् पण्डितो भवतात्, विधौ तु—मम सहायको भवतु इत्यादि ॥

**लुङ्लङ्लृङ्क्ष्वडुदात्तः ६ । ४ । ७१ ॥**

एष्वङ्गस्याट् ॥

**इतश्च ३ । ४ । १०० ॥**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥

**विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्[1] ३ । ३ । १६१ ॥**

एष्वर्थेषु धातोर्लिङ् ॥

**यासुट् परस्मैपदेषूदात्तो ङिच्च ३ । ४ । १०३ ॥**

लिङः परस्मैपदानां यासुडागमो ङिच्च ॥

**लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९ ॥**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते—

**अतो येयः ७ । २ । ८० ॥**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् । गुणः ।

**लोपो[2] व्योर्वलि ६ । १ । ६६ ॥**

भवेत् । भवेताम् ॥

**झेर्जुस् ३ । ४ । १०८ ॥**

---

१—विधिः प्रेरणम् । निमन्त्रणं नियोगकरणम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टं सत्कारपूर्वको व्यापारः ॥ २—वकारयकारयो॰ र्लोपः स्याद् वलि परे ॥

लिङो झेर्जुस् स्यात् । भवेयुः[1] । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥

**लिङाशिषि ३ । ४ । ११६ ॥**

आशिषि लिङस्तिङ आर्धधातुकसंज्ञः स्यात् ॥

**किदाशिषि ३ । ४ । १०४ ॥**

आशिषि लिङो यासुट् कित् । स्कोः संयोगाद्योरिति सलोपः ।

**क्क्ङिति च १ । १ । ५ ।**

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥

**लुङ् ३ । २ । ११० ॥**

भूतार्थे धातोर्लुङ् स्यात् ॥

**माङि[2] लुङ् ३ । ३ । १७५ ॥**

सर्वलकारापवादः ॥

**स्मोत्तरे लङ् च ३ । ३ । १७६ ॥**

---

१—भवतेः 'विधिनिमन्त्रणा—' इत्यादिसूत्रेण लिङि तस्य प्रथमपुरुषबहुवचने झ्यादेशे सार्वधातुकत्वे च तस्य 'झेर्जुस्' इति जुसादेशे 'न विभक्तौ—'इति निषेधेन सस्येत्त्वाभावे जस्येत्संज्ञालोपयोः 'यासुट् परस्मैपदेषु—' इति यासुडागमे धातोः शपि गुणावादेशयोः 'भव यास् उस्' इति जाते 'अतो येयः' इति यास इयादेशे गुणे रुत्वे विसर्गे च 'भवेयुः' इति सिद्धम् ॥ २—माङ्शब्दे उपपदे धातोर्लुङ् स्यात् ॥

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ ॥

**च्लि लुङि ३ । १ । ४३ ॥**

शबाद्यपवादः ॥

**च्लेः सिच् ३ । १ । ४४ ॥**

इचावितौ ॥

**गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७ ॥**

एभ्यः सिचो लुक् स्यात् । [1]गापाविहेणादेशपिबती गृह्येते ॥

**भूसुवोस्तिङि ७ । ३ । ८८ ॥**

भू सू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

**न माङ्योगे ६ । ४ । ७४ ॥**

अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥

**लिङ्निमित्ते लङ्[2] क्रियातिपत्तौ ३ । ३ । १३९ ॥**

---

१–'इणो गा लुङि' इति सूत्रविहितो गादेशः, पानार्थकः पाधातुरित्यर्थः ॥ २–अत्रेत्थं लकाराणां प्रयोगक्रमः । कालस्त्रिविधः; भूतो वर्तमानो भविष्यंश्च । तत्र भूतसामान्ये लुङ, वर्तमाने लट्, भविष्यत्सामान्ये लृट् । अनद्यतनभूते लङ, तत्रैवाधिकपरोक्षार्थविवक्षायां लिट् । अनद्यतनभविष्यद्विवक्षायां लुट् । विध्याशीर्भेदेन लिङ द्विविधस्तत्र विधिलिङ सार्वधातुकम्, आशीर्लिङ आर्धधातुकम् । आशीर्विध्याद्यर्थेषु लोट् । क्रियाया अनिष्पत्तौ लिङनिमित्तसद्भावे भविष्यत्काले लृङप्रयोगः, विध्याद्यर्थस्य तत्रैव सम्भवात् । लिङलोटोरपि भविष्यत्काल एव प्रयोगः । लट् लोट् लङ विधिलिङ—एषु 'शप्' 'श्यन्' 'श' 'श्नम्' आदयो भवन्ति । शेषेषु यथायथमार्धधातुककार्यम् ॥

हेतुहेतुमद्भावादि लिङ्निमित्त तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्, इत्यादि ज्ञेयम्॥ **अत** [1]सातत्यगमने॥ २॥ अतति॥

**अत[2] आदेः ७। ४। ७०॥**

अभ्यासस्यादेरतो दीर्घः स्यात्। आत। आततुः। आतुः। अतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु॥

**आडजादीनाम् ६। ४। ७२॥**

अजादेरङ्गस्याट् लुङलङलृङक्षु। आतत्। अतेत्। अत्यात्। अत्यास्ताम्। लुङि सिचि इडागमे कृते—

**अस्तिसिचोऽपृक्ते ७। ३। ९६॥**

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः॥

**इट ईटि ८। २। २८॥**

इटः परस्य सस्य लोपः स्यादीटि परे। ([3]सिज्लोप एकादेशे सिद्धो वाच्यः)। आतीत्। आतिष्टाम्॥

**सिजभ्यस्तविदिभ्यश्च ३। ४। १०९॥**

---

१—सातत्यगमनं सर्वदा गमनम्॥ २—पररूपगुणाद्येकादेशानामपवादभूतमिदं सूत्रम्। 'आत' इत्यत्र पररूपं बाधते 'आनृजे' इत्यत्र च गुणैकादेशम्॥ ३—इह 'आत् इ ई त्' इति दशायां त्रैपादिकत्वेन सिज्लोपस्यासिद्धत्वात् सकारेण व्यवधानात् सवर्णदीर्घो न प्राप्नोति, अत आह—सिज्लोप इति एकादेशे कर्तव्ये सिज्लोपो नासिद्ध इत्यर्थः॥

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस्। आतिषुः[1]। आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म। आतिष्यत्॥ **षिध** गत्याम्॥ ३॥

**ह्रस्वं लघु १।४।१०॥**

**संयोगे गुरु १।४।११॥**

संयोगे परे ह्रस्वं गुरु स्यात्॥

**दीर्घं च १।४।१२॥**

गुरु स्यात्॥

**पुगन्तलघूपधस्य च ७।३।८६॥**

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः। धात्वादेरिति सः। सेधति। षत्वम्। सिषेध॥

**असंयोगाल्लिट् कित् १।२।५॥**

असंयोगात्परोऽपिलिलिट् कित् स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः। सिषिध। सिषेध। सिषिधिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्। एवम्—**चिती** संज्ञाने[2]॥४॥ **शुच**[3] शोके॥ ५॥ **गद** व्यक्तायां वाचि[4]॥ ६॥ गदति॥

---

१–सततगमनार्थकात् 'अत' धातोर्लुङि झयादेशे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति तस्य सिजादेशे 'आडजादीनाम्' इत्याडागमे 'आटश्च' इति वृद्धौ 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशे सिच इडागमे सस्य षत्वे रुत्वे विसर्गे च 'आतिषुः' इति सिद्धम्॥ २–संज्ञानं सम्यग् ज्ञानम्, यथार्थज्ञानमिति यावत्॥ ३–शोचति, शुशोच, शोचिता, शोचिष्यति, शोचतु, अशोचत्, शोचेत्, शुच्यात्, अशोचीत्, अशोचिष्यत्॥ ४–स्पष्टवर्णोच्चारणे॥

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८ । ४ । १७ ॥**

उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णो गदादिषु परेषु ॥ प्रणिगदति ॥

**कुहोश्चुः ७ । ४ । ६२ ॥**

अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥

**अत उपधायाः ७ । २ । ११६ ॥**

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥

**णलुत्तमो वा ७ । १ । ९१ ॥**

उत्तमो णल् वा णित्स्यात् । जगाद, जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥

**अतो हलादेर्लघोः ७ । २ । ७ ॥**

हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि । अगादीत्, अगदीत् ॥ **णद** अव्यक्ते शब्दे[1] ॥ ७ ॥

**णो नः ६ । १ । ६५ ॥**

धात्वादेर्णस्य नः । णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्दनक्कनॄनृतः ॥

**उपसर्गादसमासेऽपि णोपदेशस्य ८ । ४ । १४ ॥**

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः । प्रणदति । प्रणिनदति[2] । नदति । ननाद ॥

---

१—अस्पष्टवर्णोच्चारणे, ध्वनावित्यर्थः ॥ २—अत्र 'नेर्गद—' इति णत्वम् ॥

**अत[1] एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२० ॥**

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि। नेदतुः। नेदुः॥

**थलि च सेटि ६ । ४ । १२१ ॥**

प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद, ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्, अनदीत्। अनदिष्यत्॥ **टुनदि** समृद्धौ[2]।।८॥

**आदिर्ञिटुडवः १ । ३ । ५ ॥**

उपदेशे धातोराद्या एते इतः स्युः॥

**इदितो[3] नुम् धातोः ७ । १ । ५८ ॥**

नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्॥ **अर्च** **पूजायाम्**॥ ९॥ अर्चति॥

**तस्मान्नुड् द्विहलः ७ । ४ । ७१ ॥**

---

१—लिण्निमित्तो य आदेशादिः 'कुहोश्चुः', 'अभ्यासे चर्च' इति शास्त्रकृतः, तद्भिन्नं यद् अङ्गं तदवयवस्य असंयुक्तहल्मध्यस्थस्याकारस्येत्यादिः। समन्वयो यथा——'नद्' धातोः लिटचतुसि द्वित्वहलादिशेषोत्तरम्' ननद् अतुस्' इति दशायाम्, 'ननद्' इत्यङ्गं लिण्निमित्तादेशादिभिन्नम्, तदवयवः असंयुक्तहल्मध्यस्थः अकारो द्वितीयनकारोत्तरोऽकारस्तस्यैत्त्वम्, आद्यनशब्दस्य लोपश्च॥ २—समृद्धिः सम्यगृद्धिरधिकधनधान्यादिवृद्धिः॥ ३—ह्रस्वेकार इत्संज्ञको यस्य धातोस्तस्य नुमागमः॥

द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् ॥ **व्रज** गतौ ॥ १० ॥ व्रजति ॥ वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥

**वदव्रजहलन्तस्याचः ७ । २ । ३ ॥**

एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् ॥ **कटे** वर्षावरणयोः[1] ॥ ११ ॥ कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७ । २ । ५ ॥**

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् ॥ **गुपू** रक्षणे ॥ १२ ॥

**गुपूधूपविच्छिपणिपनिभ्य आयः ३ । १ । २८ ॥**

एभ्य आयः प्रत्ययः[2] स्यात् स्वार्थे ॥

**सनाद्यन्ताः[3] धातवः ३ । १ । ३२ ॥**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ॥

**आयादय आर्धधातुके वा । ३ । १ । ३१ ॥**

---

१–वर्षो वृष्टिः, आवरणम् आच्छादनम् ॥ २–'प्रत्ययः' इत्यधिक्रियते । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' ॥ ३–सनादयो द्वादश ।

सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब् णिज्यङौ तथा ।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥

इत्युक्तेः ॥

आर्धधातुकविवक्षायामायादयो वा स्युः। (कास्यनेकाच[1] आम् वक्तव्यः)। लिटि आस्कासोराम्विधानान्मस्य[2] नेत्त्वम्॥

**अतो लोपः ६।४।४८॥**

आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके॥

**आमः २।४।८१॥**

आमः परस्य लुक्॥

**कृञ् चानुप्रयुज्यते लिटि ३।१।४०॥**

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि॥

**उरत् ७।४।६६॥**

अभ्यासऋवर्णस्यात् प्रत्यये। रपरः। हलादिः शेषः। वृद्धिः। गोपायाञ्चकार। द्वित्वात्परत्वाद्यणि प्राप्ते—

**द्विर्वचनेऽचि १।१।५९॥**

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये। गोपायाञ्चक्रतुः[3]॥

---

१—'कास् धातोः, अनेकाज्धातोश्चाम् स्याल्लिटि' इत्यर्थः॥

२—'हलन्त्यम्' इति सूत्रेण आमो मकारस्येत्संज्ञा प्राप्ता, तत्राह—आस्कासोरित्यादि। मकारस्येत्संज्ञायां मित्त्वात् 'मिदचोऽन्त्यात्—' इति नियमेनाकारतः परत्रामागमे आकारद्वयस्य सवर्णदीर्घे सत्याम्-विधानं व्यर्थमेव स्यादिति भावः॥ ३—रक्षणार्थकस्य 'गुपू' इत्यस्यानुबन्धलोपे 'भूवादयः—' इति धातुसंज्ञायाम् 'आयादय आर्धधातुके वा' इत्यनेन वैकल्पिक आयप्रत्यये तस्यार्धधातुकत्वेन तन्निमित्ते लघूपधगुणे 'गोपाय' इति जाते 'सनाद्यन्ताः—' इति धातुत्वे लिटि 'कास्यनेकाचः—' इति आम्प्रत्यये 'अतो लोपः' इति यकारोत्तराकारलोपे 'आमः' इत्यनेन लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकृञोऽनुप्रयोगे लिटस्तसादेशे तस्यातुसादेशे 'गोपायाम् कृ अतुस्' इति जाते 'इको यणचि' इति यणि द्वित्वे च प्राप्ते 'द्विर्वचनेऽचि' इति यणादेशनिषेधे द्वित्वे 'उरत्' इति अभ्यासऋकारस्याकारे रपरत्वे, 'हलादिः शेषः' इति रलोपे 'कुहोश्चुः' इति ककारस्य चकारे आमो मकारस्यानुस्वारे परसवर्णे ऋकारस्य यणि सकारस्य रुत्वे विसर्गे च 'गोपायाञ्चक्रतुः' इति। आयाभावपक्षे 'जुगुपतुः' इति॥

**एकाच उपदेशेऽनुदात्तात् ७ । २ । १० ॥**

उपदेशे[1] यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न ।

उदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्ज्सञ्ज्सृजः पञ्चदश । दान्तेषु अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यतिविनद्विन्दशद्सद्स्विद्यस्कन्द्हदः षोडश । धान्तेषु क्रुध्क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्साध्शुध्सिध्या एकादश । नान्तेषु मन्यहनी द्वौ । पान्तेषु आप्छुप्क्षिप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्णिष्शुष्श्लिष्या एकादश । सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् ।

गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपायाम्बभूव, गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥

---

१–'उपदेशे' इति देहलीदीपकन्यायेनोभयान्वयि । नेड् वशि–' इत्यतः 'न इट्' इति वर्तते । सोऽयं निषेधः 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'आर्धधातुकस्येड्वलादेः' इत्यस्यैव बाधकः, न तु 'तीषसह–'इत्यादिविहितस्येट इत्यभिप्रेत्याह– उपदेश इति ॥

**स्वरतिसूतिसूयतिधूञूदितो वा ७ । २ । ४४ ॥**

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । गोपायतु । अगोपायत । गोपायेत् । गोपाय्यात्, गुप्यात् । अगोपायीत् ॥

**नेटि ७ । २ । ४ ।**

इडादौ सिचि हलन्तस्य वृद्धिर्न । अगोपीत्, अगौप्सीत् ॥

**झलो झलि ८ । २ । २६ ॥**

झलः परस्य सस्य लोपो झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षि क्षये[1] ॥ १३ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते—

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७ । २ । १३ ॥**

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥

**अचस्तास्वत्थल्यनिटो नित्यम् ७ । २ । ६१ ॥**

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न ॥

**उपदेशेऽत्वतः ७ । २ । ६२ ॥**

उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण् न स्यात् ॥

**ऋतो भारद्वाजस्य ७ । २ । ६३ ॥**

---

१—क्षयो नाशोऽकर्मकः ।

तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते । तेन अन्यस्य स्यादेव । अयमत्र संग्रहः[1]—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

चिक्षयिथ[2], चिक्षेथ । चिक्षियथुः चिक्षिय । चिक्षाय, चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ॥

**अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ ॥**

अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥

**सिचि वृद्धिः परस्मैपदेषु ७ । २ । १ ॥**

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् ॥ **तप** संतापे[3] ॥ १४ ॥ तपति । ततापं । तेपतुः । तेपुः । तेपिथ, ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति ।

---

१–सूत्रचतुष्टयफलितार्थसंग्रह इति भावः । यो धातुः अजन्तः क्षि, जि, नी इत्यादिस्तासौ नित्यानिट् च, तस्य थलि वा इड् भवति, एवं योऽकारवान् यथा—प्रच्छ्, भ्रस्ज्, त्यज्, मस्ज् इत्यादिस्तासौ नित्यानिट् चास्ति, तस्यापि थलि वा इड् भवति, यो धातुर्ह्रस्वकारान्तो हृ, धृ प्रभृतिस्तासौ नित्यानिट् च, तस्य थलि नेट् । वमादिषु तु इड् भवत्येव । 'कृसृ–' इति सूत्रपठितेभ्यो धातुभ्यो लिटि कुत्रापि इड् न भवति । केवलं वृधातोस्थलि 'ववरिथ' इत्यत्र निपातनादिड् भवति । कृसृ–' इति सूत्रपठितधातुभिन्नेभ्योऽनिड्भ्योऽपि धातुभ्यो लिटि इड् भवत्येव ॥

२–अत्र द्वित्वादिकार्योत्तरं भारद्वाजमतेन इडागमे 'चिक्षयिथ' इति रूपम्, मतान्तरे 'अचस्तास्वत्–' इति तन्निषेधे 'चिक्षेथ' इति रूपम् ॥

३–सन्तापः क्लेशः ॥

तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥ **क्रमु** पादविक्षेपे[1] ॥ १५ ॥

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३ । १ । ७० ॥**

एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥

**क्रमः परस्मैपदेषु ७ । ३ । ३६ ॥**

क्रमो दीर्घः परस्मैपदे शिति । क्राम्यति, क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु । अक्राम्यत्, अक्रामत् । क्राम्येत्, क्रामेत् । क्रम्यात् । अक्रमीत्[2] । अक्रमिष्यत् ॥ **पा** पाने ॥ १६ ॥

**[3]पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७ । ३ । ७८ ॥**

पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥

**आत औ णलः ७ । १ । ३४ ॥**

आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥

**आतो लोप इटि च ६ । ४ । ६४ ॥**

---

१–पादविक्षेपः पादेन गमनम् ॥ २–'ह्मयन्त–इति वृद्धिनिषेधः ॥ ३–पा, पिब । घ्रा, जिघ्र । ध्मा, धम । स्था, तिष्ठ । म्ना, मन । दाण्, यच्छ । दृश्, पश्य । ऋ, ऋच्छ । सृ, धौ । शद्, शीय । सद्, सीद । इत्येवमादेशक्रमो यथासंख्यसूत्रसहकारेण बोध्यः ॥

अजाद्योरार्धधातुकयोः[1] क्ङिदिटोः परयोरातो लोपः। पपतुः। पपुः। पपिथ, पपाथ। पपथुः। पप। पपौ। पपिव। पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्॥

**एर्लिङि ६।४।६७॥**

घुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि। पेयात्। गातिस्थेति सिचो लुक्। अपात्। अपाताम्॥

**आतः ३।४।११०॥**

सिज्लुकि[2] आदन्तादेव झेर्जुस्॥

**उस्यपदान्तात् ६।१।९६॥**

अपदान्तादकारादुसि पररूपमेकादेशः। अपुः। अपास्यत्॥ **ग्लै** हर्षक्षये[3]॥ १७॥ ग्लायति॥

**आदेच उपदेशेऽशिति ६।१।४५॥**

उपदेशे एजन्तस्य धातोरात्त्वं न तु शिति। जग्लौ। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्॥

**वाऽन्यस्य संयोगादेः ६।४।६८॥**

---

१–आर्धधातुके' इत्यधिक्रियते, 'दीङो युट्—' इत्यतः 'अचि, क्ङिति' इति वर्तते। विशेषणे तदादिविधिफलितमर्थमाह–अजाद्योरिति अजादौ क्ङिति आर्धधातुके, आर्धधातुके इटि चेत्यर्थः॥ २–'झेर्जुस्' इति वर्तते। सिज्लुकि प्रत्ययलक्षणेन 'सिजभ्यस्त–'इत्यनेनैव झेर्जुसि सिद्धे 'आतः' इति सूत्रं व्यर्थं सन्नियमार्थमित्याह—सिज्लुकि इत्यादि॥ ३–हर्षक्षयो ग्लानिः॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि। ग्लेयात्, ग्लायात् ॥

**यमरमनमातां सक् च । ७ । २ । ७३ ॥**

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अग्लासीत् । अग्लास्यत् ॥ ह्वृ कौटिल्ये[1] ॥ १८ ॥ ह्वरति ॥

**ऋतश्च संयोगादेर्गुणः ७ । ४ । १० ।**

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार, जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ।।

**ऋद्धनोः स्ये ७ । २ । ७० ।**

ऋतो हन्तेश्च स्यस्येट् ह्वरिष्यति। ह्वरतु ।अह्वरत्। ह्वरेत्॥

**गुणोऽर्तिसंयोगाद्योः ७ । ४ । २९ ॥**

अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ श्रु श्रवणे ॥१९॥

**श्रुवः शृ च ३ । १ । ७४ ।**

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च[2] । शृणोति ॥

**सार्वधातुकमपित् । १ । २ । ४ ।**

अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥

---

१–कौटिल्यं वक्रव्यवहारः ॥ २–श्नुप्रत्ययशित्त्वं सार्वधातुकसंज्ञार्थम्, तत्फलं च 'सार्वधातुकमपित्' इति श्नुप्रत्ययस्य ङिद्वद्भावेन ऋकारस्य गुणाभावः ॥

**हुश्नुवोः सार्वधातुके ६ । ४ । ८७ ॥**

हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि[1] ॥

**लोपश्चास्यान्यतरस्यां म्वोः ६ । ४ । १०७ ॥**

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः । शृण्वः, शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ[2] । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव[3] । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु, शृणुतात् । शृणुताम् । शृण्वन्तु ॥

**उतश्च प्रत्ययादसंयोगपूर्वात् ६ । ४ । १०६ ॥**

असंयोगपूर्वात्प्रत्ययोतो हेर्लुक् । शृणु, शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व, अशृणुव । अशृण्म, अशृणुम । शृणुयात् । शृणुयाताम् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् ॥ **गम्लृ** गतौ ॥ २० ॥

**इषुगमियमां छः ७ । ३ । ७७ ॥**

एषां छः स्यात् शिति । गच्छति[4] । जगाम ॥

---

१-अत्र 'लोपश्चास्यान्यतरस्यां म्वोः' इति सूत्रं बाधित्वा परत्वाद्गुणः । २-'कृसृ–' इत्यादिना नित्येडभावः ॥ ३-णित्त्वाभावे गुणेऽवादेशे च कृते तत्सिद्धिः ॥ ४–अत्र छकारादेशोत्तरम् 'छे च' इति तुगागमः श्चुत्वं च बोध्यम् ॥

**गमहनजनखनघसां लोपः क्ङित्यनङि ६ । ४ । ९८ ।**

एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ॥

**गमेरिट् परस्मैपदेषु ७ । २ । ५८ ॥**

गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ॥

**पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३ । १ । ५५ ।**

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ परस्मैपदेषु । अगमत् । अगमिष्यत् ॥

इति परस्मैपदिनः ॥

---

**एध वृद्धौ ॥ १ ॥**

**टित आत्मनेपदानां टेरे ३ । ४ । ७९ ॥**

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ॥

**आतो ङितः ७ । २ । ८१ ॥**

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥

**थासः से ३ । ४ । ८० ॥**

टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। अतो गुणे। एधे। एधावहे। एधामहे॥

**इजादेश्च गुरुमतोऽनृच्छः ३।१।३६॥**

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि॥

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३॥**

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या[1] तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्॥

**लिटस्तझयोरेशिरेच् ३।४।८१॥**

लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे॥

**इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८॥**

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात्॥ एधाञ्चकृढ्वे[2]। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे॥

---

१–आम्प्रकृतिः 'एध' धातुस्तस्मात् 'एधते' इत्यादौ यथा आत्मनेपदम्, तद्वत् तस्मादनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्, 'गोपायाञ्चकार' इत्यादिपरस्मैपदे गुप्प्रभृतिधातुभ्यो यत्राम्प्रत्ययस्तत्राम्प्रकृतिभूतगुप्प्रभृतिधातुतुल्यं कृञोऽपि परस्मैपदमेव॥ २–वृद्ध्यर्थकात् 'एध' धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्यये लिटो लुकि लिट्परककृञोऽनुप्रयोगे लिटः स्थाने कृञो ञित्त्वादुभयपदे प्राप्ते 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इति नियमेन लिटः स्थाने आत्मनेपदसंज्ञकध्वमादेशे द्वित्वादिकार्ये जाते 'एधाम् चकृ ध्वम्' इति दशायाम् 'टित आत्मनेपदानाम्–'इति' टेरेत्वे 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति धस्य ढादेशे मकारस्यानुस्वारे परसवर्णे च निर्दिष्टरूपं सिद्धम्॥

**धि च ८ । २ । २५ ॥**

धादौ प्रत्यये परे सस्य लोपः। एधिताध्वे ॥

**ह एति ७ । ४ । ५२ ॥**

तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे॥

**आमेतः ३ । ४ । ९० ॥**

लोट एकारस्याम् स्यात्। एधताम्। एधेताम्। एधन्ताम्॥

**सवाभ्यां वामौ ३ । ४ । ९१ ॥**

सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः। एधस्व। एधेथाम्। एधध्वम्॥

**एत ऐ ३ । ४ । ९३ ॥**

लोडुत्तमस्य एत ऐ स्यात्। एधै। एधावहै। एधामहै॥ आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि॥

**लिङः सीयुट् ३ । ४ । १०२ ॥**

सलोपः[1]। एधेत। एधेयाताम्॥

**झस्य रन् ३ । ४ । १०५ ॥**

लिङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्॥

---

१–'लिङः सलोपोऽनन्त्यस्य' इत्यनेन सीयुट इति शेषः॥

**इटोऽत् ३ । ४ । १०६ ॥**

लिङादेशस्य इटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि ॥

**सुट् तिथोः ३ । ४ । १०७ ॥**

लिङस्तथोः सुट् । यलोपः । [2]आर्धधातुकत्वात्सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । [3]एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि । ऐधिष्ट । ऐधिषाताम् ॥

**आत्मनेपदेष्वनतः ७ । १ । ५ ॥**

[4]अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम्[5] । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ **कमु** कान्तौ[6] ॥ २ ॥

---

१–तकारस्यादिरिकार उच्चारणार्थः ॥ २–'लिङाशिषि' इति सूत्रेणेति शेषः ॥ ३–सीध्वंप्रत्ययस्य इडागमे एधमात्रस्याङ्गत्वेन इणन्ताङ्गात्परत्वाभावेन 'इणः षीध्वम्–' इति ढत्वं न भवति ॥ ४–ह्रस्वाकारभिन्नात्परस्येत्यर्थः ॥ ५–अत्र 'ऐधिस्' इति समुदायोऽङ्गसंज्ञः, तत्र सिचः सकारस्य 'धि च' इति लोपेऽपि एकदेशविकृतन्यायेन अङ्गत्वाक्षत्या 'इणः षीध्वम्–' इत्यादिना ढत्वं बोध्यम् । न च सलोपस्य स्थानिवद्भावेन इणन्तत्वाभावाद् ढत्वन्न प्राप्नोतीति वाच्यम् 'स्थानिवत्–' इति सूत्रेण आदेशप्रयुक्तवारणासंभवात् । अन्यथा 'नायकः', 'पावकः' इत्यादौ आयाद्यादेशाप्राप्तिः प्रसज्येत ॥ ६–कान्तिरिच्छा ॥

**कमेर्णिङ्**[1] **३ । १ । ३० ॥**

स्वार्थे । ङित्त्वात्तङ । कामयते ।

**अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५ ॥**

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । आयादय इति वा णिङ । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥

**विभाषेटः ८ । ३ । ७९ ॥**

इणः परो य इट् ततः परेषां षीध्वंलुङलिटां धस्य वा ढः । कामयिषीढ्वम्, कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम् ॥

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३ । १ । ४८ ॥**

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ स्यात् कर्त्रर्थे लुङि परे । अकामि अ त इति स्थिते—

**णेरनिटि ६ । ४ । ५१ ॥**

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥

**णौ चङ्युपधाया ह्रस्वः ७ । ४ । १ ॥**

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥

**चङि ६ । १ । ११ ॥**

१–णकारः 'अत उपधायाः' इति वृद्ध्यर्थः, ङकार आत्मनेपदत्वार्थः ॥

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३ ॥**

चङ्परे[1] णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥

**सन्यतः ७ । ४ । ७९ ॥**

अभ्यासस्यात इत् स्यात् सनि ॥

**दीर्घो लघोः ७ । ४ । ९४ ॥**

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । [2]अचीकमत । णिङभावपक्षे—( कमेश्च्लेश्चङ् वाच्यः ) । अचकमत । अकामयिष्यत, अकमिष्यत ॥ **अय** गतौ ॥ ३ ॥ अयते ॥

**उपसर्गस्यायतौ ८ । २ । १९ ॥**

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते ॥

---

१–'अ चकम् अ त' इत्यत्र चङ्परणिपरम् अङ्गम् 'अ चकम' इति तस्याभ्यासः 'च' इति, स च ककारोत्तराकाररूपलघुपरः, तस्याभ्यासस्य सनि परे यत्कार्यम् इत्त्वदीर्घरूपं तद् भवति । यत्र च णिनिमित्तकोऽग्लोपः 'अचकथत्' इत्यादौ तत्र न तत्कार्यम् । प्रकृते तु उपदेश एव उकारलोपो न णिनिमित्तः ॥ २–इच्छार्थकाल्लुप्तानुबन्धकात् 'कम्' इत्यस्मात् 'आयादयः' इति वैकल्पिके णिङि 'अत उपधायाः' इति वृद्धौ 'सनाद्यन्ताः–' इति धातुत्वे लुङि तादेशेऽडागमे च्लौ तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङादेशे 'णेरनिटि' इतीकारलोपे 'णौ चङ्युपधायाः–' इति उपधाह्रस्वे 'चङि' इति द्वित्वे अभ्यासकार्ये 'अ चकम् अ त' इति दशायाम् 'सन्वल्लघुनि–' इति सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे सिद्धं रूपम् ॥

**दयायासश्च ३ । १ । ३७ ॥**

दय अय आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । विभाषेटः । अयिषीढ्वम्. अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम् । आयिष्यत ॥ **द्युत** दीप्तौ ॥ ४ ॥ द्योतते ॥

**द्युतिस्वाप्योः सम्प्रसारणम् ७ । ४ । ६७ ॥**

अनयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते ॥

**द्युद्भ्यो[1] लुङि १ । ३ । ९१ ॥**

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादीत्यङ् । अद्युतत्, अद्योतिष्ट । अद्योतिष्यत ॥ एवं **श्विता** वर्णे[2] ॥ ५ ॥ **ञिमिदा** स्नेहने[3] ॥ ६ ॥ **ञिष्विदा** स्नेहनमोचनयोः[4] ॥ ७ ॥ मोहनयोरित्येके[5] । **ञिक्ष्विदा** चेत्येके ॥ **रुच** दीप्तावभिप्रीतौ[6] च ॥ ८ ॥ **घुट** परिवर्तने[7] ॥ ९ ॥ **शुभ** दीप्तौ ॥ १० ॥ **क्षुभ** संचलने[8] ॥११॥ **णभ तुभ** हिंसायाम् ॥ १२-१३ ॥ **स्रंसु भ्रंसु ध्वंसु** अवस्रंसने[9] ॥ १४-१५-१६ ॥ **ध्वंसु** गतौ च ॥ **स्रम्भु** विश्वासे ॥ १७ ॥ **वृतु** वर्तने[10] ॥१८॥ वर्तते । ववृते । वर्तिता ॥

**वृद्भ्यः स्यसनोः १ । ३ । ९२ ।**

---

१–बहुवचनमाद्यर्थम् ॥ २–वर्णो रागकरणम् । यथा प्रासादं श्वेतते, सुधादिभिरुपलिप्य श्वेतं करोतीत्यर्थः ॥ ३–स्नेहनं स्निग्धत्वकरणम् ॥ ४–मोचनं त्यागः ॥ ५–मोहनम् आकुलीकरणम् ॥ ६–दीप्तिः प्रकाशः, अभिप्रीतिः इच्छाविषयीभवनम् ॥ ७–परिवर्तनम् एकस्यैव वस्तुनः सर्वतोभावेन घर्षणम् ॥ ८–संचलनं स्वभावत्मागेन वर्तनम् ॥ ९–अवस्रंसनं स्खलनम् ॥ १०–वर्तनं सत्ता ॥

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥

**न वृद्भ्यश्चतुर्भ्यः ७ । २ । ५९ ॥**

वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत ॥ **दद** दाने ॥ १९ ॥ ददते ॥

**न शसददवादिगुणानाम् ६ । ४ । १२६ ॥**

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न । दददे । दददाते । दददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ **त्रपूष्** लज्जायाम् ॥ २० ॥ त्रपते ॥

**तॄफलभजत्रपश्च ६ । ४ । १२२ ॥**

एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥

इत्यात्मनेपदिनः ॥

---

**श्रिञ्** सेवायाम् ॥ १ ॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयितासि, श्रयितासे । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्, अश्रयत । श्रयेत्, श्रयेत । श्रीयात्, श्रयिषीष्ट । चङ्[1] । अशिश्रियत्, अशिश्रियत । अश्रयिष्यत्, अश्रयिष्यत ॥

---

१–'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन ॥

**भृञ्** भरणे[1] ॥ २ ॥ भरति, भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत्, भरेत ॥

**रिङ् शयग्लिङ्क्षु ७ । ४ । २८ ॥**

शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात् । रीङि[2] प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥

**उश्च १ । २ । १२ ॥**

ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ॥

**ह्रस्वादङ्गात् ८ । २ । २७ ॥**

सिचो लोपो झलि । अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ **हृञ्** हरणे[3] ॥ ३ ॥ हरति, हरते । जहार । जहर्थ । जह्रिव । जह्रिम । जह्रे । जह्रिषे । हर्तासि, हर्तासे । हरिष्यति, हरिष्यते । हरतु, हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात्, हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ **धृञ्** धारणे ॥ ४ ॥ धरति, धरते ॥ **णीञ्** प्रापणे ॥ ५ ॥ नयति, नयते ॥ **डुपचष्** पाके ॥ ६ ॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि, पक्तासे ॥

---

१–भरणं वस्त्रान्नादिना साहाय्यकरणं पूरणकरणं च ॥ २–'रीङ् ऋतः' इति सूत्राद् रीङोऽनुवृत्त्यैव सिद्धे प्रकृतसूत्रेण ह्रस्वरिङ्विधान-सामर्थ्यात् 'अकृतसार्वधातुकयोः–' इत्यादिना दीर्घो न, तदेव सूचयति–'रीङि–' इत्यादिना ॥ ३–हरणं प्रापणं स्तेयो नाशनं स्वीकारश्च ॥

**भज** सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्तासि, भक्तासे । भक्ष्यति, भक्ष्यते । अभाक्षीत्, अभक्त । अभक्षाताम् ॥ **यज** देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥ यजति, यजते ॥

**लिट्यभ्यासस्योभयेषाम् ६ । १ । १७ ॥**

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज ॥

**वचिस्वपियजादीनां किति ६ । १ । १५ ॥**

वचिस्वप्योर्यजादीनां[1] च संप्रसारणं स्यात् किति । ईजतुः । ईजुः । इयजिथ, इयष्ठ । ईजे । यष्टा ॥

**षढोः[2] कः सि ८ । २ । ४१ ॥**

यक्ष्यति, यक्ष्यते । इज्यात्, यक्षीष्ट । अयाक्षीत्, अयष्ट ॥ **वह** प्रापणे[3] ॥ ९ ॥ वहति, वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ॥

**झषस्तथोर्धोऽधः ८ । २ । ४० ॥**

झषः परयोस्तथोर्धः स्यान्न तु दधातेः ॥

**ढो ढे लोपः ८ । ३ । १३ ॥**

**सहिवहोरोदवर्णस्य ६ । ३ । ११२ ॥**

---

१–यजाद्या अधो निर्दिश्यन्ते–

यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि ।
ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव ॥ इति ॥

२–षस्य ढस्य च कः स्यात् सकारे परे ॥ ३–प्रापणं स्कन्धादिषु स्थापयित्वा नयनम् ॥

अनयोरवर्णस्य ओत्स्याड्ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि॥

इति भ्वादयः॥ १॥

# अथादादयः

**अद भक्षणे॥ १॥**

**अदिप्रभृतिभ्यः शपः २। ४। ७२॥**

लुक्[1] स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः॥

**लिट्यन्यतरस्याम् २। ४। ४०॥**

अदो घस्लृ वा स्याल्लिटि। जघास। उपधालोपः[2]॥

**शासिवसिघसीनां च ८। ३। ६०॥**

इण्कुभ्यां परस्यैषां सस्य षः स्यात्। घस्य चर्त्वम्। जक्षतुः[3]। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः। आदुः॥

---

१—अदादिभ्यः परस्य शपो लुक् स्यादित्यर्थः॥ २—गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यनेनेत्यर्थः॥ ३—'अद्' धातोर्लिटि तस्य तसादेशे तसोऽतुसि 'लिटचन्यतरस्याम्' इति वैकल्पिकघस्लादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासकार्य्ये 'गमहन—' इत्युपधालोपे 'जघ्स् अतुस्' इति जाते घस्य चर्त्वेन ककारे 'शासिवसि—' इति धातुसकारस्य षकारे क्षसंयोगे क्षे प्रत्ययसस्य रुत्वे विसर्गे च 'जक्षतुः' इति सिद्धम्, पक्षे 'आदतुः' इति, अत्र 'अद् अतुस्' इत्यवस्थायां द्वित्वेऽभ्यासकार्ये 'अत आदेः' इति दीर्घे कृते शेषं समानम्॥

**इडत्त्यर्तिव्ययतीनाम् ७ । २ । ६६ ॥**

अद ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्ता । अत्स्यति । अत्तु, अत्तात् । अत्ताम् । अदन्तु ॥

**हुझल्भ्यो हेर्धिः ६ । ४ । १०१ ।**

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि, अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥

**अदः सर्वेषाम् ७ । ३ । १०० ॥**

अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥

**लुङ्सनोर्घस्लृ २ । ४ । ३७ ॥**

अदो घस्लृ स्याल्लुङि सनि च । लृदित्त्वादङ् । अघसत् । आत्स्यत । **हन** हिंसागत्योः ॥ २ ॥ हन्ति ॥

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६ । ४ । ३७ ॥**

अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ॥

**अभ्यासाच्च ७ । ३ । ५५ ॥**

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात । जघनिथ, जघन्थ ।

जघ्नथुः । जघ्न । जघान, जघन[1] । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु, हतात् । हताम् । घ्नन्तु ।।

**हन्तेर्जः ६ । ४ । ३६ ।**

हौ परे[2] ।।

**असिद्धवदत्राभात् ६ । ४ । २२ ।।**

इत ऊर्ध्वमापादसमाप्तेराभीयम्,समानाश्रये तस्मिन्[3]कर्तव्ये[4]तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक्[5] । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म ।। हन्यात् । हन्याताम् । हन्युः ।।

**आर्धधातुके[6] २ । ४ । ३५ ।।**

इत्यधिकृत्य ।।

**हनो वध लिङि २ । ४ । ४२ ।।**

**लुङि च २ । ४ । ४३ ।।**

वधादेशोऽदन्तः[7] ।। आर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः। वध्यात् ।

---

१–अत्रापि णिद्वद्भावाभावे 'अभ्यासाच्च' इति कुत्वम् ।। २–'हन्' धातोर्जादेशः स्याद् हौ परे ।। ३–आभीये ।। ४–आभीयम् ।। ५–'अतो हेः' इत्यनेनेति शेषः ।। ६-यदि आर्धधातुके लिङि परे वधादेशस्तर्हि तदकारस्य 'अतो लोपः' इति लोपो न स्यात्, आर्धधातुकोपदेशे अदन्तत्वाभावात् । विषयसप्तम्यङ्गीकारे आर्धधातुकविवक्षायामेव हनो वधादेशे ततो लिङि अकारलोप इति भावः ।। ७–तेन आदेशोपदेशेऽनेकाच्त्वात् अवधीत्' इत्यत्र 'एकाचः–' इति इण्निषेधाप्रवृत्ताविडादौ सिचि 'अतो हलादेः–' इति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः ।।

वध्यास्ताम् । आदेशस्यानेकाच्त्वादेकाच इतीण्निषेधाभावादिट् । 'अतो हलादेः' इति वृद्धौ प्राप्तायाम्—

**अचः परस्मिन् पूर्वविधौ १ । १ । ५७ ॥**

परनिमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इत्यल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । अवधीत् । अहनिष्यत् ॥ **यु** मिश्रणामिश्रणयोः[1] ॥ ३ ॥

**उतो वृद्धिर्लुकि हलि ७ । ३ । ८९ ॥**

लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु, युतात् । अयौत् अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न, भाष्ये—'पिच्च[2] ङिन्न ङिच्च पिन्न' इति व्याख्यानात् । युयाताम् । युयुः । यूयात्[3] । यूयास्ताम् । यूयासुः । [4]अयावीत् । अयविष्यत् ॥ **या** प्रापणे[5] ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ।

**लङः शाकटायनस्यैव ३ । ४ । १११ ॥**

आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः[6], अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत्[7] । अयास्यत् ॥ **वा** गतिगन्धनयोः[8] ॥ ५ ॥ **भा** दीप्तौ ॥ ६ ॥

---

१—मिश्रणं मेलनं तद्विरुद्धममिश्रणम् ॥ २—'अयौत् अयौः' इत्यत्र लङो ङित्त्वाद् वृद्धिर्न स्यात्, 'युतात्, युयाः, युयाम्' एषु तिप्सिब्मिपां पित्त्वाद् वृद्धिः स्यात्, इत्याशङ्कायामाह—'भाष्ये' इति । यदौपदेशिकं पित् तद् ङिन्न भवति एवं यदौपदेशिकं ङित् तत्पिन्न भवति इति तदर्थः ॥ ३—इह अकृत्सार्वधातुकयोः—' इति दीर्घः ॥ ४—'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः ॥ ५—प्रापणं गतिर्न तु नयनम् ॥ ६—उस्यपदान्तादिति पररूपम् ॥ ७-यमरमेति सक् ॥ ८—उत्साहने च हिंसायां सूचने चापि गन्धनम् । इत्यमरः ॥

ष्णा शौचे[1] ॥ ७ ॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने[2] ॥ १२ ॥ दाप् लवने[3] ॥ १३ ॥ पा रक्षणे ॥ १४ ॥ ख्या प्रकथने ॥१५॥ अयं सार्वधातुक[4] एव प्रयोक्तव्यः ॥ विद ज्ञाने ॥ १६ ॥

**विदो लटो वा ३ । ४ । ८३ ॥**

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे— वेत्ति । वित्तः । विदन्ति ॥

**उषविदजागृभ्योऽन्यतरस्याम् ३ । १ । ३८ ॥**

एभ्यो लिटि आम्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि[5] न गुणः । विदाञ्चकार, विवेद । वेदिता । वेदिष्यति ॥

**विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३ । १ । ४१ ॥**

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने[6] न विवक्षिते ॥

**तनादिकृञ्भ्य उः ३ । १ । ७९ ॥**

---

१–शौचमत्र स्नानम् ॥ २–आदानं ग्रहणम् ॥ ३–लवनं छेदनम् ॥ ४–लटि 'ख्याति' लोटि 'ख्यातु' । लङि 'अख्यात्' । विधिलिङि 'ख्यायात्' न तु लिडादावस्य प्रयोगः ॥ ५–आम्सन्निधौ निपातनादित्यर्थः तेनाम्सन्निधान एवातो लोपस्य स्थानिवद्भावेन न गुणः । आमोऽसन्निधाने तु 'वेदिता' इत्यादौ गुणो भवत्येव ॥ ६–सूत्रे 'विदाङ्कुर्वन्तु' इति प्रथमपुरुषबहुवचनप्रयोगदर्शनादेतत्सूत्रविहितं कार्यं तत्रैव स्यान्नान्यत्र इत्यत आह—पुरुषेति । सौत्रेतिशब्देन तयोरत्राविवक्षा ॥

तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । गुणौ[1] । विदाङ्करोतु ॥

**अत उत्सार्वधातुके ६ । ४ । ११० ॥**

उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात्[2] । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु[3] । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः ॥

**दश्च ८ । २ । ७५ ॥**

धातोर्दस्य पदान्तस्य सिपि रुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥ **अस** भुवि ॥ १७ ॥ अस्ति ॥

**श्नसोरल्लोपः ६ । ४ । १११ ॥**

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

**उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८ । ३ । ८७ ॥**

उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः ॥

---

१—ऋकारस्य गुण आर्धधातुकनिमित्तः । उकारस्य गुणः सार्वधातुकनिमित्तः ॥ २—ज्ञानार्थकाद् 'विद्' धातोर्लोटि 'विदाङ्कुर्वन्तु—' इत्यादिना आम्प्रत्यये गुणाभावे लोटो लुकि लोडन्तकृञोऽनुप्रयोगे 'विदाम् कृ लोट्' इति जाते लोटस्तिबादेशे 'एरुः' इत्युत्वे शपं प्रबाध्य 'तनादिकृञ्भ्य उः' इति उप्रत्यये तस्य आर्धधातुकत्वे गुणे 'तुह्योः—' इत्यादिना तुशब्दस्य तातङादेशे 'अत उत्सार्वधातुके' इति ककारोत्तराकारस्य उत्त्वे मकारस्यानुस्वारे परसवर्णे च 'विदाङ्कुरुतात्' इति सिद्धम् ॥ ३—अत्र हलि चेति प्राप्तस्य दीर्घस्य 'न भकुर्छुराम्' इति निषेधः ॥

**अस्तेर्भूः २ । ४ । ५२ ॥**

आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु ॥

**घ्वसोरेद्धावभ्यासलोपश्च ६ । ४ । ११९ ॥**

घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च । एत्त्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्त्वं न, परेण तातङा बाधात् । एधि[1], स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत्[2] । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ॥ **इण्** गतौ ॥ १८ ॥ एति । इतः ॥

**इणो[3] यण् ६ । ४ । ८१ ॥**

अजादौ प्रत्यये परे । यन्ति ॥

**अभ्यासस्यासवर्णे ६ । ४ । ७८ ॥**

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय[4] ॥

---

१—सत्तार्थकात् 'अस्' धातोर्लोटि तस्य सिपि सेर्हित्वे शपि तस्य लुकि 'अस् हि' इति जाते, 'घ्वसोरेद्धावभ्यासलोपश्च' इति सकारस्यैत्त्वे 'श्नसोरल्लोपः' इत्यकारलोपे 'असिद्धवदत्राभात्' इति सूत्रेणैत्त्वस्यासिद्धत्वाद् हेर्धित्वे 'एधि' इति सिद्धम् । हेस्तातङादेशपक्षे 'घ्वसोः—' इत्येत्त्वं न भवति तातङादेशस्य परत्वेन बाधकत्वात् । 'श्नसोः—' इत्यकारलोपे 'स्तात्' इति रूपम् ॥ २—अत्र 'अस्तिसिचोऽपृक्ते' इतीट् ॥ ३—'इको यणचि' इति यणं बाधित्वा इयङि प्राप्ते तस्यापवादः ॥ ४—अत्र इशब्दस्य द्वित्वे 'वार्णादाङ्गं बलीयः' इति न्यायेन सवर्णदीर्घं बाधित्वा परस्यैकारस्य वृद्धौ पूर्वस्य 'अभ्यासस्यासवर्णे' इति इयङादेशः ॥

**दीर्घ इणः किति ७ । ४ । ६९ ॥**

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः[1] । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत । ऐताम् । आयन् । इयात् ॥

**एतेर्लिङि ७ । ४ । २४ ॥**

उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् । उभयत[2] आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् ? समेयात्[3] ॥

**इणो गा लुङि २ । ४ । ४५ ॥**

गातिस्थेति सिचो लुक । अगात् । ऐष्यत् ॥ **शीङ्** स्वप्ने ॥ १६ ॥

**शीङः सार्वधातुके गुणः ७ । ४ । २१ ॥**

क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥

**शीङो रुट् ७ । १ । ६ ॥**

शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत । **इङ्** अध्ययने ॥ २० ॥

---

१—द्वित्वोत्तरं परेकारस्य यणि पूर्वेकारस्य दीर्घः ॥ २—उपसर्गत्वस्य इण्धातुत्वस्योभयस्याश्रयणमत्राभीष्टमिति नान्तादिवदिति; ह्रस्वो नेति भावः ॥ ३—'सम् आङ् ईयात्' इति स्थितौ आङा सह गुणे परादिवद्भावेनैकारे इण्त्वात् प्राप्तो ह्रस्वोऽण्ग्रहणानुवर्तनान्न ॥

[1]इङिकावध्युपसर्गतो न व्यभिचरतः। अधीते। अधीयाते। अधीयते॥

**गाङ् लिटि २ । ४ । ४९ ॥**

इङो गाङ् स्याल्लिटि। अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै[2]। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्[3]। अध्यैयत। अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्। अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधीयीयाताम्। अधीयीरन्। अध्येषीष्ट॥

**विभाषा लुङ्लृङोः २ । ४ । ५० ॥**

इङो गाङ् वा स्यात्॥

**गाङ्कुटादिभ्योऽञ्णिन्ङित् १ । २ । १ ॥**

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः॥

**घुमास्थागापाजहातिसां हलि ६ । ४ । ६६ ॥**

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके। अध्यगीष्ट, अध्यैष्ट अध्यगीष्यत, अध्यैष्यत॥ **दुह प्रपूरणे**॥ २१॥ दोग्धि[4]। दुग्धः॥

---

१–इमौ धातू अध्युपसर्गं कदापि न परित्यजत इति भावः॥ २–'अधि इ इट्' इति स्थितौ 'टित आत्मनेपदानाम्—' इति टेरेत्वे, 'एत ऐ' इति 'ऐ' आदेशे, आडागमे वृद्धौ शपि, तस्य लुकि 'इङ्' धातोर्गुणायादेशयोरुपसर्गेकारस्य यणि 'अध्ययै' इति सिद्धम्॥ ३–आडागमे इयङादेशे वृद्धौ, उपसर्गस्य यणि निर्दिष्टपदं सिद्धम्॥ ४–अत्र 'दादेर्धातोर्घः' इति हस्य घः, 'झषस्तथोर्धोऽधः' इति तस्य धः इति स्मर्तव्यम्।

दुहन्ति । धोक्षि[1] । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥

**लिङ्सिचावात्मनेपदेषु १ । २ । ११ ॥**

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥

**शल इगुपधादनिटः क्सः ३ । १ । ४५ ॥**

इगुपधो यः [2]शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७ । ३ । ७३ ॥**

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध, अधुक्षत ॥

**क्सस्याचि ७ । ३ । ७२ ॥**

अजादौ तङि क्सस्य[3] लोपः । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः, अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि । अदुह्वहि, अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत ॥

---

१–'एकाचो वशो भष्–' इति दस्य भष्भावेन धः ॥ २–धातोः इत्यधिकृतं विशेष्यमादाय शल इति विशेषणेन तदन्तविधिः ॥ ३–'अलोऽन्त्यस्य' इति नियमेनान्त्यस्याकारस्यैव लोपः ॥

एवं दिह उपचये[1] ॥२२॥ लिह आस्वादने[2] ॥ २३ ॥ लेढि । लीढः[3] । लिहन्ति । लेक्षि[4] । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह, लिलिहे । लेढासि, लेढासे । लेक्ष्यति, लेक्ष्यते । लेढु । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्, अलेड् । अलिक्षत्, अलीढ, अलिक्षत । अलेक्ष्यत्, अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥

**ब्रुवः पञ्चानामादित आहो ब्रुवः ३ । ४ । ८४ ॥**

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥

**आहस्थः[5] ८ । २ । ३५ ॥**

झलि परे । चर्त्वम् । आत्थ आहथुः ॥

**ब्रुव ईट् ७ । ३ । ९३ ॥**

ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥

**ब्रुवो वचिः २ । ४ । ५३ ॥**

आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्तासि, वक्तासे । वक्ष्यति, वक्ष्यते । ब्रवीतु, ब्रूतात् ।

---

१——उपचयो वृद्धिः । देग्धि, दिग्धे । दिदेह, दिदिहे । देग्धा । धेक्ष्यति, धेक्ष्यते । देग्धु, दिग्धाम् । अधेक्, अदिग्ध । दिह्यात्, दिह्लीत । दिह्यात्, धिक्षीष्ट । अधिक्षत्, अदिग्ध, अधिक्षत । अधेक्ष्यत्, अधेक्ष्यत ॥ २–आस्वादनं स्निग्धस्य वस्तुनो जिह्वया रसानुभवः ॥ ३–'ढ्रलोपे–' इति दीर्घः ॥ ४–हस्य ढत्वे कृते 'षढोः कः सि' इति कः ॥ ५–आहो हस्य थः स्याज्झलि पर इति सूत्रार्थः ॥

ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्, अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट॥

**अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२॥**

एभ्यश्च्लेरङ् स्यात्॥

**वच उम् ७।४।२०॥**

अङि[1] परे। अवोचत्, अवोचत। अवक्ष्यत् अवक्ष्यत। (ग॰ सू॰) चर्करीतं च। चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम्॥ **ऊर्णुञ्** आच्छादने॥ २५॥

**ऊर्णोतेर्विभाषा ७।३।९०॥**

वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। (ऊर्णोतेराम्नेति वाच्यम्)॥

**न न्द्राः संयोगादयः ६।१।३॥**

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य[2]

---

१—वच उमागमोऽङि परे॥ २-नुशब्द एवात्र णत्वेन 'णु' इति श्रूयते,

नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजश्शकारश्चेषाट्टवर्गस्तवर्गजः॥

इत्यभियुक्तोक्तेः। अस्यायमर्थः-धात्ववयवझलि परे कुत्रचिदनुस्वारः कुत्रचित् पञ्चमवर्णो ङकारादिश्च दृश्येते तौ नकारजौ। अनुस्वारो यथा स्रंसु, ध्वंसु, भ्रंसु इत्यादौ। पञ्चमो यथा—अङ्क, अञ्च, लुण्ठ, मन्थ, तृम्फ इत्यादौ। चकारे परे यः शकारो दृश्यते 'ओव्रश्चू' इत्यादौ स श्चुत्वनिष्पन्नः सकारजः। रेफषकाराभ्यां परष्टवर्गस्तवर्गजः; यथा-रेफात् परः 'ऊर्णु' इति षकारात्परः टवर्गस्तवर्गजः 'ष्टु' 'ष्टा' इत्यादौ॥

द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥

**विभाषोर्णोः १ । २ । ३ ॥**

इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ, । ऊर्णुविता, ऊर्णविता । ऊर्णविष्यति, ऊर्णविष्यति । ऊर्णोतु, ऊर्णोतु । ऊर्णवानि । ऊर्णवै ॥

**गुणोऽपृक्ते ७ । ३ । ९१ ॥**

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्धयपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णुयात् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट ॥

**ऊर्णोतेर्विभाषा ७ । २ । ६ ॥**

इडादौ सिचि वा वृद्धिः परस्मैपदे परे । पक्षे गुणः । और्णावीत्[1], और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णुविष्ट, और्णविष्ट । और्णुविष्यत्, और्णविष्यत् । और्णुविष्यत, और्णविष्यत ॥

इत्यदादयः ॥ २ ॥

---

१–'ऊर्णुञ्' धातोर्लुङि 'और्णु इ स ई त्' इति दशायाम् 'ऊर्णोतेर्विभाषा' इति वृद्धिपक्षे यथाप्राप्तशास्त्रकार्ये 'और्णावीत्' इति 'विभाषोर्णोः' इति ङिद्भावपक्षे उवङादेशे 'और्णुवीत्' इति । ङिद्भावाभावपक्षे गुणे 'और्णवीत्' इति ॥

# अथ जुहोत्यादयः

हु [1]दानादनयोः ।। १ ।।

**जुहोत्यादिभ्यः श्लुः २ । ४ । ७५ ॥**

शपः श्लुः स्यात् ।।

**श्लौ ६ । १ । १० ॥**

धातोर्द्वे स्तः । जुहोति । जुहुतः ।।

**अदभ्यस्तात् ७ । १ । ४ ॥**

[2]झस्यात्स्यात् । हुश्नुवोरिति यण् । जुह्वति ॥

**भीह्रीभृहुवां श्लुवच्च ३ । १ । ३९ ॥**

एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ।

**जुसि च ७ । ३ । ८३ ॥**

इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ।। **ञिभी** भये ।। २ ।। बिभेति ।।

**भियोऽन्यतरस्याम् ६ । ४ । ११५ ॥**

इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः बिभीतः । बिभ्यति । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु, बिभितात्, बिभीतात् । अबिभेत् । बिभीयात् । भीयात् ।

---

१–दाने अदने चेत्यर्थः । इह दानं होमकरणरूपम् । अदनं भक्षणम् ।। २–अभ्यस्तात् परस्य झस्य अत् स्यात् । अत्र 'उभे अभ्यस्तम्' इति अभ्यस्त संज्ञा ।।।

अभैषीत् । अभेष्यत् ॥ ह्री लज्जायाम् ॥३॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ पॄ पालनपूरणयोः ॥ ४ ॥

**अर्तिपिपर्त्योश्च ७ । ४ । ७७ ॥**

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥

**उदोष्ठ्यपूर्वस्य ७ । १ । १०२ ॥**

अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात् ॥

**हलि च ८ । २ । ७७ ॥**

रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । पिपूर्तः । पिपुरति । पपार ॥

**शॄदॄप्रां ह्रस्वो वा ७ । ४ । १२ ॥**

एषां लिटि ह्रस्वो वा स्यात् । पप्रतुः ॥

**ॠच्छत्यॄताम् ७ । ४ । ११ ॥**

तौदादिकॠच्छेर्ॠधातोर्ॠतां च गुणो लिटि । पपरतुः । पपरुः ॥

**वॄतो[1] वा ७ । २ । ३८ ॥**

---

१—'वॄ ॠतः' इति पदच्छेदः । 'वॄ' इति निरनुबन्धकग्रहणेन 'वृङ्वृञोः' उभयोर्ग्रहणं भवति ॥

वृङ्वृञ्भ्यामृदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परीता, परिता । परीष्यति, परिष्यति । पिपर्तु । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत्[1] ॥

**सिचि च परस्मैपदेषु ७ । २ । ४०॥**

अत्र इटो न दीर्घः। अपारिष्टाम् । अपरीष्यत्, अपरिष्यत् ॥

**ओहाक्** त्यागे ॥ ५ ॥ जहाति ॥

**जहातेश्च ६ । ४ । ११६ ॥**

इद्वा स्याद्धलादौ क्ङिति सार्वधातुके । जहितः ॥

**ई हल्यघोः ६ । ४ । ११३ ॥**

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ न तु घोः । जहीतः ॥

**श्नाभ्यस्तयोरातः ६ । ४ । ११२ ॥**

अनयोरातो लोपः क्ङिति सार्वधातुके । जहति । जहौ । हाता । हास्यति । जहातु, जहितात्, जहीतात् ॥

**आ च हौ ६ । ४ । ११७ ॥**

जहातेर्हौ परे आ स्याच्चादिदीतौ । जहाहि, जहिहि, जहीहि । अजहात् । अजहुः ॥

**लोपो यि ६ । ४ । ११८ ॥**

जहातेरालोपो यादौ सार्वधातुके । जह्यात् । एर्लिङि । हेयात् । अहासीत् । अहास्यत् । **माङ्** माने[2] शब्दे च ॥ ६ ॥

---

१—'सिचि वृद्धिः—' इति वृद्धिः ॥ २—मानं परिमाणकरणम् ॥

**भृञामित् ७ । ४ । ७६ ॥**

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ । मिमीते । मिमाते । मिमते । ममे[1] । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट । अमास्त । अमास्यत ॥ **ओहाङ्** गतौ ॥ ७ ॥ जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत ॥ **डुभृञ्** धारणपोषणयोः ॥ ८ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभराञ्चकार, बभार । बभर्थ । बभृव । बभृम । बिभराञ्चक्रे, बभ्रे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात्, बिभ्रीत । भ्रियात्[2], भृषीष्ट[3] । अभार्षीत् । अभृत । अभरिष्यत्, अभरिष्यत ॥ **डुदाञ्** दाने ॥ ९ ॥ ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ, ददे । दातासि, दातासे । दास्यति, दास्यते । ददातु ॥

**दाधा घ्वदाप् १ । १ । २० ॥**

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । घ्वसोरित्येत्त्वम् । देहि । दत्तम् । अददात्, अदत्त । दद्यात्, ददीत । देयात्, दासीष्ट । अदात्[4] । अदाताम् । अदुः ॥

**स्थाघ्वोरिच्च १ । २ । १७ ॥**

अनयोरिदन्तादेशः सिच्च कित्स्यादात्मनेपदे । अदित[5] । अदास्यत्, अदास्यत ॥ **डुधाञ्** धारणपोषणयोः ॥ १० ॥ दधाति ॥

---

१–'आतो लोपः—' इत्यालोपः ॥ २–अत्र 'रिङ्शयग्लिङ्क्षु' इति रिङ्भावः ॥ ३–'उश्च' इति कित्त्वाद्गुणाभावः ॥ ४–'गातिस्था—' इति सिचो लुक् ॥ ५–इत्त्वे 'ह्रस्वादङ्गात्' इति ह्रस्वात्परत्वात्सिचः सकारस्य लोपः ॥

**[1]दधस्तथोश्च ८ । २ । ३८ ॥**

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । घ्वसोरेद्धावभ्यासलोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत ॥ **णिजिर्** शौचपोषणयोः[2] ॥ ११ ॥ ( इर इत्संज्ञा वाच्या ) ॥

**णिजां त्रयाणां गुणः श्लौ ७ । ४ । ७५ ॥**

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज, निनिजे, । नेक्ता । नेक्ष्यति, नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ७ । ३ । ८७ ॥**

लघूपधगुणो न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात्, निक्षीष्ट ॥

**इरितो वा ३ । १ । ५७ ॥**

इरितो धातोश्च्लेरङ वा परस्मैपदेषु । अनिजत्, अनैक्षीत्, अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ॥

इति जुहोत्यादयः ॥ ३ ॥

---

१—अस्मिन्सूत्रे 'दधः' इत्यनेन कृतद्विर्वचनाभ्यासकार्यस्य 'डुधाञ्' इत्यस्यैव ग्रहणं भवति न तु 'दध धारणे' इत्यस्य इति ॥ २—शौचपदेनात्र वस्त्रक्षालनं बोध्यम् ॥

## अथ दिवादयः

दिवु [1]क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ १ ॥

**दिवादिभ्यः श्यन्[2] ३ । १ । ६९ ॥**

शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दिव्यात् । अदेवीत् । अदेविष्यत् । एवं **षिवु** तन्तुसन्ताने[3] ॥ २ ॥

**नृती** गात्रविक्षेपे ॥ ३ ॥ नृत्यति । ननर्त । नर्तिता ॥

**सेऽसिचि कृतचृतच्छृदतृदनृतः ७ । २ । ५७ ॥**

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् अनर्तिष्यत्, अनर्त्स्यत् ॥ **त्रसी** उद्वेगे[4] ॥ ४ ॥ वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥

**वा जॄभ्रमुत्रसाम् ६ । ४ । १२४ ॥**

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । **शो** तनूकरणे[5] ॥ ५ ॥

---

१–क्रीडा खेलनम् । विजिगीषा जयेच्छा । व्यवहारः क्रयविक्रयरूपः । द्युतिः प्रकाशः । स्तुतिः प्रशंसा । मोदः हर्षः । मदो गर्वः । स्वप्नः शयनम् । कान्तिरत्रेच्छा न तु द्युतिस्तस्याः पृथगुपादानात् ॥ २–श्यनः शकारः सार्वधातुकसंज्ञार्थः । तस्य ङित्त्वाल्लघूपधगुणो न । नकारः स्वरार्थः ॥ ३–तन्तुसन्तानं सूचीव्यापारेण वस्त्रसंयोजनम्, सीव्यतीत्यादीनि रूपाणि ॥ ४·उद्वेगो भयम् ॥ ५–सूक्ष्मकरण इत्यर्थः ॥

**ओतः श्यनि ७ । ३ । ७१ ।।**

लोपः स्यात् । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति ।।

**विभाषा घ्राधेट्शाच्छासः २ । ४ । ७८ ।।**

एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अशात् । अशाताम् । अशुः । इट्सकौ । अशासीत् । अशासिष्टाम् । **छो** छेदने ।। ६ ।। छ्यति ।। **षो**ऽन्तकर्मणि[1] ।। ७ ।। स्यति । ससौ[2] ।। **दो**ऽवखण्डने[3] ।। ८ ।। द्यति । ददौ । देयात् । अदात् ।। **व्यध** ताडने[4] ।। ९ ।।

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६ ।।**

एषां सम्प्रसारणं स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ।। **पुष** पुष्टौ[5] ।। १० ।। पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ।। **शुष** शोषणे[6] ।। ११ ।। शुष्यति । शुशोष । अशुषत् ।। **णश** अदर्शने ।। १२ ।। नश्यति । ननाश । नेशतुः ।।

**रधादिभ्यश्च ७ । २ । ४५ ।।**

---

१–अन्तकर्म विनाशकरणम् ।। २–अत्र 'आदेच उपदेशेऽशिति' इति आत्वे 'आत औ णलः' इति णल औकारादेशः ।। ३-अवखण्डनं शकलीकरणम् ।। ४–बाणादिना पीडाकरणमत्र ताडनम् ।। ५-पुष्टिः पोषणम् ।। ६–विरसीभवने ।।

रध् नश् तृप् दृप् द्रुह मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । नेशिथ ॥

[1]मस्जिनशोर्झलि ७ । १ । ६० ॥

नुम् स्यात् । [2]ननंष्ठ । नेशिव, नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् ॥ **षूङ्** [3]प्राणिप्रसवे ॥ १३ ॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता, सोता ॥ **दूङ्** परितापे ॥ १४ ॥ दूयते ॥ **दीङ्** क्षये ॥ १५ ॥ दीयते ॥

**दीङो युडचि क्ङिति ६ । ४ । ६३ ॥**

दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । (वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । [4]दिदीये ॥

**मीनातिमिनोतिदीङां ल्यपि च ६ । १ । ५० ॥**

एषामात्वं स्याल्ल्यपि [5]चादशित्येज्निमित्ते । दाता । दास्यति । (स्थाघ्वोरित्त्वे दीङः प्रतिषेधः) । अदास्त ॥ **डीङ्** [6]विहायसा गतौ ॥ १६ ॥ डीयते । डिड्ये । डयिता ॥ **पीङ्** पाने ॥ १७ ॥ पीयते । पेता । अपेष्ट ॥ **माङ्** [7]माने ॥ १८ ॥ मायते । ममे ॥ **जनी** [8]प्रादुर्भावे ॥ १९ ॥

---

१–अनयोर्नुमागमः स्याज्झलि परे ॥ २–इडभावे नैत्त्वाभ्यासलोपौ नुमोऽनुस्वारे 'व्रश्चभ्रस्ज–' इति शस्य षत्वेन तत्सिद्धिः ॥ ३–प्राणिप्रसवो जीवजननम् ॥ ४–युटः सिद्धत्वेन न यण् ॥ ५–शिद्भिन्ने गुणवृद्धिनिमित्ते इत्यर्थः ॥ ६–आकाशेन गमने ॥ ७–मानं परिच्छेदकरणम् ॥ ८–प्रादुर्भाव उत्पत्तिः ॥

**ज्ञाजनोर्जा ७ । ३ । ७९ ॥**

अनयोर्जादेशः स्याच्छिति । जायते । [1]जज्ञे । जनिता । जनिष्यते ॥

**दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१॥**

एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥

**चिणो लुक् ६ । ४ । १०४ ॥**

चिणः परस्य लुक् स्यात् ॥

**जनिवध्योश्च ७ । ३ । ३५ ॥**

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च। अजनि, अजनिष्ट । **दीपी** दीप्तौ ॥ २० ॥ दीप्यते । दिदीपे । अदीपि, अदीपिष्ट ॥ **पद** गतौ ॥ २१ ॥ पद्यते । पेदे । पत्ता । पत्सीष्ट ॥

**चिण् ते पदः । ३ । १ । ६० ॥**

पदेश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् । अपत्सत ॥ **विद** सत्तायाम् ॥ २२ ॥ विद्यते । वेत्ता । अवित्त । **बुध** [2]अवगमने ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध । अभुत्साताम् ॥ **युध** [3]संप्रहारे ॥ २४ ॥ युध्यते । युयुधे । योद्धा । अयुद्ध ॥ **सृज** [4]विसर्गे ॥ २५ ॥ सृज्यते । ससृजे । ससृजिषे ॥

---

१–अत्र 'गमहन–' इत्युपधालोपे कृते श्चुत्वम् ॥ २–अवगमनं ज्ञानम् ॥ ३–सम्प्रहारः संग्रामकरणम् ॥ ४–यद्यपि त्यागरूपो विसर्गो धात्वर्थो निर्दिष्टस्तथापि विपूर्वकसृजधातोरेव सोऽर्थः । केवलस्य तु निर्माणमर्थः ॥

**सृजिदृशोर्झल्यमकिति ६ । १ ५८ ॥**

अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यति । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ **मृष** तितिक्षायाम्[1] ॥ २६ ॥ मृष्यति, मृष्यते । ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि । मर्षिष्यति, मर्षिष्यते ॥ **णह** बन्धने ॥ २७ ॥ नह्यति, नह्यते । ननाह । नेहिथ, ननद्ध[2] । नेहे । नद्धा । नत्स्यति । अनात्सीत्, अनद्ध ॥

इति दिवादयः ॥ ४ ॥

# अथ स्वादयः

**षुञ्** अभिषवे[3] ॥ १ ॥

**स्वादिभ्यः श्नुः ३ । १ । ७३ ॥**

शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । सुन्वः[4], सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव, सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् ॥

**स्तुसुधूञ्भ्यः परस्मैपदेषु ७ । २ । ७२ ॥**

एभ्यः सिच इट् स्यात्परस्मैपदेषु । असावीत्, असोष्ट ॥ **चिञ्** चयने[5] ॥ २ ॥ चिनोति, चिनुते ॥

१–तितिक्षा सहनम् ॥ २–अत्र 'नहो धः' इति धकारः । ३–अभिषवः स्नपनं स्नानं पीडनं सुरासंधानं च ॥ ४–अत्र 'लोपश्चास्यान्तरस्याम्–' इत्युकारलोपो वैकल्पिकः ॥ ५–चयनं राशीकरणम् ॥

**विभाषा चेः ७ । ३ । ५८ ॥**

अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च। चिकाय, चिचाय। चिक्ये, चिच्ये। अचैषीत्, अचेष्ट ॥ **स्तृञ्** आच्छादने ॥ ३ ॥ स्तृणोति, स्तृणुते ॥

**शर्पूर्वाः खयः ७ । ४ । ६१ ॥**

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते। तस्तार। तस्तरतुः[1]। तस्तरे। गुणोऽर्तीति गुणः। स्तर्यात् ॥

**ऋतश्च संयोगादेः ७ । २ । ४३ ॥**

ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट, स्तृषीष्ट। अस्तरिष्ट, अस्तृत ॥ **धूञ्** कम्पने ॥ ४॥ धूनोति धूनुते। दुधाव। स्वरतीति वेट्। दुधविथ, दुधोथ ॥

**श्र्युकः किति ७ । २ । ११ ॥**

श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न। परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे[2] प्राप्ते क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुवे। अधावीत्[3]। अधविष्ट, अधोष्ट। अधविष्यत्,। अधोष्यत्। अधविष्यताम्, अधोष्यताम्। अधविष्यत, अधोष्यत ॥

इति स्वादयः ॥ ५ ॥

---

१–अत्र 'ऋतश्च संयोगादेर्गुणः' इति गुणः ॥ २–'प्राप्तौ सत्यां निषेधः' इति नियमेनेड्विधायकसूत्रसमूहं पठित्वैव तन्निषेधकवचनानि पठनीयानि। किन्त्वेवंविदापि पाणिनिना यदष्टाध्याय्यामिण्निषेधकान्येव वचनानि प्राक् पठितानि तदनु च तद्विधायकानीति विध्यपेक्षया निषेधानां बलीयस्त्वं सूचितम्। अत एव परमपि स्वरत्यादिविकल्पं बाधित्वा प्रकृतसूत्रेण निषेधः प्राप्तो भवति। ३–'स्तुसुधूञ्भ्यः–' इति नित्यमिट्।

## अथ तुदादयः

**तुद** व्यथने[1] ॥ १ ॥

**तुदादिभ्यः शः ३ । १ । ७७ ॥**

शपोऽपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त । **णुद** प्रेरणे ॥ २ ॥ नुदति, नुदते । नुनोद । नोत्ता । **भ्रस्ज** पाके[2] ॥ ३ ॥ ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति, भृज्जते ॥

**भ्रस्जो रोपधयो रमन्यतरस्याम् ६ । ४ । ४७ ॥**

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । [3]मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे, बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । क्ङिति[4] रमागमं बाधित्वा सम्प्रसारणं [5]पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट ॥ **कृष** [6]विलेखने ॥ ४ ॥ कृषति, कृषते । चकर्ष, चकृषे ॥

---

१—व्यथनं दुःखदानम् ॥ २—पाकोऽत्र भ्राष्ट्रेऽन्नादीनां भर्जनरूपो न त्वोदनादेः पाकस्तत्र प्रयोगाभावात् ॥ ३—यद्ययं रम् आगमस्तदा रोपधयोः स्थाने न स्यात्, यदि चादेशस्तदान्त्यादचः परो न स्याद् इत्याशङ्कां समाधत्ते मित्त्वादित्यादि ॥ ४—भ्रस्जेराशीर्लिङि परत्वात् सम्प्रसारणं बाधित्वा रमागमे 'भर्ज्ज्यात्' इति स्यादत आह क्ङितीति ॥ ५—रमागमस्यावकाशः—'भर्ष्टा, भर्क्ष्यति' इति; सम्प्रसारणस्यावकाशः—'इज्यात्, उच्यात्' इति; सम्प्रसारणं भवति पूर्वविप्रतिषेधेनेति भावः ॥ ६—विलेखनं भूमिकर्षणम् ॥

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६ । १ । ५९ ॥**

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति। क्रष्टा, कर्ष्टा । कृक्षीष्ट । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः)। अक्राक्षीत्, अकार्क्षीत्,अकृक्षत् । [1]अकृष्ट । अकृक्षाताम्। अकृक्षत । क्सपक्षे—अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥ **मिल** संगमे[2] ॥ ५ ॥ मिलति, मिलते । मिमेल । मेलिता । अमेलीत् ॥ **मुच्लृ** मोचने ॥ ६ ॥

**शे मुचादीनाम् ७ । १ । ५९ ॥**

मुच्लिप्विद्लुप्सिच्कृत्खिद्पिशां नुम् स्यात् शे परे। मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत्, अमुक्त। अमुक्षाताम् ॥ **लुप्लृ** छेदने ॥ ७ ॥ लुम्पति, लुम्पते । लोप्ता। अलुपत्, अलुप्त ॥ **विद्लृ** लाभे ॥ ८ ॥ विन्दति, विन्दते। विवेद, विविदे । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट्। परिवेत्ता[3] ॥ **षिच** क्षरणे ॥ ९ ॥ सिञ्चति, सिञ्चते ॥

**लिपिसिचिह्वश्च ३ । १ । ५३ ॥**

एभ्यश्च्लेरङ् स्यात् । असिचत् ॥

**आत्मनेपदेष्वन्यतरस्याम् ३ । १ । ५४ ॥**

लिपिसिचिह्वः परस्य च्लेरङ वा । असिचत, असिक्त॥ **लिप** उपदेहे ॥ १० ॥ उपदेहो वृद्धिः । लिम्पति, लिम्पते। लेप्ता । अलिपत्, अलिपत, अलिप्त ॥

इत्युभयपदिनः ।

---

१—अत्र लिङ्सिचाविति कित्वादम् न ॥ २—सङ्गमो मेलनम्॥ ३—ज्येष्ठं परित्यज्य दाराग्निग्राही 'परिवेत्ता' उच्यते ॥

**कृती** छेदने ॥ ११ ॥ कृन्तति । चकर्त । कर्तिता । कर्तिष्यति[1], कर्त्स्यति । अकर्तीत् ॥ **खिद** परिघाते[2] ॥ १२ ॥ खिन्दति । चिखेद । खेत्ता ॥ **पिश** अवयवे[3] ॥ १३ ॥ पिंशति । पेशिता । **ओव्रश्चू** छेदने ॥१४॥ वृश्चति । [4]वव्रश्च । वव्रश्चिथ, वव्रष्ठ[5] । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् ॥ **व्यच** व्याजीकरणे[6] ॥ १५ ॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्[7], अव्यचीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते अनसीति[8] पर्युदासेन कृन्मात्रविषयत्वात् ॥ **उछि** उञ्छे ॥ १६ ॥ उञ्छति ।

'उञ्छः कणश आदानं कणिशाद्यर्जनं[9] शिलम् ।'

इति यादवः । **ऋच्छ** गतीन्द्रियप्रलयमूर्तिभावेषु[10] ॥१७॥ ऋच्छति । ऋच्छत्यृतामिति गुणः[11] । द्विहल्ग्रहणस्यानेकहलुप-लक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ **उज्झ** उत्सर्गे[12] ॥ १८ ॥ उज्झति ॥ **लुभ** विमोहने ॥ १९ ॥ लुभति ॥

**तीषसहलुभरुषरिषः ७ । २ । ४८ ॥**

---

१–अत्र सेऽसिचि–' इति इड्विकल्पः ॥ २–परिघातो दैन्यम् ॥ ३–अवयवः पृथक्करणम् ॥ ४–लिट्यभ्यासस्येति सम्प्रसारणं—रेफस्य ऋकारः । 'उरत्' । तस्य 'अचः परस्मिन्' इति स्थानिवद्भावान्न सम्प्रसारणे सम्प्रसारणमिति वस्योत्वं न ॥५ श्चुत्वस्यासिद्धत्वात्संयोगादिलोपे 'व्रश्च–' इति षत्वे ष्टुत्वे च कृते सिद्ध्यति ॥ ६–व्याजीकरणं छद्मकरणम् ॥ ७–'अतो हलादेर्लघोः' इति वृद्धिः ॥ ८–अत्र 'अनसि' इति पर्युदासः, तथा च अस्भिन्ने अस्सदृशे प्रत्यये परे व्यचेः कुटादित्वमित्यर्थः । एवं च 'गाङ्कुटादिभ्यः–' इति सूत्रेण तासादेर्ङिद्वद्भावे 'ग्रहिज्या–' इति सम्प्र-सारणे 'विचिता' इत्यादि भविष्यति इति चेन्न; यतः सादृश्यं कृत्त्वेन गृह्यते तथा च अस्भिन्नकृत्प्रत्यये परे एव तत्प्रवृत्तिरिति भावः ॥ ९–कणिशं सस्यमञ्जरी ॥ १०-इन्द्रियप्रलयः स्वापः । मूर्तिभावः काठिन्यम् ॥ ११–'तस्मान्नुड् द्विहलः' इत्यत्रेति शेषः ॥ १२–उत्सर्गः त्यागः ॥

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता, लोब्धा । लोभिष्यति ॥ **तृप तृम्फ** तृप्तौ ॥ २०-२१ ॥ तृपति । ततर्प । तर्पिता । अतर्पीत् ॥ तृम्फति । ( शे तृम्फादीनां नुम् वाच्यः ) । आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् ॥ **मृड पृड** सुखने ॥ २२-२३ ॥ मृडति । पृडति ॥ **शुन** गतौ ॥ २४ ॥ शुनति ॥ **इषु** इच्छायाम् ॥ २५ ॥ इच्छति । एषिता[1], एष्टा । ऐषिष्यति । इष्यात् । ऐषीत् ॥ **कुट** कौटिल्ये ॥ २६ ॥ गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट, चुकुट[2] । कुटिता ॥ **पुट** संश्लेषणे[3] ॥ २७ ॥ पुटति । पुटिता ॥ **स्फुट** विकसने[4] ॥ २८ ॥ स्फुटति । स्फुटिता । **स्फुर स्फुल** संचलने ॥ २९-३० ॥ स्फुरति । स्फुलति ॥

**स्फुरतिस्फुलत्योर्निर्निविभ्यः ८ । ३ । ७६ ॥**

षत्वं वा स्यात् । निःष्फुरति[5] निःस्फुरति ॥ **णू** स्तवने ॥३१॥ [6]परिणूतगुणोदयः । नुवति । नुनाव । नुविता ॥ **टुमस्जो** शुद्धौ ॥ ३२ ॥ मज्जति । ममज्ज । ममज्जिथ । मस्जिनशोरिति नुम् । ( मस्जेरन्त्यात्पूर्वो नुम्वाच्यः ) । संयोगादिलोपः । ममङ्क्थ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् ।

---

१–अत्र 'तीषसह–' इति वेट् ॥ २–'णलुत्तमो वा' इति णिद्विकल्पः ॥ ३–संश्लेषणं पदार्थद्वयमेलनम् ॥ ४–विकसनं विकासः ॥ ५–'शर्परे खरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन वा विसर्गलोपे 'निष्फुरति' इति, विसर्गपक्षे 'वा शरि' इति विकल्पेन विसर्गस्य विसर्गे 'निःष्फुरति' इति, तदभावपक्षे 'विसर्जनीयस्य सः' इति सकारे तस्य ष्टुत्वेन षकारे 'निष्ष्फुरति' इति रूपत्रयं सिद्धम् ॥ ६–'णू' धातुर्दीर्घान्त इत्यत्र मानं दर्शितम्, अन्यथा 'परिणुत' इति स्यात् ॥

अमाङ्क्षुः ।। **रुजो** [1]भङ्गे ।। ३३ ।। रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् ।। **भुजो** कौटिल्ये ।। ३४ ।। रुजिवत् ।। **विश** प्रवेशने ।। ३५ ।। विशति ।। **मृश** आमर्शने ।। ३६ ।। आमर्शनं स्पर्शः ।। अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । अम्राक्षीत् । अमार्क्षीत्, अमृक्षत् ।। **षद्लृ** [2]विशरणगत्यवसादनेषु ।। ३७।। सीदतीत्यादि ।। **शद्लृ** [3]शातने ।। ३८ ।।

**शदेः शितः १ । ३ । ६० ।।**

शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् ।। **कॄ** विक्षेपे ।। ३९ ।।

**ॠत इद्धातोः ७ । १ । १०० ।।**

ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चकरतुः । चकरुः । करीता, करिता । कीर्यात् ।।

**किरतौ लवने ६ । १ । १४० ।।**

उपात्किरतेः सुट् छेदने । उपस्किरति । ( अडभ्यासव्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम् ) उपास्किरत् । उपचस्कार ।।

**हिंसायां प्रतेश्च ६ । १ । १४१ ।।**

उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति ।। **गॄ** निगरणे[4] ।। ४० ।।

---

१—भङ्गो विकलीकरणम् ।। २—विशरणमवयवानां विभागः, अवसादनं दुःखम् ।। ३—शातनं विशरणम् ।। ४—निगरणं मुखे ग्रासप्रक्षेपः ।।

**अचि विभाषा** ८ । २ । २१ ॥

गिरते रेफस्य लो वाऽजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । [1]गरीता, गरिता, गलीता, गलिता ॥ **प्रच्छ** [2]ज्ञीप्सायाम् ॥ ४१ ॥ ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत ॥ **मृङ्** प्राणत्यागे ॥ ४२ ॥

**म्रियतेर्लुङ्लिङोश्च** १ । ३ । ६१ ॥

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ नान्यत्र । रिङ । इयङ । म्रियते । ममार । मर्ता । मरिष्यति । मृषीष्ट । अमृत ॥ **पृङ्** व्यायामे ॥ ४३ ॥ प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । **जुषी** प्रीतिसेवनयोः ॥ ४४ ॥ जुषते । जुजुषे ॥ **ओविजी** भयचलनयोः ॥ ४५ ॥ प्रायेणायमुत्पूर्वः । उद्विजते ।

**विज इट्** १ । २ । २ ॥

विजेः पर इडादिप्रत्ययो ङिद्वत् । उद्विजिता ॥

इति तुदादयः ॥ ६ ॥

---

## अथ रुधादयः

**रुधिर्** आवरणे ॥ १ ॥

---

१–'वृतो वा' इति वैकल्पिको दीर्घः ॥ २–ज्ञीप्सा जिज्ञासा ॥

**¹रुधादिभ्यः श्नम् ३ । १ । ७८ ॥**

शपोऽपवादः । रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः² । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध, रुरुधे । रोद्धासि, रोद्धासे । रोत्स्यति, रोत्स्यते । रुणद्धु, रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणः । अरुणत्, अरुणद् । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात्, रुन्धीत । रुध्यात्, रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्, अरोत्स्यत ॥ **भिदिर्** विदारणे³ ॥२॥ **छिदिर्** द्वैधीकरणे⁴ ॥३॥

---

१–अनुकार्यस्य स्पष्टज्ञानाय 'रुधादिभ्यः–' इत्यत्र जश्त्वं न कृतम्, साधुत्वे च सौत्रत्वं हेतुः' श्नमः शकारः 'श्नसोरल्लोपः' इति विशेषणार्थो न तु सार्वधातुकसंज्ञार्थः फलाभावात्: 'रुणद्धि' इत्यत्र रुमात्रस्याङ्गत्वाभावेन गुणाप्रवृत्तेः, मित्त्वम्, 'मिदचोऽन्त्यात्परः' इत्यस्य प्रवृत्त्यर्थम् ॥ २–अत्र रुन धृतस् इत्यवस्थायाम् 'श्नसोरल्लोपः' इत्यकारलोपे 'झषस्तथोः–' इत्यनेन तसस्तकारस्य धत्वे नकारस्य 'नश्चा–' इत्यनुस्वारे 'झलां जश् झशि' इति धातुधकारस्य दकारे 'अनुस्वारस्य ययि'–इति परसवर्णेन नकारे 'झरो झरि–' इति पाक्षिकदकारलोपे रुत्वे विसर्गे च 'रुन्धः' इति । लोपाभावे रुन्द्धः इत्यपि रूपम् । एवं 'रुन्धे' इत्यादावपि प्रक्रिया ज्ञेया ।। ३–विदारणं भेदनम्, भिनत्ति, भिन्ते, बिभेद, बिभिदे, भेत्ता, भेत्स्यति, भेत्स्यते, भिनत्तु, भिन्ताम्, अभिनत्, अभिन्त, भिन्द्यात्, भिन्दीत, भिद्यात्, भित्सीष्ट, अभैत्सीत्, अभिदत्, अभित्त, अभेत्स्यत्, अभेत्स्यत ।। ४–एकस्य वस्तुनश्छेदनेन खण्डद्वयकरणम् ॥

**युजिर्** योगे[1] ॥ ४ ॥ **रिचिर्** विरेचने[2] ॥ ५ ॥ रिणक्ति, रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक् । अरिचत्, अरैक्षीत्, अरिक्त ॥ **विचिर** पृथग्भावे[3] ॥ ६ ॥ विनक्ति, विङ्क्ते ॥ **क्षुदिर्** संपेषणे[4] ॥ ७ ॥ क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत्, अक्षुत्त ॥ **उच्छृदिर्** दीप्तिदेवनयोः[5] ॥ ८ ॥ छृणत्ति, छृन्ते । चच्छर्द । सेऽसिचीति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट ॥ **उतृदिर्** हिंसानादरयोः[6] ॥ ९ ॥ तृणत्ति, तृन्ते ॥ **कृती** वेष्टने ॥ १० ॥ कृणत्ति । **तृह हिंसि** हिंसायाम् ॥ ११-१२ ॥

**तृणह इम् ७ । ३ । ९२ ॥**

तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥

**श्नान्नलोपः ६ । ४ । २३ ॥**

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥

**तिप्यनस्तेः ८ । २ । ७३ ॥**

पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । ससजुषोरुरित्यस्यापवादः । अहिनत्, अहिनद् । अहिंस्ताम् । अहिंसन् ॥

**सिपि धातो रुर्वा ८ । २ । ७४ ॥**

---

१—योगः संयोजनम् ॥ २—विरेचनं पृथक्करणम् ॥ ३—पृथग्भावो विभागकरणम् ॥ ४—सम्पेषणं चूर्णीकरणम् ॥ ५—देवनं शोकः ॥ ६—अनादरोऽपमानः ॥

पदान्तस्य धातोः सस्य रुः स्याद्वा, पक्षे दः[1]। अहिनः, अहिनत्, अहिनद् ॥ **उन्दी** क्लेदने[2] ॥ १३ ॥ उनत्ति। उन्तः। उन्दन्ति। उन्दाञ्चकार। औनत्, औनद्। औन्ताम्। औन्दन्। औनः, औनत्, औनद्। औनदम् ॥ **अञ्जू** व्यक्तिम्रक्षणकान्ति-गतिषु[3] ॥ १४ ॥ अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ, आनङ्क्थ। अञ्जिता, अङ्क्ता। अङ्ग्धि। अनजानि। आनक् ॥

**अञ्जेः सिचि ७।२।७१ ॥**

अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत् ॥ **तञ्चू** संकोचने[4] ॥ १५ ॥ तनक्ति। तञ्चिता, तङ्क्ता ॥ **ओविजी** भयचलनयोः ॥ १६ ॥ विनक्ति। विङ्क्तः। विज इडिति ङित्वम्। विविजिथ। विजिता। अविनक्। अविजीत् ॥ **शिष्लृ** विशेषणे[5] ॥ १७ ॥ शिनष्टि। शिंष्टः। शिंषन्ति। शिनक्षि। शिशेष। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। शिण्ड्ढि[6]। शिनषाणि। अशिनट्। शिंष्यात्। शिष्यात्। अशिषत् ॥ एवं

---

१—'झलां जशोऽन्ते' इत्यनेन ॥ २—क्लेदनमार्द्रीकरणम् ॥ ३—व्यक्तिर्विवेचनम्, म्रक्षणमभ्यङ्गविलेपनम् ॥ ४—संकोचनं प्रसृतस्य वस्तुनोऽल्पदेशे करणम् ॥ ५—विपूर्वकस्यैव 'शिष्' धातोरितरव्यावृत्तिकरणरूपं विशेषणमर्थः केवलस्य त्ववशेषोऽर्थः ॥ ६—'शिन्ष् हि' इत्यवस्थायाम् 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वं ष्टुत्वेन तस्य ढकारे नस्यानुस्वारे षस्य जश्त्वेन डकारे परसवर्णेनानुस्वारस्य णकारे 'झरो झरि—' इति पाक्षिके ढस्य लोपे 'शिण्ढि' इति, लोपाभावपक्षे 'शिण्ड्ढि' इति ॥

**पिष्लृ**[1] संचूर्णने ॥ १८ ॥ **भञ्जो** आमर्दने[2] ॥ १९ ॥ श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् ॥ **भुज** पालनाभ्यवहारयोः[3] ॥ २० ॥ भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥

**भुजोऽनवने**[4] **१ । ३ । ६६ ॥**

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥ **ञिइन्धी**[5] दीप्तौ ॥ २१ ॥ इन्द्धे । इन्धाते । इन्धते । इन्त्से । इन्द्ध्वे । इन्धाञ्चक्रे । इन्धिता । इनधाम् । इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः ॥ **विद** विचारणे ॥ २२ ॥ विन्त्ते । वेत्ता ॥

इति रुधादयः ॥ ७ ॥

## अथ तनादयः

**तनु** विस्तारे ॥ १ ॥

**तनादिकृञ्भ्य**[6] **उः ३ । १ । ७९ ॥**

शपोऽपवादः । तनोति, तनुते । ततान, तेने । तनितासि, तनितासे । तनिष्यति, तनिष्यते । तनोतु, तनुताम् । अतनोत्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतानीत्, अतनीत् ॥

---

१—पिनष्टि । पिपेष । पेष्टा । पेक्ष्यति । पिनष्टु । अपिनट् । पिंष्यात् । पिष्यात् । अपिषत् । अपेक्ष्यत् इति ॥ २-आमर्दनं मोटनम् ॥ ३-अभ्यवहारो भक्षणम् ॥ ४—अवनं रक्षणं तद्भिन्नेऽर्थे 'भुज' धातोरात्मनेपदं स्यात् ॥ ५—'आदिर्ञिटुडवः' इति ञे रित्संज्ञा ॥ ६—तनादेः कृञश्च उः प्रत्ययः स्यात् ॥

**तनादिभ्यस्तथासोः २ । ४ । ७९ ॥**

तनादेः सिचो वा लुक् स्यात्तथासोः । [1]अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत्, अतनिष्यत ॥ **षणु दाने** ॥ २ ॥ सनोति, सनुते ॥

**ये विभाषा ६ । ४ । ४३ ॥**

जनसनखनामात्वं वा यादौ क्ङिति । सायात्, सन्यात् ॥

**जनसनखनां सञ्झलोः ६ । ४ । ४२ ।**

एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति । असात, असनिष्ट । असाथाः, असनिष्ठाः ॥ **क्षणु हिंसायाम्** ॥ ३ ॥ क्षणोति, क्षणुते ॥ ह्मयन्तेति न वृद्धिः । अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ॥ **क्षिणु च**[2] ॥ ४ ॥ [3]उप्रत्यये लघूपधस्य गुणो वा । क्षेणोति, क्षिणोति । क्षेणिता । अक्षेणीत्, अक्षित, अक्षेणिष्ट ॥ **तृणु** अदने ॥ ५ ॥ तृणोति, तर्णोति; तृणुते, तर्णुते ॥ **डुकृञ्** करणे ॥ ६ ॥ करोति ॥

**अत उत्सार्वधातुके । ६ । ४ । ११० ॥**

उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात् सार्वधातुके क्ङिति । कुरुतः ॥

**न भकुर्छुराम् ८ । २ । ७९ ॥**

भस्य कुर्छुरोपधाया न दीर्घः । कुर्वन्ति ॥

**नित्यं करोतेः ६ । ४ । १०८ ॥**

---

१–अत्र 'अनुदात्तोपदेश–' इति नकारलोपः ॥ २–चकारेण पूर्वधात्वर्थो हिंसानुकृष्यते ॥ ३–'संज्ञापूर्वको विधिरनित्यः' इति वादिमते गुणाभावः । तदनङ्गीकर्तृमते गुणः स्यादेव ॥

करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः। कुर्वः। कुर्मः। कुरुते। चकार, चक्रे। कर्तासि, कर्तासे। करिष्यति, करिष्यते। करोतु, कुरुताम्। अकरोत्, अकुरुत॥

**ये च ६।४।१०९॥**

कृञ उलोपो यादौ प्रत्यये परे। कुर्यात्, कुर्वीत। क्रियात्। [1]कृषीष्ट। अकार्षीत्, अकृत। अकरिष्यत्। अकरिष्यत॥

**सम्परिभ्यां करोतौ भूषणे ६।१।१३७॥**

**समवाये च ६।१।१३८॥**

सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे संघाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतं भक्षा इति ज्ञापकात्॥

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९॥**

उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधो[2] दकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते॥ **वनु** याचने॥ ७॥ वनुते। ववने॥ **मनु** अवबोधने॥ ८॥ मनुते मेने। मनिता। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट। अमत, अमनिष्ट। अमनिष्यत।

इति तनादयः॥ ८॥



---

१—'उश्च' इति कित्त्वेन गुणो न॥ २—एधशब्दोऽत्र सान्तनपुंसकलिङ्गः काष्ठवाची। दकशब्द उदकपर्यायः। क्वाथादौ काष्ठं जलस्य गुणमाधत्ते इत्यर्थः॥

## अथ क्र्यादयः

डुक्रीञ् द्रव्यविनिमये[1] ॥ १ ॥

### क्र्यादिभ्यः श्ना ३ । १ । ८१ ॥

शपोऽपवादः । क्रीणाति । ई हल्यघोः । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिय । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । अक्रीणात्, अक्रीणीत । क्रीणीयात्, क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्ट । अक्रेष्यत्, अक्रेष्यत ॥ **प्रीञ्** तर्पणे[2] कान्तौ च ॥ २ ॥ प्रीणाति, प्रीणीते ॥ **श्रीञ्** पाके ॥ ३ ॥ श्रीणाति, श्रीणीते ॥ **मीञ्** हिंसायाम् ॥ ४ ॥

### हिनुमीना ८ । ४ । १५ ॥

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात् । प्रमीणाति, प्रमीणीते । मीनातीत्यात्त्वम् । ममौ । मिम्यतुः[3] । ममिथ, ममाथ[4] । मिम्ये । माता । मास्यति । मीयात्,

---

१–द्रव्यविनिमयो वस्त्वन्तरदानपूर्वकं वस्त्वन्तरग्रहणम् । लोके त्वेवं ज्ञेयम्—केवलं क्रीधातुः क्रये प्रयोक्तव्यो विपूर्वकस्तु विक्रये ।ः २–तर्पणं तृप्तिः सन्तुष्टिरिति यावत् ॥ ३–'असंयोगात्–' इति सूत्रेण अतुसः कित्त्वेन एज्निमित्तत्वाभावान्नात्त्वम् ॥ ४–इट्पक्षे 'आतो लोपः' इत्याकारलोपः ।

मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ।। षिञ् बन्धने ।। ५ ।। सिनाति, सिनीते । सिषाय, सिष्ये । सेता ।। स्कुञ् आप्लवने[1] ।। ६ ।।

**स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३ । १ ।८२।।**

चात् श्ना । स्कुनोति, स्कुनाति । स्कुनुते, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट ।। स्तन्भ्वादयश्चत्वारः सौत्राः[2] सर्वे रोधनार्थाः परस्मैपदिनः ।।

**हलः श्नः[3] शानज्झौ ३ । १ । ८३ ।।**

हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान[4] ।।

**जृस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८।।**

च्लेरङ् वा स्यात् ॥

**स्तन्भेः ८ । ३ । ६७ ।।**

स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् ।। युञ् बन्धने ॥७॥ युनाति, युनीते । योता ।। क्नूञ् शब्दे ।।८।। क्नूनाति, क्नूनीते । क्नविता । द्रूञ् हिंसायाम् ॥ ९ ॥ द्रूणाति, द्रूणीते । पूञ् पवने ॥ १० ॥

**प्वादीनां ह्रस्वः ७ । ३ । ८० ।।**

---

१–आप्लवनमत्र गतिविशेषः ।। २–सूत्रपठिता इत्यर्थः । रोधनमवरोधः ।। ३–अत्र 'श्नः' इति श्नाशब्दस्य षष्ठ्येकवचने रूपम् । 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागादधातोरप्याकारलोपः ।। ४–'स्तन्भ्' धातोर्लोटि 'स्तन्भुस्तुन्भु–' इत्यादिना श्नाप्रत्ययपक्षे 'स्तन्भ् ना हि' इत्यवस्थायां नाशब्दस्य 'हलः श्नः–' इति शानजादेशे शित्वात्सार्वधातुकत्वे अपित्त्वेन ङित्त्वे 'अनिदिताम्' इति नलोपे 'अतो हेः' इति हेलुकि 'स्तभान' इति सिद्धम् ।।

पूञ्लूञ्स्तॄञ्कॄञ्वॄञ्धूञ्शॄपॄवॄभॄमॄदॄजॄझॄधॄनॄवॄॠगॄज्यारीली-
ब्लीप्लीनां चतुर्विंशतेः शिति ह्रस्वः। पुनाति, पुनीते। पविता॥
दॄ विदारणे॥ ११॥ दृणाति, दृणीते॥ लूञ् छेदने॥ १२॥
लुनाति, लुनीते॥ स्तॄञ् आच्छादने॥ १३॥ स्तृणाति।
शर्पूर्वाः खयः। तस्तार। तस्तरतुः[1]। तस्तरे। स्तरीता,
स्तरिता। स्तृणीयात्, स्तृणीत। स्तीर्यात्॥

**लिङ्सिचोरात्मनेपदेषु ७। २। ४२॥**

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि॥

**न लिङि ७। २। ३९॥**

वॄत इटो लिङि न दीर्घः। स्तरिषीष्ट। उश्चेति कित्त्वम्।
स्तीर्षीष्ट। सिचि च परस्मैपदेषु। अस्तारीत्। अस्तारिष्टाम्।
अस्तारिषुः। अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट॥ कॄञ् हिंसायाम्
॥ १४॥ कृणाति, कृणीते। चकार, चकरे॥ वॄञ् वरणे॥१५॥
वृणाति, वृणीते। ववार, ववरे। वरिता, वरीता। उदोष्ठ्येत्यु-
त्त्वम्। वूर्यात्। वरिषीष्ट, वूर्षीष्ट। अवारीत्। अवारिष्टाम्।
अवरिष्ट, अवरीष्ट, अवूर्ष्ट॥ धूञ् कम्पने॥ १६॥ धुनाति,
धुनीते। धविता[2], धोता। अधावीत्[3]। अधविष्ट, अधोष्ट॥
ग्रह उपादाने[4]॥ १७॥ गृह्णाति, गृह्णीते। जग्राह, जगृहे॥

---

१–अत्र 'ऋच्छत्यॄताम्' इति गुणः॥ २–अत्र 'स्वरतिसूति–' इत्यादिना इड्विकल्पः॥ ३–अत्र 'स्तुसुधूञ्भ्यः–' इति नित्यमिट्॥
४–उपादानं ग्रहणम्॥

**ग्रहोऽलिटि दीर्घः ७ । २ । ३७ ॥**

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । हलः श्नः शानज्झाविति श्नः शानजादेशः । गृहाण । गृह्यात्, ग्रहीषीष्ट[1] । ह्म्यन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् ॥ **कुष** निष्कर्षे[2] ॥ १८ ॥ कुष्णाति । कोषिता ॥ **अश** भोजने ॥ १९ ॥ अश्नाति[3] । आश । अशिता । अशिष्यति । अश्नातु । अशान ॥ **मुष** स्तेये[4] ॥ २० ॥ मोषिता । मुषाण ॥ **ज्ञा** अवबोधने ॥ २१ ॥ जज्ञौ ॥ **वृङ्** संभक्तौ[5] ॥ २२ ॥ वृणीते । ववृषे । ववृढ्वे । वरिता, वरीता । अवारीष्ट । अवरिष्ट, अवृत ॥

इति क्र्यादयः ॥ ६ ॥

---

# अथ चुरादयः

**चुर** स्तेये ॥ १ ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३ । १ । २५ ।**

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्[6] । चुरादिभ्यस्तु स्वार्थे ।

---

१—'न लिङि' इति निषेधस्तु न, 'वृतो वा' इत्यस्यैव स बाधकः । एवम् 'अग्रहीष्टाम्' इत्यत्र 'सिचि च परस्मैपदेषु' इति निषेधोऽपि नेति बोध्यम् ॥ २—निष्कर्षोऽन्तर्गतस्य बहिर्निस्सारणम् ॥ ३—अत्र 'शात्' इति निषेधान्न श्चुत्वम् ॥ ४—स्तेयं चौर्यम् ॥ ५—संभक्तिः पूजा ॥ ६—प्रपञ्चो ग्रन्थविस्तारः ॥

[१]पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्शबादि। गुणायादेशौ। चोरयति॥

**णिचश्च १ । ३ । ७४ ॥**

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। चोरयते। चोरयामास। चोरयिता। [२]चोर्यात्, चोरयिषीष्ट। णिश्रीति चङ्। णौ चङीति ह्रस्वः। चङीति द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासस्य दीर्घः। अचूचुरत्, अचूचुरत॥ **कथ** वाक्यप्रबन्धे ॥ २ ॥ [३]अल्लोपः।

**अचः परस्मिन्पूर्वविधौ १ । १ । ५७ ॥**

अल्विध्यर्थमिदम्। [४]परनिमित्तोऽजादेशः स्थानिवत् स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये। इति स्थानिवत्त्वान्नोपधावृद्धिः। कथयति। [५]अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत्॥ **गण** संख्याने[६] ॥ ३ ॥ गणयति॥

**ई च गणः ७ । ४ । ९७ ॥**

गणयतेरभ्यासस्य ई स्याचङ्परे णौ [७]चादत्। अजीगणत्, अजगणत्॥ इति चुरादयः॥ १०॥

---

१–णिच आर्धधातुकत्वादिति शेषः॥ २–णेर्लोपे 'निमित्तापाये–' इति न्यायेन गुणाभावस्तु न, प्रत्ययलक्षणेन निमित्तस्य णिचः परत्वसद्भावात्॥ ३–'अतो लोपः' इत्यनेन॥ ४–'कथयति' इत्यत्र परं णिच् तन्निमित्तोऽजादेशोऽकारस्य लोपरूपः, स स्थानिवत्; स्थानिभूतोऽच् थकारोत्तराकारस्ततः पूर्वत्वेन दृष्टः ककारोत्तराकारस्तस्य विधिर्वृद्धिरूपस्तस्मिन् कर्तव्ये इति समन्वयः॥ ५–'सन्वल्लघुनि–' इति सन्वद्भावस्तत्रैव यत्र णिनिमित्तोऽग्लोपो न, अत्र तु णिनिमित्तोऽतो लोप इति भावः॥ ६– संख्यानं गणना॥ ७–चकारादकारस्य अकार एवेत्यर्थः॥

## अथ ण्यन्तप्रक्रिया[1]

**स्वतन्त्रः कर्ता १ । ४ । ५४ ॥**

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

**तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥**

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥

**हेतुमति च ३ । १ । २६ ॥**

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्। भवन्तं प्रेरयति [2]भावयति ॥

---

१—अत्र प्रकरणे 'भूवादयो धातवः' इति 'सनाद्यन्ता धातवः' इति च सूत्रद्वयविहितधातुसंज्ञकमात्रेभ्यः प्रयोजकव्यापारे णिच्प्रत्ययो विधीयते । प्रयोजकश्च कर्तुः प्रेरको यथा चैत्रः पण्डितो भवति, भवन्तं तं मैत्रोऽध्यापनादिना प्रेरयति, तत्र भवनक्रियाकर्ता चैत्रः स प्रयोज्यो णिच्प्रत्ययस्तु प्रेषणादिकर्तृमैत्रव्यापारे भवति। तत्र णिचि जाते गत्याद्यर्थधातूनां प्रयोज्यकर्तुः 'स्वतन्त्रः कर्ता' इत्यनेन प्राप्तां कर्तृसंज्ञां बाधित्वा 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इत्यनेन द्वितीया विधीयते। एवञ्च 'चैत्रं मैत्रो भावयति' इति प्रयोगो भवति । यत्र च चैत्रो भवति भवन्तं तमुभौ प्रेरयतस्तत्र चैत्रमुभौ भावयतः' एवं चैत्रमन्ये भावयन्ति, चैत्रो भवति त्वं प्रेरयसि, युवां प्रेरयथः, यूयं प्रेरयथ, अहं प्रेरयामि इत्यादौ भावयसि,भावयथः, भावयथ, भावयामि इत्यादि स्वयमूहनीयम्। गत्याद्यर्थभिन्नेभ्यः सकर्मकेभ्यो धातुभ्यः पचिप्रभृतिभ्यो ण्यन्ते प्रयोज्यकर्तरि तृतीया——यथा चैत्रेण तण्डुलं मैत्रः पाचयति । अत्र प्रकरणे प्रयोजकानुसारेणैव प्रथममध्यमोत्तमपुरुषाणां व्यवस्था ज्ञेया ॥ २—णिश्चेति कर्तृगे फले आत्मनेपदम्, भावयते ॥

**ओः पुयण्ज्यपरे ७ । ४ । ८० ॥**

सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः । [1]अबीभवत् ॥ **ष्ठा** गतिनिवृत्तौ ॥

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ७ । ३ । ३६ ॥**

स्थापयति ॥

**तिष्ठतेरित् ७ । ४ । ५ ॥**

उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ॥ **घट** चेष्टायाम् ॥

**मितां ह्रस्वः ६ । ४ । ९२ ॥**

घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ । घटयति ॥ **ज्ञप** ज्ञाने ज्ञापने च ॥ ज्ञपयति । अजिज्ञपत् ॥

इति ण्यन्तप्रक्रिया ॥

# अथ सन्नन्तप्रक्रिया

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७ ॥**

---

१–'भू' धातोर्णिच्प्रत्ययेऽनुबन्धलोपे 'सनाद्यन्ताः–' इति धातुत्वे लुङि तस्य तिबादेशे अडागमे 'अ भू इ त्' इति दशायाम्, णेर्लोपे 'चङि' इत्यनेन भूशब्दस्य द्वित्वेऽभ्यासकार्येऽभ्यासोत्तरभूशब्दस्य वृद्धयावादेशयोः 'अ बु भाव् अ त्' इत्यवस्थायाम् 'णौ चङि–' इत्युपधाह्रस्वे, 'ओः पुयण्ज्यपरे' इत्यनेनाभ्यासोकारस्येत्वे 'दीर्घो लघोः' इति दीर्घे 'अबीभवत्' इति सिद्धम् ॥

[1]इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् ॥ **पठ** व्यक्तायां वाचि ॥

**सन्यङोः ६ । १ । ९ ॥**

सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्यतः । पठितुमिच्छति पिपठिषति[2]। कर्मणः किम् ? गमनेनेच्छति । समानकर्तृकात् किम् ? शिष्याः पठन्त्विवतीच्छति गुरुः । वा ग्रहणाद्वाक्यमपि ॥ लुङसनोर्घस्लृ ॥

**सः स्यार्धधातुके ७ । ४ । ४९ ॥**

सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । एकाच इति नेट् ॥

**अज्झनगमां सनि ६ । ४ । १६ ॥**

---

१–'गुप्तिज्किद्भ्यः–'इत्यतः 'सन्' इत्यनुवर्तते । कर्मत्वं समानकर्तृत्वं चोपस्थितत्वादिषेरेवेत्यभिप्रेत्याह—इषिकर्मण इत्यादि । समन्वयपुरस्सरस्तदर्थो यथा–धातोरर्थाद् धातुमात्रात् सन्प्रत्ययो वा स्यादिच्छायाम्। कीदृशाद् धातोः ? इषिकर्मणः, इच्छाक्रियाकर्मभूतात् पुनश्च इच्छाक्रियाकर्तृकर्तृकात् 'पठितुमिच्छति' इति विग्रहे इच्छाक्रियाकर्म पठनम् इच्छाक्रियाकर्ता चैत्रादिः स एव पठनस्यापि । 'पठनेन इच्छति' इत्यत्र तु सन्प्रत्ययो न, पठनस्येच्छाकर्मत्वाभावात् । एवं 'शिष्याः पठन्तु, इतीच्छति गुरुः' इत्यत्र पठेः सन् न, शिष्याणां पठनकर्तृत्वाद् गुरोरिच्छाकर्तृत्वात्समानकर्तृत्वाभावात् ॥ २–'पठितुमिच्छति' इति विग्रहे 'धातोः कर्मणः–' इत्यादिना पठेः सन्प्रत्यये 'सन्यङोः' इत्यनेन 'पठ्' शब्दस्य द्वित्वेऽभ्यासकार्ये 'सन्यतः' इतीत्त्वे 'सनाद्यन्ताः–' इति सन्नन्तस्य धातुत्वे लटि तिपि शपि पररूपे सस्य षत्वे 'पिपठिषति' इति सिद्धम् ॥

अजन्तानां हन्तेरजादेशगमेश्च दीर्घो हलादौ सनि ॥

**इको झल् १ । २ । ९ ॥**

इगन्ताज्झलादिः सन् कित् स्यात् । ऋत इद्धातोः । कर्तुमिच्छति चिकीर्षति[1] ॥

**सनि ग्रहगुहोश्च ७ । २ । १२ ॥**

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । बुभूषति ॥

इति सन्नन्तप्रक्रिया ॥

# अथ यङन्तप्रक्रिया

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३ । १ । २२ ॥**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥

**गुणो यङ्लुकोः ७ । ४ । ८२ ॥**

अभ्यासस्य गुणो यङि यङ्लुकि च परतः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते[2] । बोभूयाञ्चक्रे । अबोभूयि ॥

---

१–अस्य 'एकाच उपदेशे––' इतीण्निषेधे 'इको झल्' इति कित्त्वेन गुणाभावे 'अज्झन–' इति दीर्घे 'ऋत इद्धातोः' इतीत्वे रपरत्वे द्वित्वादिकार्ये परस्येकारस्य 'हलि च' इति दीर्घे यथोक्तकार्ये सिद्धिर्ज्ञेया ॥

२–'अतिशयेन पुनः पुनर्वा भवति' इति विग्रहे 'भू' धातोः 'धातोरेकाचः–' इति यङ्प्रत्यये 'सन्यङोः' इति द्वित्वे अभ्यासस्य ह्रस्वे जश्त्वे 'गुणो यङ्लुकोः' इति गुणे च 'बोभूय' इत्यस्य 'सनाद्यन्ताः–' इति धातुत्वे ङित्त्वादात्मनेपदे शबादिकार्ये यथोक्तरूपं सिद्धम् । अत्र 'क्रियासमभिहारे द्वे वाच्ये' इति वार्तिकेन 'स्मारं स्मारम्' इतिवत् 'बोभूयते' इत्यस्य द्वित्वं तु न 'उक्तार्थानामप्रयोगः' इति न्यायेन यङा क्रियासमभिहारस्य उक्तत्वात् ॥

**नित्यं कौटिल्ये गतौ ३ । १ । २३ ॥**

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥

**दीर्घोऽकितः ७ । ४ । ८३ ॥**

अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते[1] ॥

**यस्य हलः ६ । ४ । ४९ ।**

यस्येति[2] संघातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे । वाव्रजिता ॥

**रीगृदुपधस्य च ७ । ४ । ९० ॥**

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृताञ्चक्रे । वरीवर्तिता ॥

**क्षुभ्नादिषु च ८ ॥ ४ । ३९ ॥**

णत्वं न । नरीनृत्यते । जरीगृह्यते ॥

इति यङन्तप्रक्रिया

---

१–अत्र 'अतिशयेन पुनः पुनर्वा व्रजति' इति विग्रहे 'धातोरेकाचः–' इति यङ् तु न, गत्यर्थानां कौटिल्य एव यङ्विधानात् ॥

२–अकारसहितो यकारो विवक्षितः, न तु अकारस्योच्चारणार्थत्वम्, एवञ्च 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति परिभाषया अर्थवति यशब्दे एवास्य प्रवृत्तिः, तेन 'पुत्रकाम्याञ्चकार' इत्यत्र यलोपो न ॥

# अथ यङ्लुक्प्रक्रिया

**यङोऽचि च २ । ४ । ७४ ॥**

यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित् । [1]अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥

**यङो वा ७ । ३ । ९४ ॥**

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । भूसुवोरितिगुणनिषेधो यङ्लुकि भाषायां न, बोभोतु तेतिक्ते इति छन्दसि निपातनात् । [2]बोभवीति, बोभोति । बोभूतः । अदभ्यस्तात् । बोभुवति[3] । बोभवाञ्चकार, बोभवामास । बोभविता ।

---

१—अयम्भावो यङ्लुग् द्विविधः 'पापच' इत्यादावज्निमित्तक एकः सूत्रस्य 'च' शब्देनाचं विनापि भवन् अनैमित्तिको द्वितीयः । एवञ्च 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया लुक्यनैमित्तिकत्वरूपान्तरङ्गत्वसत्त्वाद् द्वित्वादिकार्येषु निमित्तसापेक्षत्वरूपबहिरङ्गत्वसत्त्वाल्लुकि कर्तव्ये तेषामसिद्धिरिति ॥ २—'अतिशयेन पुनः पुनर्वा भवति' इति विग्रहे 'भू' धातोर्यङि अन्तरङ्गत्वात्तस्य 'यङोऽचि च' इति लुकि प्रत्ययलक्षणेन यङन्तत्वमाश्रित्य भूशब्दस्य द्वित्वेऽभ्यासकार्ये जाते 'बोभू' इत्यस्य धातुत्वाल्लटि 'शेषात्कर्तरि—' इति सूत्रसहकारेण लटः परस्मैपदसंज्ञके तिपि शपि यङ्लुग्बोधकस्य 'चर्करीत'शब्दस्यादादिपाठाच्छपो लुकि 'यङो वा' इतीड्विकल्पे गुणावादेशयोः 'बोभवीति' इति; ईडभावपक्षे 'बोभोति' इति रूपद्वयम् । 'भूसुवोस्तिङि' इति गुणनिषेधस्तु न 'बोभोतु' इति छन्दसि गुणनिपातनेन भाषायां यङ्लुकि गुणस्येष्टत्वात् ॥ ३—अत्र 'अचि श्नु—' इति उवङादेशः ॥

बोभविष्यति । बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । गातिस्थेति सिचो लुक्[1] । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्[2] । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥

इति यङ्लुक्प्रक्रिया ॥

---

## अथ नामधातवः

**सुप आत्मनः क्यच् ३ । १ । ८ ॥**

[3]इषिकर्मण एषितुः संबन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ॥

**सुपो धातुप्रातिपदिकयोः २ । ४ । ७१ ॥**

एतयोरवयवस्य[4] सुपो लुक् ॥

---

१–'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति वचनेन यङ्लुगन्तस्यापि भूग्रहणेन ग्रहणादिति वाक्यशेषः ॥ २–'भुवो वुग्लुङ्लिटोः' इति सूत्रेणेति शेषः । 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति न्यायेन परगुणापेक्षया कृताकृतप्रसङ्गित्वरूपनित्यत्वस्य वुकि सत्त्वात् ॥ ३–इच्छाक्रियाकर्तृसंबन्धिनः इच्छाक्रियाकर्मीभूतात्सुबन्तादिच्छायामर्थे क्यजित्यादिः स्पष्टसूत्रार्थः । 'आत्मनः पुत्रमिच्छति' इति विग्रहे 'पुत्रम्' इति सुबन्तमिच्छाकर्तृसंबन्धि, इच्छाक्रियाकर्म च । तत्र 'पुत्रम्' इति द्वितीयान्तात्क्यच् । परस्य पुत्रमिच्छतीत्यत्र क्यच् न, पुत्रस्य परसंबन्धित्वात् । 'पुत्रेणेच्छति' इत्यत्रापि न, पुत्रस्येच्छाकर्मत्वाभावात् ॥ ४–अत्र अवयवावयविभावसंबन्धः षष्ठ्यर्थस्तदाह–एतयोरवयवस्येति ॥

**क्यचि च ७ । ४ । ३३ ॥**

अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति[1] ॥

**नः क्ये १ । ४ । १५ ॥**

क्यचि क्यङि च नान्तमेव पदं नान्यत् । नलोपः । राजीयति[2] । नान्तमेवेति किम् ? वाच्यति । हलि च । गीर्यति । पूर्यति । धातोरित्येव । नेह[3]—दिवमिच्छति दिव्यति ॥

**क्यस्य विभाषा ६ । ४ । ५० ॥**

हलः परयोः क्यच्क्यङोर्लोपो वार्धधातुके । आदेः परस्य । अतो लोपः । तस्य [4]स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता, समिध्यिता ॥

**काम्यच्च ३ । १ । ९ ॥**

उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥

**उपमानादाचारे ३ । १ । १० ॥**

---

१—मूलोक्तलौकिकविग्रहे 'पुत्र अम्' इत्यस्मात् 'सुप आत्मनः—' इति क्यच्प्रत्ययेऽनुबन्धलोपे 'सनाद्यन्ताः—' इति धातुत्वे 'सुपो धातु-प्रातिपदिकयोः' इत्यमो लुकि 'क्यचि च' इति ईत्वे धातुत्वाल्लडादि-कार्ये निरुक्तरूपं निष्पन्नम् ॥ २—सुबादिविधित्वाभावेन 'नलोपः सुप्स्वर—-इति नियमाप्रवृत्तौ ईत्वे कर्तव्ये नलोपस्यासिद्धत्वाभावः॥ ३-'दिव्' इत्यस्य प्रातिपदिकत्वेन धातुत्वाभावात् । न च 'गीर्यति' इत्यादावपि 'गिर्' इत्यादेः प्रातिपदिकत्वेन धातुत्वाभावात्तत्रापि दीर्घो न स्यादिति वाच्यम्; 'क्विबन्विजन्ता धातुत्वं न जहति' इति वचनाद् धातुत्वाक्षतेः । न च 'दिव्' शब्दोऽपि क्विबन्त एवेति तत्रापि दीर्घः स्यात्, क्विपि सति 'च्छ्वोः शूडनुनासिके च' इत्यूठि कृते 'द्यूः' इति रूपसम्भवात् । नाप्ययं विजन्तः, विचि लघूपधगुणे वलि लोपे च कृते 'दे' इति रूपप्रद्धावात् । तस्मात् 'दिव' इत्यव्युत्पन्नमेव प्रातिपदिकमतोऽत्र न दीर्घः ॥ ४—'अचः परस्मिन्—'इति सूत्रेणेति शेषः ॥

[1]उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति[2] द्विजम् ।। ([3]सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः) अतो गुणे । कृष्ण इवाचरति कृष्णति[4] । स्व इवाचरति स्वति । सस्वौ[5] ।।

**अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ॥**

अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति[6]।।

**कष्टाय क्रमणे ३ । १ । १४ ॥**

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । [7]पापं कर्तुमुत्सहते इत्यर्थः ।।

---

१-यस्य सादृश्यमन्यत्र निरूप्यते तदुपमानम्, यथा 'रविरिव राजते राजा इत्यत्र रविः । प्रकृते च पुत्र शब्दः ।। २-'अकृत्सार्वधातुकयोः-' इति दीर्घः ।। ३-प्रातिपदिकमात्रादाचारेऽर्थे क्विप्प्रत्ययो भवतीत्यर्थः ॥ ४-यद्यपि लौकिकविग्रहे 'कृष्णः' इति प्रथमान्तं पदं दृश्यते' तथापि वार्तिकेन प्रातिपदिकादेव क्विब्विधानात् सुबन्तत्वाभावेन पदत्वाभावेऽपदान्तनिमित्तकं पररूपमिति ध्येयम् ॥ ५-'स्व इवाचचार' इति विग्रहे स्वशब्दात् 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इत्यनेन क्विपि सर्वापहारिलोपे 'सनाद्यन्ताः-' इति धातुत्वाल्लिटि णलि द्वित्वादिकार्ये 'सस्व अ' इत्यवस्थायाम् 'अचो ञ्णिति' इति सूत्रेण स्वशब्दाकारस्य वृद्धौ, 'आत औ णलः' इति णल औकारे वृद्धौ रूपम । अतुसादौ त्वतो लोपः 'अतो लोपः' इत्यनेन 'सस्वतुः' इत्यादि । एवं लुडादौ क्रमशः स्विता, स्विष्यति, स्वतु, अस्वत्, स्वेत्, स्व्यात्, अस्वीत्, अस्विष्यत् इति रूपाणि ।। ६-अन्तरङ्गत्वाद्दीर्घे गुणो न ।। ७-कष्टं पापम्, क्रमणमुत्साहः, न हि कश्चिच्चेतनः स्वकष्टाय उत्साहं विधत्ते इति हेतोरर्थासंगत्योदाहरणमसङ्गतमिति तु न शङ्क्यम्; कष्टसाधनपापाय उत्साह एव कष्टायोत्साहः, तदेतदाह-पापं कर्तुमित्यादि-'कष्टायते' इत्यत्र चतुर्थ्यन्तात्क्यङ्प्रत्यये 'सुपो धातु-' इति लुक् ।।

**शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३ । १ । १७ ॥**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते[1] ॥ (ग. सू.) तत्करोति तदाचष्टे । इति णिच् ॥ (ग.सू.) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च । प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य [2]पुंवद्भावरभावटिलोपविन्मतु-ल्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । इत्यल्लोपः । घटं करोत्याचष्टे वा [3]घटयति ॥

इति नामधातवः

## अथ कण्ड्वादयः

**कण्ड्वादिभ्यो यक् ३ । १ । २७ ॥**

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे । **कण्डूञ्** गात्र-विघर्षणे ॥ १ ॥ कण्डूयति । कण्डूयत इत्यादि ॥

इति कण्ड्वादयः ॥

## अथात्मनेपदप्रक्रिया

**कर्तरि कर्मव्यतिहारे १ । ३ । १४ ॥**

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम् । व्यतिलुनीते । अन्यस्य योग्यं लवनं[4] करोतीत्यर्थः ॥

---

१–'शब्द अम्' इत्यस्मात् क्यङ्प्रत्यये तदन्तस्य धातुत्वे 'सुपो धातु–' इत्यमो लुक् ॥ २–पुंवद्भावस्योदाहरणम्—'पट्वीमाचष्टे पटयति' इदमेव भसंज्ञाया अपि । रभावस्य—दृढं करोति द्रढयति । टिलोपस्य—पटुमाचष्टे पटयति । विनो लुकि—स्रग्विणमाचष्टे स्रजयति । मतुपो लुकि, श्रीमन्तं करोति श्राययति । यणादिलोपे—स्थूलमाचष्टे स्थवयति, दूरं करोति दवयति । प्रादेशे—प्रियमाचष्टे प्रापयति । स्थादेशे—स्थिरं करोति स्थापयति । स्फादेशे—स्फिरमाचष्टे स्फापयति ॥ ३–एवं घटयाञ्चकार, घटयिता, घटयिष्यति, लुङि—अजघटत् इत्यादि ॥

४–शूद्रस्य योग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः ॥

**न [1]गतिहिंसार्थेभ्यः १ । ३ । १५ ॥**

व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥

**नेर्विशः[2] १ । ३ । १७ ।**

निविशते ॥

**परिव्यवेभ्यः क्रियः १ । ३ । १८ ॥**

परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥

**विपराभ्यां[3] जेः १ । ३ । १९ ॥**

विजयते । पराजयते ॥

**समवप्रविभ्यः स्थः १ । ३ । २२ ॥**

संतिष्ठते । अवतिष्ठते । प्रतिष्ठते[4] । वितिष्ठते ॥

**अपह्नवे[5] ज्ञः १ । ३ । ४४ ॥**

शतमपजानीते । अपलपतीत्यर्थः ॥

**अकर्मकाच्च १ । ३ । ४५ ॥**

सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥

**उदश्चरः[6] सकर्मकात् १ । ३ । ५३ ॥**

धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥

---

१—गत्यर्थकेभ्यो हिंसार्थेभ्यश्च कर्मव्यतिहारे आत्मनेपदं न ॥ २—अर्थवद्ग्रहणपरिभाषयार्थवतो निशब्दस्य ग्रहणात् 'मधुनि विशन्ति भ्रमराः' इत्यत्रात्मनेपदं न ॥ ३—विसाहचर्यात्पराशब्देनोपसर्गपराशब्दस्यैव ग्रहणं तेन 'परा जयति सेना' इत्यत्र पराशब्देन योगे नात्मनेपदप्रसङ्गः ॥ ४—गच्छतीत्यर्थः ॥ ५—अपपूर्वाज्जानातेरात्मनेपदं स्यादपलापेऽर्थे ॥ ६—उत्पूर्वकात्सकर्मकाच्चरतेरात्मनेपदं स्यात् ॥

[1]**समस्तृतीयायुक्तात् १ । ३ । ५४ ॥**

रथेन सञ्चरते ॥

**दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५ ॥**

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे । दास्या[2] संयच्छते कामी ॥

**पूर्ववत्सनः १ । ३ । ६२ ॥**

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् एदिधिषते ॥

**हलन्ताच्च १ । २ । १० ॥**

इक्समीपाद्धलः परो झलादिः सन् कित् । निविविक्षते ॥

[3]**गन्धनावक्षेपणसेवनसाहसिक्य[4]प्रतियत्नप्रकथनोपयोगेषु[5] कृञः १ । ३ । ३२ ॥**

गन्धनं सूचनम्[6] । उत्कुरुते—सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुत्कुरुते—भर्त्सयतीत्यर्थः । हरिमुपकुरुते—सेवत इत्यर्थः । परदारान्प्रकुरुते—तेषु सहसा प्रवर्तते । [7]एधो दकस्योपस्कुरुते—गुणमाधत्ते । कथाः प्रकुरुते । प्रकथयतीत्यर्थः । शतं प्रकुरुते—धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति ॥

**भुजोऽनवने १ । ३ । ६६ ॥**

ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥

इत्यात्मनेपदप्रक्रिया ॥

---

१–तृतीयान्तेन युक्तात्सम्पूर्वाच्चरतेरात्मनेपदं स्यात् ॥ २–'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेन 'दास्या' इत्यत्राशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया ज्ञेया ॥ ३–गन्धनाद्यर्थेषु कृञ आत्मनेपदं स्यात् ॥ ४–साहसिक्यं बलात्कारेण वशीकरणम् ॥ ५–उपयोगो धर्माद्यर्थं द्रव्यविनियोगः ॥ ६–सूचनं परदोषाविष्करणम् ॥ ७–काष्ठं जलस्य गुणमाधत्त इति वाक्यार्थः ॥

## अथ परस्मैपदप्रक्रिया

**अनुपराभ्यां कृञः १ । ३ । ७९ ॥**

कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥

**अभिप्रत्यतिभ्यः क्षिपः १ । ३ । ८० ॥**

**क्षिप** प्रेरणे । स्वरितेत् । अभिक्षिपति ॥

**प्राद्वहः १ । ३ । ८१ ॥**

प्रवहति ॥

**परेर्मृषः[1] १ । ३ । ८२ ॥**

परिमृष्यति ॥

**व्याङ्परिभ्यो रमः १ । ३ । ८३ ॥**

**रमु** क्रीडायाम् । विरमति ॥

**उपाच्च १ । ३ । ८४ ॥**

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम्[2] ॥

इति परस्मैपदप्रक्रिया ॥

इति पदव्यवस्था

---

१–दैवादिकः 'मृष तितिक्षायाम्' इति धातुः ॥ २–उपपूर्वकस्य 'रम्' धातोर्निवृत्तिरूपोपरामोऽर्थः, तदर्थेऽकर्मकत्वाद् यज्ञदत्तमिति कर्मणोऽनौचित्यमाशङ्क्य परिहरति—अन्तर्भावितेति । अन्तर्भावितः स्वार्थत्वेनाङ्गीकृतो ण्यर्थः प्रयोजकव्यापारो येन स इत्यर्थः । एवञ्च प्रकृते उपरामकरणस्य धात्वर्थत्वात् सकर्मकत्वमुपपन्नम् ॥

# अथ[1] भावकर्मप्रक्रिया

**भावकर्मणोः[2] १ । ३ । १३ ॥**

लस्यात्मनेपदम् ।।

**सार्वधातुके यक् ३ । १ । ६७ ॥**

धातोर्यक् भावकर्मवाचिनि सार्वधातुके । भावः[3] क्रिया ।

---

१–'लः कर्मणि––' इति सूत्रे भावकर्मकर्तृरूपा लस्यार्था उक्तास्तत्रैतावत्पर्यन्तं धातुमात्रेभ्यः कर्तरि लकारमभिधाय सम्प्रति अकर्मकेभ्यो भावे सकर्मकेभ्यः कर्मणि च लकारं विधातुं प्रकरणारम्भः ।। २–भावे कर्मणि च यो लस्तस्यात्मनेपदं स्यात् ।। ३–ननु अकर्मकेभ्यो धातुभ्यो भावे लो विधीयते, तत्र भावपदार्थः क इति चेद् ? भावः क्रिया भावना व्यापार इति सर्वे पर्यायवचना इति गृहाण । नन्वेवमपि धातुमात्रस्य भावरूपोऽर्थः स च धातुनैव लब्धः तत्किमिति तदर्थं पुनर्लकारो विधीयते । इति चेच्छृणु, यो हि भावो धातुनोच्यते स एव लकारेणानूद्यते न तु लस्य तदतिरिक्तभावोऽर्थः । ननु भावे लकारे प्रथमादिपुरुषत्रयमध्ये कस्य प्रयोग इति चेच्छृणु, तिङ्वाच्यकारकवाचिनोर्युष्मदस्मदोः सत्त्वे एव मध्यमोत्तमयोः प्रयोगो भवति, भावे लकारे तिङ्वाच्यकारकाभावेन तयोरप्रयोगः । ननु तर्हि किम् प्रथमपुरुषस्यैव सर्वाणि वचनानि भवेयुः ? न, लकारेणानूद्यमानस्य भावस्याद्रव्यरूपत्वेन द्वित्वाद्यभावान्न प्रथमपुरुषस्यापि द्विवचनबहुवचने स्याताम् । तर्हि प्रथमपुरुषैकवचनमपि न स्यात्, तस्मिन् भावे एकत्वस्याप्रतीतेरिति चेन्न, भावे प्रत्यये सर्वत्रौत्सर्गिकैकवचनस्वीकारात् । एवं च भावे लकारे कर्तुरनुक्तत्वात् 'कर्तृकरणयोः-'इति तृतीया, सर्वस्मिँल्लकारे प्रथमपुरुषैकवचनञ्च । 'त्वया मया अन्यैश्च भूयते' इत्याद्युदाहरणमिति, कर्मणि लकारे तु कर्तुरनुक्तत्वात्तृतीया, कर्मण उक्तत्वात्तत्र प्रथमा, किन्तु सर्वेषां पुरुषाणां सर्वेषां वचनानामत्र कर्मानुसारेण प्रयोगः । अत्र दिङ्मात्रमुदाहरणम्–चैत्र आनन्दमनुभवति इति चैत्रेणानन्दोऽनु-

सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां [1]सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किं त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥

**स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६ । ४ । ६२ ॥**

उपदेशे योऽच् तदन्तानां हनादीनां च [2]चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्-

---

भूयते, चैत्रस्त्वामनुभवति चैत्रेण त्वमनुभूयसे । चैत्रो मामनुभवति चैत्रेणाहमनुभूये । सकर्मकाकर्मकयोरेवं व्यवस्था ज्ञेया । सर्वेषां धातूनां फलव्यापारावर्थौ, तत्र तावुभौ यत्रैकस्मिन्नेव कर्तरि वर्तेते ते धातवोऽकर्मका एव, यथा—आत्मधारणानुकूलव्यापाररूपा सत्ता भूधात्वर्थः तत्रात्मधारणरूपफलस्य व्यापारस्य च एकत्र कर्तरि सत्त्वात्सोऽकर्मकः । यत्र तौ भिन्नदेशस्थौ यथा विक्लित्त्यनुकूलो व्यापारः 'पच्' धातोरर्थः, तत्र विक्लित्तिरूपं फलं तण्डुले फूत्कारादिव्यापारः कर्तरि वर्ततेऽतः स सकर्मकः । एवञ्च फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम् । फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् । केचिदेवमकर्मकधात्वर्थान् संगृह्णन्ति—

लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणन्तमकर्मकमाहुः ॥ इति ॥

१—युष्मदस्मदोर्भाववाचकत्वाभावाल्लकारस्य भाववाचकत्वात्सामानाधिकरण्यं नास्तीति भावः ॥ २—चिणि परे यथाङ्गस्य वृद्ध्यादिकार्यं तद्वदत्र स्यादिषु परेष्वपि ॥

भावपक्षेऽयमिट्। चिण्वद्भावाद् वृद्धिः [1]भाविता, भविता। भाविष्यते, भविष्यते। भूयताम्। अभूयत। भाविषीष्ट, भविषीष्ट।

## चिण् भावकर्मणोः ३।१।६६॥

च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत, अभविष्यत। अकर्मकोऽप्युपसर्गवशात्सकर्मकः[2]। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभाविषाताम्, अन्वभविषाताम्। णिलोपः। भाव्यते[3]। भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे। चिण्वदिट्। आभीयत्वेनासिद्धत्वाण्णिलोपः।

---

१–'भू' धातोर्भावे लुटि तस्य तादेशे तासि प्रत्यये 'भू तास् त' इति जाते 'स्यसिच्सीयुट्–इति चिण्वद्भावे तासेरिडागमे च चिण्वद्भावाद्वृद्धौ आवादेशे 'भावि तास् त' इति स्थिते तस्य डादेशे टिलोपे 'भाविता' इति, चिण्वद्भावाभावपक्षे 'आर्धधातुकस्य–' इतीडागमे गुणादिकार्ये 'भविता' इति॥ २–तेन कर्मणि प्रत्यये युष्मदस्मदोर्लकारवाच्यकर्मकारकवाचित्वात् तिङसामानाधिकरण्येन द्वित्वबहुत्वसंख्यासंबन्धस्यापि सत्त्वेन न पुरुषवचनानुपपत्तिरिति भावः॥ ३–अकर्मकधातुभ्यो यत्र हेतुमण्णिच तत्र णिजन्तावस्थायां प्रयोज्यस्य 'गतिबुद्धि–' इत्यादिसूत्रेण कर्मत्वम्, प्रयोजकस्य कर्तृत्वम्, एवञ्च णिचि अकर्मकाणामपि सकर्मकत्वम्; तत्र प्रयोज्यकर्मणि प्रत्यये तस्य प्रथमान्तता, प्रयोजकस्य तृतीयान्तता, यथा 'चैत्रो मैत्रं भावयति चैत्रेण मैत्रो भाव्यते, चैत्रस्त्वां भावयति चैत्रेण त्वं भाव्यसे, चैत्रो मां भावयति चैत्रेणाहं भाव्ये' इत्येवमुदाहरणान्यूह्यानि॥

[1]भाविता, भावयिता। भाविष्यते, भावयिष्यते। अभाव्यत। भाव्येत। भाविषीष्ट, भावयिषीष्ट। अभावि। अभाविषाताम्, अभावयिषाताम्। [2]बुभूष्यते। बुभूषाञ्चक्रे। बुभूषिता। बुभूषिष्यते। बोभूय्यते[3]। बोभूयते॥ अकृत्सार्वधातुकयोर्दीर्घः। स्तूयते विष्णुः। स्ताविता, स्तोता। स्ताविष्यते, स्तोष्यते। अस्तावि। अस्ताविषाताम्, अस्तोषाताम्॥ **ऋ** गतौ॥ गुणोऽर्तीति गुणः। अर्यते॥ **स्मृ** स्मरणे॥ स्मर्यते। सस्मरे। [4]उपदेशग्रहणाच्चिण्वदिट्। आरिता, अर्ता। स्मारिता, स्मर्ता। अनिदितामिति नलोपः। स्रस्यते। इदितस्तु नन्द्यते। संप्रसारणम्—इज्यते॥

**तनोतेर्यकि ६। ४। ४४॥**

आकारोऽन्तादेशो वा स्यात्। तायते, तन्यते॥

**तपोऽनुतापे च ३। १। ६५॥**

---

१–ण्यन्ताद् भावयतेः कर्मणि लुटि तादिकार्ये जाते 'भावि तास् त' इत्यवस्थायाम् 'स्यसिच्'—इति चिण्वद्भावे इटि च 'भावि इ तास् त' इति जाते 'णेरनिटि' इति णेर्लोपो न स्यादिट्परत्वादिति न शङ्क्यम् 'असिद्धवदत्राभात्' इत्यनेन चिण्वदिटोऽसिद्धत्वात्, तथा च णिलोपे डादेशादिकार्ये तत्सिद्धम्, चिण्वद्भावविरहे आर्धधातुकस्य—' इति इडागमे तत्र णिलोपाभावे गुणायादेशयोः 'भावयिता' इति निष्पन्नम्। २–अकर्मकप्रवृत्तिकास्तु सन्नन्ता अकर्मका एव, सकर्मकास्तु सन्नन्ताः सकर्मकाः॥ ३–यङ्यङ्लुकोस्तु प्रकृतिवत्सकर्मकाकर्मकतेति बोध्यम्॥ ४–'ऋ' धातोर्लुटि 'ऋ तास् त' इति दशायां परत्वात् 'सार्वधातुक—' इति गुणेऽजन्तत्वाभावाच्चिण्वद्भावो न स्यादिति न शङ्क्यम्, उपदेशे 'ऋ' धातोरजन्तत्वेन सम्प्रति हलन्तत्वेऽपि तत्प्रवृत्तेः॥

तपश्चलेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त[1] पापेन । घुमास्थेतीत्त्वम् । दीयते । धीयते । दद्दे ।

**आतो युक् चिण्कृतोः ७ । ३ । ३३ ॥**

अदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता, दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् ॥ भज्यते ॥

**भञ्जेश्च चिणि ६ । ४ । ३३ ॥**

नलोपो वा स्यात् । अभाजि, अभञ्जि ॥ लभ्यते ॥

**विभाषा चिण्णमुलोः ७ । १ । ६९ ॥**

लभेर्नुमागमो वा स्यात् । अलम्भि, अलाभि ॥

इति भावकर्मप्रक्रिया ॥

---

# अथ[2] कर्मकर्तृप्रक्रिया

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥

---

१–पापं किल्विषं कर्तृपुरुषमन्वतापसीत् तेन पापेन पुरुषोऽन्वतप्त, अत्र कर्मणि प्रत्ययः । 'तपोऽनुतापे च' इति चिण्निषेधे च्लेः सिच् ॥

२–एकस्मिन्नेव पचादिधातुप्रयोगे 'चैत्रो वह्निना स्थाल्यां तण्डुलं पचति' इत्यत्र कर्तृकरणाधिकरणकर्मकारकाणां मेलनं दृश्यते तत्र चैत्रस्य कर्तृत्वाविवक्षायां करणादीनामेव कर्तृत्वविवक्षायाम् 'वह्निः पचति,' 'स्थाली पचति,' 'तण्डुलः पच्यते' इति प्रयोगः । सम्प्रदानापादानयोस्तु 'विप्राय गां ददाति, ग्रामादायाति' इत्यादौ न कदापि कर्तृत्वविवक्षा, अनुभवविरोधात् । एवं स्थिते यत्र कर्मणः कर्तृत्वविवक्षा तत्र कर्तरि प्रत्यये 'पच्यते तण्डुलः' इति, भावे प्रत्यये 'तण्डुलेन पच्यते' इति, पचेरकर्मकत्वेन कर्तृभावयोरेव 'लः कर्मणि–' इति नियमेन प्रत्ययस्यौचित्यात्; इत्येतदर्थंजातं बोधयितुं प्रकरणमारभ्यते ॥

**कर्मवत्कर्मणा तुल्यक्रियः ३ । १ । ८७ ॥**

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम्, तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते[1] फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे, भिद्यते काष्ठेन ॥

इति कर्मकर्तृप्रक्रिया ॥

---

# अथ[2] लकारार्थप्रक्रिया

**अभिज्ञावचने लृट् ३ । २ । ११२ ॥**

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः ॥ **वस** निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादिप्रयोगेऽपि ।

---

१– ननु पचेः कर्मणः फलस्य कर्तृत्वविवक्षायाम् 'फलं पचति' इति प्रयोगः स्याद् इति चेन्न कर्तृरूपस्य फलस्य कर्मवद्भावातिदेशेन कर्मणि लकारवत् 'पच्यते फलम्' इत्येव प्रयोगस्येष्टत्वात् । तथा च सूत्रं कर्मवदिति––'कालः फलं पचति' इत्यत्र कर्मस्था क्रिया फलनिष्ठा पाकक्रिया तया क्रियया तुल्यक्रिया फलस्य कर्तृत्वविवक्षायां फलनिष्ठा पाकक्रिया तस्याः कर्ता फलरूपस्तस्य फलस्य कर्मवद्भावः इति सूत्रार्थे जाते कर्तुरेव कर्मत्वात्कर्मणि लकारे यगादिकार्ये कृते 'पच्यते फलम्' इति रूपम् । अत्र कर्मवद्भावपक्षे सर्वेषां प्रथमादिपुरुषाणां यथायथं प्रयोगाः 'त्वं पच्यसे, अहं पच्ये' इत्यादयो बोध्याः । भावे लकारे च 'चैत्रेण भूयते' इतिवत् प्रथमपुरुषैकवचनमेव 'फलेन, त्वया, मया च पच्यते' इत्येतत्प्रकरणतात्पर्यम् ॥ २–सामान्यत उक्तेऽपि लकारार्थे कतिपयानां लकाराणां विशेषार्थदर्शनाय प्रकरणारम्भः ॥

**न यदि ३ । २ । ११३ ॥**

यद्योगे उक्तं न । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ॥

**लट्[1] स्मे ३ । २ । ११८ ॥**

लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥

**वर्तमानसामीप्ये वर्तमानवद्वा ३ । ३ । १३१ ॥**

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदागतोऽसि । अयमागच्छामि अयमागमं वा । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा ॥

**[2]हेतुहेतुमतोर्लिङ् ३ । ३ । १५६ ॥**

वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । (भविष्यत्येवेष्यते) नेह—हन्तीति पलायते । विधिनिमन्त्रणेति लिङ् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्, यजेत । निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत । आमन्त्रणं कामचारानुज्ञा[3] इहासीत । अधीष्टं सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेद्भवान् । संप्रश्नः संप्रधारणम्[4] । किं भो वेदमधीयीय उत तर्कम् । प्रार्थनं याच्ञा । भो भोजनं लभेय । एवं लोट् ॥

इति लकारार्थप्रक्रिया ।



इति तिङन्तं समाप्तम् ।



१—स्मशब्दयोगे लट् स्यात् ॥ २—हेतुः कारणं हेतुमत् कार्यम्, तयोर्गम्यमानत्वे भविष्यति लिङ् वा स्यात् पक्षे लृट् । अत्र कृष्णनमनं कारणं सुखप्राप्तिः कार्यरूपा ॥ ३—परकीयाभिलषितविषयेऽनुमतिप्रदानम् ॥ ४ ॥ निश्चयकरणम् ॥

# अथ[1] कृदन्ते कृत्यप्रक्रिया

**धातोः ३ । १ । ९१ ॥**

आ तृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा ॥

**वासरूपोऽस्त्रियाम् ३ । १ । ९४ ॥**

अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं[2] विना ॥

**कृत्याः ३ । १ । ९५ ॥**

ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥

**कर्तरि कृत् ३ । ४ । ६७ ॥**

कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते—

**तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७० ॥**

एते भावकर्मणोरेव स्युः ॥

**तव्यत्तव्यानीयरः ३ । १ । ९६ ॥**

---

१—'सुप्तिङन्तम्-' इत्यत्र निर्दिष्टक्रमेण सामान्यतः सुबन्तप्रकरणाभिधानानन्तरं तिङन्तजातमभिधाय सम्प्रति 'कृत्तद्धित-' इति सूत्रे प्रथमोपात्तप्रातिपदिकसंज्ञोद्देश्यं कृदन्तं साधयितुं प्रकरणारम्भः ॥

२—'स्त्रियां क्तिन्' इत्यधिकारोक्तप्रत्ययं विनेत्यर्थः। 'अ प्रत्ययात्' इत्येतद्विषये क्तिन् न प्रवर्तत इति भावः ॥

धातोरेते प्रत्ययाः स्युः । [1]एधितव्यम् एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया। (केलिमर उपसंख्यानम्) पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । [2]कर्मणि प्रत्ययः ॥

**[3]कृत्यल्युटो बहुलम् ३ । ३ । ११३ ॥**

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥

स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥

**अचो यत् ३ । १ । ९७ ॥**

अजन्ताद्धान्तोर्यत् स्यात् । चेयम्[4] ॥

**ईद्यति ६ । ४ । ६५ ॥**

---

१–त्वमेधस्व एधेथा वेति, त्वया एध्यताम् एध्येत वेति, त्वया एधितव्यम्–लिङ्लोट्कृत्यप्रत्ययाः समानार्थाः । एवञ्च 'एध' धातोरकर्मकत्वाद्भावे 'तयोरेव–'इति नियमात् कृत्यसंज्ञकतव्यप्रत्ययेऽनुक्ते कर्त्तरि 'कर्तृकरणयोः–' इति तृतीया, अत्र 'कृत्यानां कर्त्तरि वा' इति कर्त्तरि षष्ठ्यपि पक्षे भवति, भावे प्रत्यये तस्य प्राधान्यात् तत्र द्वित्वाद्यप्रतीतेः, पुंस्त्वाद्यप्रतीतेश्चौत्सर्गिकमेकवचनम्, 'सामान्ये नपुंसकम्' इति नपुंसकत्वञ्च, एवम् 'एधनीयम्' इत्यत्रापि सर्वं ज्ञेयम् ॥ २–'पचेलिमाः' इत्यस्य कर्मप्रत्ययान्तत्वेन 'पक्तव्याः' इति भाष्ये विवरणदर्शनादिति भावः ॥ ३–कृत्यसंज्ञकप्रत्यया ल्युट् च यत्र विहितास्ततोऽन्यत्रापि बहुलं भवन्ति । तेन 'स्नानीयम्, दानीयः' इत्यादिषु करणसम्प्रदानादावपि कृत्यप्रत्ययः ॥ ४–'त्वं चिनु, त्वया चीयताम्' इति विग्रहे 'त्वया चेयम्' इति, एवं चेतुमर्हम्' 'चेतुं शक्यम्' इत्यनयोरपि विग्रहयोरिदं रूपम् । कर्मणि कृत्यप्रत्यये कर्मानुरोधेन लिङ्गवचनव्यवहारः कार्यः ॥

यति परे आत ईत्स्यात् । देयम्[1] । ग्लेयम् ॥

**पोरदुपधात् ३ । १ । ९८ ॥**

पवर्गान्तादुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम्[2] । लभ्यम् ॥

[3]**एतिस्तुशास्वृदृजुषः क्यप् ३ । १ । १०९ ॥**

एभ्यः क्यप् स्यात् ॥

**ह्रस्वस्य पिति कृति तुक् ६ । १ । ७१ ॥**

इत्यः । स्तुत्यः ॥ **शासु** अनुशिष्टौ ॥

**शास इदङ्हलोः ६ । ४ । ३४ ॥**

शास उपधाया इत्स्यादङि हलादौ क्ङिति । शिष्यः । वृत्यः । आदृत्यः । जुष्यः ॥

**मृजेर्विभाषा ३ । १ । ११३ ॥**

मृजेः क्यब्वा । मृज्यः[4] ॥

**ऋहलोर्ण्यत् ३ । १ । १२४ ॥**

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । [5]कार्यम् । [6]हार्यम् । [7]धार्यम् ॥

**चजोः कु घिण्ण्यतोः ७ । ३ । ५२ ॥**

---

१–आकारस्य ईकारे 'सार्वधातुक–' इति गुणः ॥ २–अत्र 'शप आक्रोशे' इति भौवादिको दैवादिकश्च उभयपदी धातुः । 'लभ्यम्' इत्यत्र 'डुलभष् प्राप्तौ' इति भ्वा० आ० ॥ ३–अत्र क्रमेण 'इण् गतौ' पर०, 'ष्टुञ् स्तुतौ' उभ०, 'शासु अनुशिष्टौ, पर०–एते अदादयः । 'वृञ् वरणे' स्वा० उभ०, 'दृङ् आदरे' तु० आ०, 'जुषी प्रीतिसेवनयोः' तु० आ० ॥ ४–मृजू शुद्धौ' अदा० पर० ॥ ५–'डुकृञ् करणे' तना० उभ० ॥ ६–'हृञ् हरणे' भ्वा० उभ० ॥ ७–'धृञ् धारणे' भ्वा० उभ० ॥

चजोः कुत्वं स्यात् घिति ण्यति च परे ॥

**मृजेर्वृद्धिः ७ । २ । ११४ ॥**

मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः । मार्ग्यः ॥

**भोज्यं[1] भक्ष्ये ७ । ३ । ६९ ॥**

[2]भोग्यमन्यत् ॥

इति कृत्यप्रक्रिया ॥

# अथ पूर्वकृदन्तम्

**ण्वुल्तृचौ ३ । १ । १३३ ॥**

धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ॥

**युवोरनाकौ ७ । १ । १ ॥**

यु वु एतयोरनाकौ स्तः । कारकः[3] । कर्ता[4] ॥

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ॥**

नन्द्यादेर्ल्युः, ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः[5] । जनमर्दयतीति जनार्दनः[6] । लवणः[7] । ग्राही[8] । स्थायी[9] ।

---

१–'भुज पालनाभ्यवहारयोः' रुधा० उभ० ॥ २–पालनीयमुपभोग्यं चार्थः ॥ ३–स्त्रियां कारिका क्लीबे कारकम् ॥ ४–स्त्रियां कर्त्री क्लीबे कर्तृ ॥ ५–ण्यन्तस्य 'टुनदि समृद्धौ' इत्यस्य धातोर्णिलोपे कृते इदं रूपं भवति ॥ ६–विष्णुपर्यायो जनार्दनशब्दः । अत्र 'अर्द गतौ याचने च' इति ण्यन्तो धातुः भ्वा० पर० ॥ ७–'लूञ् छेदने' क्र्या० उभ० । निपातनादत्र णत्वम् ॥ ८–ग्रह उपादाने' क्र्या० उभ० ॥ ९–'ष्ठा गतिनिवृत्तौ' भ्वा० पर० ॥

मन्त्री[1]। पचादिराकृतिगणः ॥

**[2]इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५ ॥**

एभ्यः कः स्यात्। बुधः[3]। कृशः[4]। ज्ञः। प्रियः। किरः ॥

**आतश्चोपसर्गे ३ । १ । १३६ ॥**

प्रज्ञः। सुग्लः[5] ॥

**गेहे कः ३ । १ । १४४ ॥**

गेहे कर्तरि ग्रहेः कः स्यात्। गृहम्[6] ॥

**कर्मण्यण् ३ । २ । १ ॥**

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। कुम्भं करोतीति। कुम्भकारः[7] ॥

**आतोऽनुपसर्गे कः ३ । २ । ३ ॥**

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात्। अणोऽपवादः। आतो लोप इटि च। गोदः। धनदः। कम्बलदः। अनुपसर्गे किम्? गोसन्दायः। (वा०) मूलविभुजादिभ्यः[8] कः। मूलानि विभुजति मूलविभुजो रथः। आकृतिगणोऽयम्। महीध्र[9]ः। कुध्रः ॥

**चरेष्टः ३ । २ । १६ ॥**

---

१–'मत्रि गुप्तभाषणे' चुरा० आ०। 'मन्त्रयते' इति विग्रहः ॥ २–'ज्ञा अवबोधने' क्र्या० उभ०, 'प्रीञ् तर्पणे' क्र्या० उभ०, 'कॄ विक्षेपे' तु० पर० ॥ ३–बुधः पण्डितः। अत्र 'बुध अवगमने' दिवा० आ० ॥ ४–'कृश तनूकरणे' दिवा० पर० ॥ ५–'ग्लै हर्षक्षये' भ्वा० पर० ६–गृहं भवनम्। 'गृह्णाति धान्यादिकम्' इति विग्रहः ॥ ७–अस्य कुलालोऽर्थः ॥ ८–अत्र तादर्थ्ये चतुर्थी। एषां सिद्ध्यर्थं कप्रत्ययो भवतीत्यर्थः ॥ ९–महीध्रकुध्रौ पर्वतपर्यायौ ॥

अधिकरणे उपपदे। कुरुचरः[1]॥

**भिक्षासेनादायेषु च ३।२।१७॥**

भिक्षाचरः। सेनाचरः। आदायेति ल्यबन्तम्। आदायचरः।

**कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२०॥**

एषु द्योत्येषु करोतेष्टः स्यात्॥

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८। ३।४६॥**

आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु। यशस्करी विद्या। श्राद्धकरः वचनकरः॥

**एजेः खश् ३।२।२८॥**

ण्यन्तादेजेः खश् स्यात्॥

**अरुर्द्विषदजन्तस्य मुम् ६।३।६७॥**

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य। शित्वाच्छबादिः। जनमेजयतीति जनमेजयः[2]॥

**प्रियवशे वदः[3] खच् ३।२।३८॥**

---

१—'कुरुषु चरति' इति विग्रहः। 'चर गतिभक्षणयोः' भ्वा पर०॥

२— 'जनम् एजयति कम्पयति' इति लौकिकविग्रहे ण्यन्तात् 'एज्' (एजृ कम्पने भ्वा० आ०) धातोः 'एजेः खश्' इति खश्प्रत्ययेऽनुबन्धलोपे शित्वात् सार्वधातुकत्वे शप्प्रत्यये गुणेऽयादेशे पररूपे च जनशब्देन सह समासे विभक्तेर्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति पूर्वपदस्य मुमागमे समुदायात्सौ रुत्वादिकार्ये 'जनमेजयः' इति॥ ३—'वद व्यक्तायां वाचि' भ्वा० पर०॥

प्रियंवदः[1] । वशंवदः[2] ॥

**अन्येभ्योऽपि दृश्यन्ते ३ । २ । ७५ ॥**

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥

**नेड्वशि कृति ७ । २ । ८ ॥**

वशादेः कृत इण् न स्यात् ॥ शॄ हिंसायाम् ॥ सुशर्मा । प्रातरित्वा[3] ॥

**विड्वनोरनुनासिकस्यात् ६ । ४ । ४१ ॥**

अनुनासिकस्य आत् स्यात् । विजायत इति विजावा[4] ॥ ओणृ अपनयने ॥ अवावा[5] । विच् । रुष रिष हिंसायाम् ॥ रोट् । रेट् । सुगण् ॥

**क्विप् च ३ २ । ७६ ॥**

अयमपि दृश्यते । उखास्रत्[6] । पर्णध्वत् । वाहभ्रट् ॥

**सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८ ॥**

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी[7] ॥

**मनः ३ । २ । ८२ ॥**

---

१- प्रियवक्ता ॥ २-अधीनः ॥ ३-'प्रातर्गामी' इत्यर्थः । अत्र 'इण् गतौ' इति धातुः ॥ ४-'जनी प्रादुर्भावे' दिवा० आ० ॥ ५-'ओण् वन्, इत्यत्र णकारस्यात्त्वेऽवादेशे सौ दीर्घादिकार्ये सिद्धम् । अत्र 'ओणृ अपनयने 'भ्वा० पर० धातुः ॥ ६-'उखायाः ( पात्रात् ) स्रंसते' इति 'उखास्रत्' अत्र 'अनिदिताम्—' इति नलोपः 'वसुस्रंसु-' इति दत्वं चर्त्वं च ('स्रंसु ध्वंसु भ्रंसु अवस्रंसने' भ्वा० आ०) 'पर्णध्वत्' 'वाहभ्रट्, इत्यत्र तु 'पर्णाद् ध्वंसते, वाहाद् ( अश्वात् ) भ्रंसते' इति विग्रहः । आद्ये 'वसुस्रंसु—' इति दत्वम्, अन्ते 'व्रश्च—' इति षत्वम् ॥ ७-उष्णं भुङ्क्ते तच्छीलः' इति वा विग्रहः ।

सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥

**आत्ममाने खश्च ३ । २ । ८३ ॥**

स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात्, चाण्णिनिः। पण्डितमात्मानं मन्यते पण्डितंमन्यः। पण्डितमानी ॥

**खित्यनव्ययस्य ६ । ३ । ६६ ॥**

खिदन्ते परे पूर्वपदस्य ह्रस्वः, ततो मुम् । कालिम्मन्या ॥

**करणे यजः ३ । २ । ८५ ॥**

करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि। सोमेनेष्टवान् सोमयाजी[१]। अग्निष्टोमयाजी ॥

**दृशेः क्वनिप् ३ । २ । ९४ ॥**

कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥

**राजनि युधि कृञः ३ । २ । ९५ ॥**

क्वनिप्स्यात्[३] । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ॥

**सहे[४] च ३ । २ । ९६ ॥**

कर्मणीति निवृत्तम्। सह योधितवान् सहयुध्वा। सहकृत्वा ॥

**सप्तम्यां[५] जनेर्डः ३ । २ । ९७ ॥**

---

१–'मन ज्ञाने' दिवा० आ० ॥ २–यज देवपूजादौ' भ्वा० उभ० ॥ ३–'राजन् !' शब्दे उपपदे युध्यतेः कृञश्च क्वनिप् स्यादित्यर्थः ॥ ४–सहशब्दोपपदादन्तर्भावितण्यर्थाद्युध्यतेः क्वनिप् स्यात् ॥ ५–सप्तम्यन्ते उपपदे जन्धातोर्डः स्यादित्यर्थः ॥

[1]तत्पुरुषे कृति बहुलम् ६ । ३ । १४ ॥

ङेरलुक् । सरसिजम्, सरोजम् ॥

[2]उपसर्गे च संज्ञायाम् ३ । २ । ९९ ॥

प्रजा स्यात्संततौ जने ॥

क्तक्तवतू निष्ठा १ । १ । २६ ॥

एतौ निष्ठासंज्ञौ स्तः ॥

निष्ठा ३ । २ । १०२ ॥

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति । भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं[3] मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८ । २ । ४२ ॥

रदाभ्यां परस्य निष्ठातस्य नः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दस्य च ॥ शॄ हिंसायाम् । ॠत इत् । रपरः । णत्वम् । शीर्णः । भिन्नः[4] । छिन्नः ॥

संयोगादेरातो[5] धातोर्यण्वतः ८ । २ । ४३ ॥

---

१–तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्या अलुग् वा । सरसिजं सरोजं वा कमलवाचि ॥ २–उपसर्गे उपपदे,'जनेर्डः' स्यात् संज्ञायाम् ॥ ३–अहम् अस्नासिषम्, मया अस्नायि वा इति विग्रहे स्नातम् । अत्र 'कर्तृकर्मणोः कृति' इति षष्ठी तु न, 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति तन्निषेधात् । अत्र 'ष्णा शौचे' अदा० पर० धातुः ॥ ४–'भिन्नः, छिन्नः' इत्यत्र क्रमेण 'भिदिर् विदारणे, छिदिर् द्वैधीकरणे' इमौ रुधादी उभ० ॥ ५–संयोगादेरादन्तस्य यण्वतो धातोः परस्य निष्ठातस्य नत्वम् ॥

निष्ठातस्य नः स्यात् । द्राण[1]: । ग्लान[2]: ॥

**ल्वादिभ्यः ८ । २ । ४४ ।**

एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः[3] ॥ **ज्या** धातुः ॥ ग्रहिज्येति संप्रसारणम् ॥

**हलः ६ । ४ । २ ॥**

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः । जीनः[4] ॥

**ओदितश्च ८ । २ । ४५ ॥**

भुजो भुग्नः । टुओश्वि,[5] उच्छूनः[6] ॥

**शुषः कः ८ । २ । ५१ ॥**

निष्ठातस्य कः । शुष्कः ॥

**पचो वः ८ । २ । ५२ ॥**

पक्वः । क्षै क्षये ॥

**क्षायो मः ८ । २ । ५३ ॥**

क्षामः ।

**निष्ठायां सेटि ६ । ४ । ५२ ॥**

णेर्लोपः । भावितः[7] । भावितवान् । दृह हिंसायाम् ॥

**दृढः स्थूलबलयोः ७ । २ । २० ॥**

---

१–'द्रा कुत्सायां गतौ' अदा० पर० ॥ २–'ग्लै हर्षक्षये' ॥ ३–'लूञ् छेदने' ॥ ४–जीर्णवयस्कः ॥ ५–अयं गतिवृद्धयर्थकः भ्वा० पर० ॥ ६–वृद्धिं गतः ॥ ७–चैत्रो मैत्रमबीभवत्, चैत्रेण मैत्रोऽभावि इति भावितः ॥ भावयतेर्निष्ठासूत्रेण क्तप्रत्यये इडागमे 'निष्ठायाम्–' इति णेर्लोपे सिद्धम् ॥

स्थूले बलवति च निपात्यते ॥

**दधातेर्हिः ७ । ४ । ४२ ॥**

तादौ किति । हितम् ॥

**दो दद् घोः ७ । ४ । ४६ ॥**

घुसंज्ञकस्य दा इत्यस्य दथ्[1] स्यात् तादौ किति । चर्त्वम् । दत्तः ॥

**लिटः कानज्वा ३ । २ । १०६ ॥**

**क्वसुश्च ३ । २ । १०७ ॥**

लिटः कानच् क्वसुश्च वा स्तः । तङानावात्मनेपदम् चक्राणः ॥

**म्वोश्च ८ । २ । ६५ ॥**

मान्तस्य धातोर्नत्वं म्वोः परतः । जगन्वान् ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ३ । २ । १२४ ॥**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः । शबादि पचन्तं[2] चैत्रं पश्य ॥

**आने मुक् ७ । २ । ८२ ॥**

अदन्ताङ्गस्य मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ॥

---

१–अत्र भाष्यकृता थान्त एव पाठः समर्थितः ॥ २–'पचन्तं चैत्रं पश्य, पचता चैत्रेण कृतम्, पचते चैत्राय देहि' इत्यादिषु प्रथमान्तभिन्नेषु 'चैत्रं चैत्रेण चैत्राय' इत्यादिषु पाकक्रियाकर्तुः सामानाधिकरण्यात् पाक्षिको लटः शत्रादिः ॥

**विदेः शतुर्वसुः ७ । १ । ३६ ॥**

वेत्तेः परस्य शतुर्वसुरादेशो वा । विदन् । विद्वान् ॥

**तौ सत् ३ । २ । १२७ ॥**

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

**लृटः सद्वा ३ । ३ । १४ ॥**

व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं[1] करिष्यमाणं पश्य ॥

**आ[2] क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३ । २ । १३४ ॥**

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥

**तृन् ३ । २ । १३५ ॥**

कर्ता कटान् ॥

**[3]जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३ । २ । १५५ ॥**

**षः प्रत्ययस्य १ । ३ । ६ ॥**

प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥

**सनाशंसभिक्ष उः ३ । २ । १६८ ॥**

चिकीर्षुः । आशंसुः । भिक्षुः ॥

---

१–एवम्, प्रत्यये करिष्यतोऽपत्यं कारिष्यतः, उत्तरपदे करिष्यद्भक्तिः, सम्बोधने हे करिष्यन्, लक्षणहेत्वोः अर्जयिष्यन् वसति ॥ २-अर्थाधिकारोऽयम्, 'भ्राजभास–' इत्येतदन्तशास्त्रविहितप्रत्ययाः–यथायथमेष्वर्थेषु बोध्याः ॥ ३–एभ्यः षाकन् प्रत्ययः स्यात् । 'जल्प व्यक्तायां वाचि' भ्वा० पर० । 'भिक्ष भिक्षायाम्' भ्वा० आ० । 'कुट्ट छेदने' भ्वा० पर० । 'लुटि स्तेये' भ्वा० पर० । 'वृङ सम्भक्तौ' क्र्या० आ० ॥

**[1]भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३।२।१७७॥**

विभ्राट्। भाः॥

**राल्लोपः ६।४।२१॥**

रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति। धूः। विद्युत्। ऊर्क्। पूः। दृशि[2]ग्रहणस्यापकर्षाज्जवतेर्दीर्घः। जूः। ग्रावस्तुत्। (क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च)। वक्तीति वाक्[3]॥

**च्छ्वोः शूडनुनासिके च ६।४।१९॥**

सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। पृच्छतीति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः[4]। जूरुक्तः। श्रयति हरिं श्रीः॥

**दा[5]म्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३।२।१८२॥**

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्॥

---

१–'टुभ्राजृ दीप्तौ' भ्वा० पर०। 'भास् दीप्तौ' भ्वा० आ०। 'धुर्वी हिंसायाम्' भ्वा० पर०। 'द्युत दीप्तौ' भ्वा० आ०। 'ऊर्ज बलप्राणनयोः' भ्वा० पर०। 'पॄ पालनपूरणयोः' जुहो०पर०। 'जु गतौ' सौत्रः। 'ग्रावन्' शब्दपूर्वः 'ष्टुञ् स्तुतौ' धातुः, 'ग्रावाणं स्तौति' इति ग्रावस्तुत्॥ २–'अन्येभ्योऽपि दृश्यते' इत्यग्रिमसूत्राद् दृशिग्रहणमपकृष्य तस्य च विध्यन्तरोपसंग्रहार्थत्वस्वीकाराज् जुधातोः क्विब् दीर्घश्च, इत्येव सूचयति–'दृशि०' इत्यादिना। विध्यन्तरोपसंग्रहमेव दर्शयति क्विब्वचीत्यादि वार्तिकम्॥ ३–'वच परिभाषणे' अदा० पर०॥ ४–कटप्रूः 'प्रुङ् गतौ' भ्वा० आ०। कटं तृणमयं स्तरणं तस्य रचयिता॥ ५–'दाप् लवने' अदा० पर०। 'णीञ् प्रापणे' भ्वा० उभ०। 'शसु हिंसायाम्' भ्वा० पर०। 'यु मिश्रणामिश्रणयोः' अदा० पर०। 'युजिर् योगे' रुधा० उभ०। 'ष्टुञ् स्तुतौ' अदा० उभ०। 'तुद व्यथने' तुदा० उभ०। 'षिञ् बन्धने' स्वा० उभ०। 'षिच क्षरणे' तुदा० उभ०। 'मिह

## ति तुत्रतथसिसुसरकसेषु च ७ । २ । ९ ॥

सेचने' ( मूत्रत्यागे ) 'पत्लृ पतने' उभौ भ्वा० पर० । 'दंश दंशने' भ्वा० पर० । 'णह बन्धने' दिवा० उभ० ॥

१–'ति' 'तु' 'त्र' 'त' 'थ' 'सि' 'सु' 'सर' 'क' 'स'–इत्येतेषु कृत्प्रत्ययेषु इडागमो न भवति । 'ति' इति क्तिन्क्तिचोः सामान्यग्रहणम्; क्तिन्–दीप्तिः । क्तिच्–दीप्तिः । 'तु' इति 'सितनिजनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्' इत्यौणादिकः 'तुन्' प्रत्ययः; सेतुः, सक्तुः इत्यादि । 'त्र' इति 'दाम्नीशसयुयुज०–' इत्यादिना विहितः 'ष्ट्रन्'; दात्रम्, पात्रम् इत्यादि । उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन' इति 'ष्ट्रन्' भवति; तन्त्रमित्यादि । 'त' इति 'हसिमृग्रिण्वाऽमिदमिलूपूधूर्विभ्यस्तन्' इत्यौणादिकः 'तन्'; हस्तः इत्यादि । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते न तु कृदन्तस्य; 'हसितम्' इत्येव तत्र भवति । 'थ' इति 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इत्यौणादिकः 'क्थन्'; हथः, कुष्ठम्, काष्ठम् इत्यादि । 'सि' इति 'प्लुषिकुषिशुषिभ्यः क्सिः' इत्यौणादिकः 'क्सिः'; कुक्षिः इत्यादि । 'सु' इति 'इषेः क्सुः' ( उ० सू० ) इत्यौणादिकः 'क्सुः'; इक्षुः । 'सर' इति 'अशेः सरः' ( उ० सू० ) 'सरः;' अक्षरम् ।

तथा च भाष्यम्—

अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोऽक्षरम् ।
वर्णं वाहुः पूर्वसूत्रे किमर्थमुपदिश्यते ॥ इति ॥

'क' इति 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ० सू०) इति 'कन्' प्रत्ययः; शल्कः । स' इति 'वृतृवदिहनिकमिकषिभ्यः सः' इत्यौणादिकः 'सः'; वत्सः इत्याद्युदाहरणानि । एतत्सूत्रापवादवार्तिकम्–'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' ग्रहादयो ग्रहप्रकारा येषामिट् क्तिनि दृश्यते; निगहीतिः, निपठितिः, उपस्निहितिः, निकुचितिः । कृतीत्येव, नेह रोदिति, स्वपिति ।

यदाहुः—

वृद्धिस्तन्तुश्च योत्रं च गर्तः काष्ठं वृषिस्तथा ।
जागृपुर्धूसरोऽर्कश्च हृषश्चेत्यग्रहादिषु ॥ इति ॥

एषां दशानां कृत्प्रत्ययानामिण् न । शस्त्रम् । योत्रम्[१] । योक्त्रम् । स्तोत्रम् । तोत्त्रम्[२] । सेत्रम्[३] । सेक्त्रम्[४] । मेढ्रम्[५] । पत्त्रम्[६] । दंष्ट्रा । नद्ध्री[७] ॥

**अर्तिलूधूसूखनसहचर इत्रः ३ । २ । १८४ ॥**

अरित्रम्[८] । लवित्रम्[१०] । धुवित्रम्[११] । सवित्रम् । खनित्रम्[१२] । सहित्रम् । चरित्रम् ॥

**पुवः संज्ञायाम् ३ । २ । १८५ ॥**

पवित्रम् ॥

॥ इति पूर्वकृदन्तम् ॥

## अथोणादयः

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ॥

**उणादयो बहुलम् ३ । ३ । १ ॥**

---

१–योत्रं योक्त्रं च वृषादेर्गले युगबन्धनरज्जोर्नाम ॥ २–वेणुदण्डो वृषभादिप्रेरणदण्डो वा ॥ ३–सेत्रं बन्धनम् ॥ ४–सेचनार्थं यन्त्रं पात्रं वा ॥ ५-जननेन्द्रियम् ६-शरो शरीति तकारलोपे पत्रमित्यपि रूपम् । 'पत्रं तु वाहने पर्णे स्यात् पक्षे शरपक्षिणोः' इति मेदिनी ॥ ७-अत्र 'नहो धः' इति हस्य धः 'झषस्तथोर्धोऽधः' इति तस्य धः,नद्ध्री चर्ममयी रज्जुः ॥ ८–'ऋ गतौ' भ्वा० पर० । 'लूञ् छेदने' क्र्या० उभ० । 'धूञ् विधूनने' तुदा० पर० । 'षू प्रेरणे' तुदा० पर० । 'खनु अवदारणे' भ्वा० पर० ॥ 'षह मर्षणे' भ्वा० आ० । 'चर गतिभक्षणयोः' भ्वा० पर० ॥ ९–नौपृष्ठस्थचालनदण्डो यो हि नौचालनसमये जले निपात्यते ॥ १०-छेदनशस्त्रम् । 'लूञ् छेदने' धातुः ॥ ११-कुटादित्वात् प्रत्ययस्य ङित्त्वे उवङ् । 'धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा' इत्यमरः ॥ १२-खननशस्त्रं कुद्दालादि ॥

एते वर्तमाने संज्ञायां च बहुलं स्युः। केचिदविहिता अप्यूह्याः ॥

संज्ञासु[1] धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

॥ इत्युणादयः ॥

---

# अथोत्तरकृदन्तम्

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३ । ३ । १० ॥**

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं[2] याति । कृष्णं दर्शको याति ।

**कालसमयवेलासु तुमुन् ३ । ३ । १६७ ॥**

कालार्थेषूपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥

**भावे ३ । ३ । १८ ॥**

---

१—केचिदविहिता अप्यूह्या इत्युक्तम्, कथमूह्याः ? इति दर्शयति संज्ञास्वित्यादिना; अयं भावः—संज्ञासु संज्ञाशब्देषु धातुरूपाणि प्रकल्प्य ततः परं प्रत्ययाः कल्पनीयाः । प्रत्ययेष्वपि गुणवृद्धिसम्प्रसारणतदभावादिकार्यानुसारेण ञ्णित्त्वं किङित्त्वं चेत्याद्यनुबन्धं जानीयात् । एतदेवोणादिषु शास्त्रम्—शासनार्हमिति भावः । यथा 'ऋफिड्डः' इति संज्ञाशब्दः । अत्र 'ऋ' धातुः प्रकृतिः, फिड्डप्रत्ययः, गुणाभावदर्शनाच्च प्रत्ययस्य कित्त्वमित्याद्यूह्यते ॥ २—अत्र 'अव्ययकृतो भावे' इति वार्तिकाद् भावे प्रत्ययः । 'कृन्मेजन्तः' इत्यव्ययत्वम्, 'सृजिदृशोः—' इत्यमागमः ॥ कृष्णं दर्शको यातीत्यत्र 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठ्याः प्रतिषेधः । 'वु' इत्यस्य 'युवोरनाकौ' इत्यकादेशश्च ॥

सिद्धावस्थापन्ने[1] धात्वर्थे वाच्ये धातोर्घञ्। पाकः॥

**अकर्तरि च कारके संज्ञायाम् ३। ३। १९॥**

कर्तृभिन्ने कारके घञ् स्यात्॥

**घञि[2] च भावकरणयोः ६। ४। २७॥**

रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः[3]॥

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३। ३। ४१॥**

एषु चिनोतेर्घञ् आदेश्च ककारः। उपसमाधानं राशीकरणम्। निकायः। कायः[4]। गोमयनिकायः॥

**एरच् ३। ३। ५६॥**

इवर्णान्तादच्। चयः[5]। जयः॥

**ॠदोरप् ३। ३। ५७॥**

ॠवर्णान्तादुवर्णान्ताच्चाप्। करः[6]। गरः[7]। यवः[8]। लवः[9]। स्तवः[10]। पवः[11]॥ (घञर्थे कविधानम्)। प्रस्थः[12]। विघ्नः[13]॥

---

१—यत्र क्रियायाः क्रियान्तराकाङ्क्षा सा सिद्धावस्था॥ २—भावे करणे च यो घञ् तस्मिन् परे रञ्जेर्नस्य लोपः स्यात्, राग इत्यत्र 'रञ्जनम्' 'रज्यतेऽनेन' इति वा विग्रहः। 'रञ्ज रागे' भ्वा० उभ०॥ ३—रङ्गो नाट्यशाला॥ ४—चीयतेऽस्मिन्नस्थ्यादिकमसौ कायः शरीरमिति यावत्॥ ५—'स्याच्चयो वप्रमस्त्रियाम्' इत्यमरः 'चयः समूहे प्राकारे मूलबन्धे समाहृतौ' इति मेदिनी॥ ६—'बलिहस्तांशवः कराः' इत्यमरः। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः' इति मेदिनी॥ ७—निगरणम्॥ ८—'यवो धान्येऽपृथक्कृतौ' इति हैमः॥ ९—'लवोऽभिलावो लवने' इत्यमरः॥ १०—स्तोत्रम्। ११—'निष्पावः पवने पवः' इत्यमरः। पवो धान्यादीनां बहुलीकरणम्॥ १२—कित्वात् 'आतो लोप इटि च' इत्यालोपः। प्रस्थः परिमाणविशेषः॥ १३—'गमहनजन—' इत्युपधालोपे 'हो हन्तेः—' इति कुत्वम्। विघ्नः—अन्तरायो विघातश्च॥

**ड्वितः क्त्रिः ३ । ३ । ८८ ॥**

**क्त्रेर्मम्नित्यम् ४ । ४ । २० ॥**

क्त्रिप्रत्ययान्तान्मप् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् ॥ डुवप् उप्त्रिमम्[1] ॥

**ट्वितोऽथुच् ३ । ३ । ८९ ॥**

**टुवेपृ** कम्पने, वेपथुः ॥

**[2]यजयाचयतविच्छप्रच्छरक्षो नङ् ३ । ३ । ९० ॥**

यज्ञः । याच्ञा । यत्नः । [3]विश्नः । प्रश्नः । रक्ष्णः ॥

**स्वपो नन् ३ । ३ । ९१ ॥**

[4]स्वप्नः ॥

**[5]उपसर्गे घोः किः ३ । ३ । ९२ ॥**

प्रधिः । उपधिः ॥

**स्त्रियां क्तिन् ३ । ३ । ९४ ॥**

स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः । ([6]ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ) । तेन नत्वम् । [7]कीर्णिः ।

---

१–'वापेन निर्वृत्तम्' इति विग्रहः ॥ २–'यज देवपूजादौ' 'टुयाचृ याच्ञायाम्' उभौ भ्वा० उभ० । 'यती प्रयत्ने' भ्वा० आ० । 'विच्छ गतौ' भ्वा० पर० । 'प्रच्छ ज्ञीप्सायाम्' तुदा० पर० । 'रक्ष रक्षणे' भ्वा० पर० ॥ ३–भाषार्थो विच्छधातुरत्र ॥ ४–'ञिष्वप् शये' अदा० पर० ॥ ५–उपसर्गे उपपदे घुसंज्ञकात् किः प्रत्ययो भावेऽकर्तरि कारके च । उपधिरक्षचक्रम्, प्रधिः–चक्रस्य परिधिः ॥ ६–ॠकारान्ताल्ल्वादिभ्यश्च परः क्तिन्प्रत्ययो निष्ठावद् भवतीति तदर्थः ॥ ७–विक्षेपः ॥

लूनिः[1] । धूनिः[2] । पूनिः[3] । ( संपदादिभ्यः क्विप् )। संपत् । विपत् । आपत् । ( क्तिन्नपीष्यते ) । संपत्तिः । विपत्तिः । आपत्तिः ॥

[4]ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३ । ३ । ९७ ॥

एते निपात्यन्ते ॥

[5]ज्वरत्वरस्रिव्यविमवामुपधायाश्च ६ । ४ । २० ॥

एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति ॥ अतः क्विप् । जूः[6] । तूः[7] । स्रूः[8] । ऊः[9] । मूः[10] ॥

इच्छा ३ । ३ । १०१ ॥

इषेर्निपातोऽयम् ॥

अ प्रत्ययात् ३ । ३ । १०२ ॥

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा[11] । पुत्रकाम्या[12] ॥

गुरोश्च हलः ३ । ३ । १०३ ॥

गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात् । ईहा[13] ॥

---

१–छेदनम् ॥ २–कम्पनम् ॥ ३–'पूञो विनाशे' इति वार्तिकेन विनाश एव नत्वविधानाद् 'ऋल्वादिभ्यः' इत्यादिना क्तिनि निष्ठावद्भावातिदेशात् 'पूनिः' इत्यस्य विनाशोऽर्थः ॥ ४–'अव रक्षणे' 'यु मिश्रणे' 'जू धातुः सौत्रः' 'षो अन्तकर्मणि' 'हि गतौ' 'कॄत संशब्दने' अत्रैते धातवः ॥ ५–'ज्वर रोगे' भ्वा० पर० ! 'ञित्वरा संभ्रमे' भ्वा० आ० । 'स्रिवु गतिशोषणयोः' दिवा० पर० । 'अव रक्षणे' 'मव बन्धने' भ्वा० पर० ॥ ६–रुग्णः ॥७–शीघ्रकारी ॥ ८–शोषको गन्ता वा ॥ ९–रक्षकः ॥ १०–बन्धनकर्ता ॥ ११–कर्तुमिच्छा ॥ १२–पुत्रस्येच्छा ॥ १३–'ईह चेष्टायाम्' भ्वा० आ० । 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः ॥

**ण्यासश्रन्थो युच् ३ । ३ । १०७ ॥**

अकारस्यापवादः । कारणा । हारणा ॥

**नपुंसके भावे क्तः ३ । ३ । ११४ ॥**

**ल्युट्[1] च ३ । ३ । ११५ ॥**

हसितम्, हसनम् ॥

**पुंसि संज्ञायां घः प्रायेण ३ । ३ । ११८ ॥**

**छादेर्घेऽद्व्युपसर्गस्य ६ । ४ । ९६ ॥**

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे । दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः[2] । आकुर्वन्त्यस्मिन्नित्याकरः[3] ॥

**अवे तॄस्त्रोर्घञ् ३ । ३ । १२० ॥**

[4]अवतारः कूपादेः । [5]अवस्तारो जवनिका ॥

**हलश्च ३ । ३ । १२१ ॥**

हलन्ताद् घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः[6] ॥

**ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३ । ३ । १२६ ॥**

---

१–क्तो ल्युड् नपुंसके भावे स्त्रियां क्तिन्नादयो यतः ।
अतो घञजपः पुंसि परिशेषादिति स्थितिः ॥

२–ओष्ठः ॥ ३–खनिः ॥ ४–सोपानमित्यर्थः । अत्र 'तॄ प्लवनतरणयोः' इति धातुः, भ्वा० पर० ॥ ५–'स्तॄञ् आच्छादने' क्र्या० उभ० ॥ ६–अत्र 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः [अपामार्गो हिन्दीभाषायाम् 'चिचिड़ा' इति प्रसिद्धः ] 'मृजू शुद्धौ' इति धातुः ॥

करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च। कृच्छ्रे—दुष्करः कटो भवता। अकृच्छ्रे—ईषत्करः। सुकरः॥

**आतो युच् ३।३।१२८॥**

खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः[1]। सुपानः॥

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३।४।१८॥**

प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्। प्राचां[2] ग्रहणं पूजार्थम्। [3]अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो दद् घोः। अलं दत्त्वा। घमास्थेतीत्त्वम्। पीत्वा खलु। अलंखल्वोः किम्? मा कार्षीत्। प्रतिषेधयोः किम्? अलंकारः॥

**समानकर्तृकयोः पूर्वकाले ३।४।२१॥**

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। भुक्त्वा पीत्वा व्रजति॥

**न क्त्वा सेट् १।२।१८॥**

सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्? कृत्वा॥

**रलो व्युपधाद्धलादेः संश्च १।२।२६॥**

---

१—अत्र 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् 'पा पाने' धातुः॥ २—'अव्ययकृतो भावे' इति वचनात् क्त्वाप्रत्ययो भावे, स च ल्युट् प्रत्ययस्य बाधकः वासरूपन्यायेन विकल्पेन भविष्यति, इत्येवं विकल्पसिद्धौ प्राचां ग्रहणं व्यर्थमित्यभिप्रेत्याह प्राचामिति॥ ३—अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते, इति नियमसूत्रार्थः॥ प्रकृते च न अम् किन्तु क्त्वा, अतः समासाभाव इति भावः॥

इवर्णोवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा, द्योतित्वा। लिखित्वा, लेखित्वा। व्युपधात्किम्? वर्तित्वा। रलः किम्? सेवित्वा। हलादेः किम्? एषित्वा। सेट् किम्? भुक्त्वा॥

**उदितो वा ७।२।५६॥**

उदितः परस्य क्त्व इड्वा। [1]शमित्वा, शान्त्वा। देवित्वा द्यूत्वा[2]। दधातेर्हिः। हित्वा॥

**[3]जहातेश्च क्त्वि ७।४।४३॥**

हित्वा। हाङस्तु–हात्वा॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७॥**

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। अनञ् किम्? अकृत्वा॥

**आभीक्ष्ण्ये णमुल् च ३।४।२२॥**

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च॥

**नित्यवीप्सयोः ८।१।४॥**

आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च। स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा। [4]पायम्पायम्। भोजम्भोजम्।

---

१–अत्र 'शमु उपशमे' इति धातुः, दिवा० पर०। 'शान्त्वा' इत्यत्र 'अनुनासिकस्य क्विझलोः–'इति दीर्घः॥ २–च्छ्वोः शूडनुनासिके च' इत्यूठ्॥३–'ओहाक्' धातोर्ह्यादेशः स्यात् क्त्वाप्रत्यये परे॥ ४–अत्र 'आतो युक्–' इति युक्॥

श्रावं श्रावम् ॥

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३ । ४ । २७॥**

एषु कृञो णमुल् स्यात् । सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम् । एवङ्कारम्। कथङ्कारम् । इत्थंकारं भुङ्क्ते । सिद्धेति किम् ? शिरोऽन्यथा कृत्वा भुङ्क्ते ॥ इत्युत्तरकृदन्तम् ॥

॥ इति कृदन्तम् ॥

---

# अथ विभक्त्यर्थाः[1]

**[2]प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६॥**

[3]नियतोपस्थितिकः प्रातिपदिकार्थः । [4]मात्रशब्दस्य प्रत्येकं योगः ।

---

१–'स्वौजसमौट्–' इति विहितस्वादीनां जिज्ञासितार्थनिरूपणायाह– अथेति ॥ २–प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च तानि प्रातिपदिकार्थलिङ्गपरिमाणवचनानि, तान्येव तन्मात्रम्, तस्मिन्, इति विग्रहः, अत्र वचनशब्दान्ते द्वन्द्वे कृते मात्रान्तरयोर्नित्यसमासवचनं क्लीबत्वं चेति मयूरव्यंसकादयश्चेत्येतदन्तर्गणपूत्रेण समासः ॥ ३–पद-समुदायरूपवाक्यार्थज्ञाने पदार्थज्ञानं कारणमित्यत आह—नियतेति । यस्मिन् प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेन भानं स प्राति-पदिकार्थः । तन्मात्रे प्रथमा इत्यर्थः । यथा 'उच्चैः' इत्युच्चारिते उच्चाधिकरणस्य 'नीचैः' इत्युच्चारितेऽधोऽधिकरणस्य 'कृष्णः' इत्यत्र पुंस्त्वविशिष्टवासुदेवरूपार्थस्य 'श्रीः' इत्यत्र स्त्रीत्वविशिष्टलक्ष्मीरूपार्थस्य 'ज्ञानम्' इत्यत्र क्लीबत्वविशिष्टान्तर्बोधस्य च भानात्तेऽर्था नियतो-पस्थितिकाः । तत्रार्थे 'उच्चैस्' इत्यादिशब्देभ्यः प्रथमा ॥ ४–'द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति वचनात् ॥

प्रातिपदिकार्थमात्रे [1]लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे–उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे–तटः, तटी, तटम् । परिमाणमात्रे–द्रोणो[2] व्रीहिः । वचनं[3] सङ्ख्या । एकः, द्वौ, बहवः ॥

**सम्बोधने च २ । ३ । ४७ ॥**

प्रथमा स्यात् । हे राम ।

इति प्रथमा ।

**कर्तुरीप्सिततमं कर्म १ । ४ । ४९ ॥**

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥

**कर्मणि द्वितीया २ । ३ । २ ॥**

अनुक्ते कर्मणि द्वितीया स्यात् । [4]हरिं भजति । [5]अभिहिते तु

---

१–यद्यपि लिङ्गमात्र एवार्थं उचितस्तथापि प्रातिपदिकार्थभानं विना लिङ्गमात्रार्थभानासम्भवात् 'तदाधिक्ये' इत्युक्तम् । एवं च प्रातिपदिकार्थापेक्षया यत्र लिङ्गलिङ्गत्वे अधिके भासेते तत्रापि प्रथमा, न तु तत्र ताभ्यामधिके कर्मत्वादावित्यर्थः । अस्योदाहरणं तटः, तटी, तटमिति इदमत्रावधारणीयम्; त्रिविधा नामशब्दा अलिङ्गा नियतलिङ्गा अनियतलिङ्गाश्च । तत्राद्या द्वितये प्रातिपदिकार्थमात्रस्योदाहरणानि तृतीया लिङ्गमात्राद्याधिक्यस्य । अनियतलिङ्गेषु प्रातिपदिकमात्रेण कस्यापि लिङ्गस्य नियमेनाभानात् तेषु प्रथमार्थं लिङ्गग्रहणम् ॥ २–द्रोणशब्दात्परिमाणविशेषस्य नियमेनोपस्थितावपि व्रीहिणा सह प्रथमार्थस्याभेदान्वयलाभाय परिमाणग्रहणम् ॥ ३–एकत्वादीनां प्रकृत्या उक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमा न स्यादतो वचनग्रहणम् ॥ ४–अत्र चैत्रः कर्ता तद्वृत्तिः क्रिया प्रीत्यनुकूलव्यापाररूपा तया क्रियया आप्तुं संबन्धुमिष्टतमम् इच्छोद्देश्यं हरिपदार्थरूपं कारकं तस्य कर्मसंज्ञा । मद्वृत्तिव्यापारजन्यप्रीतिरूपफलाश्रयो हरिर्भवतु—ईदृशेच्छोद्देश्यत्वं हरिपदार्थस्य । एवं ग्रामः संयोगाश्रयो भवतु, तण्डुलः विक्लित्याश्रयो भवतु; इत्यादिरूपेच्छा तत्र तत्रोहनीया ॥ ५–यदुक्तम्—

यस्मिन्नर्थे विधीयन्ते त्वादितव्यादितद्धिताः ।
समासो वा भवेद् यत्र स उक्तः प्रथमा ततः ॥

कर्मादौ प्रथमा—हरिः सेव्यते। लक्ष्म्या सेवितः॥

**अकथितं च १।४।५१॥**

[1]अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

[2]दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।

कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥१॥

गां दोग्धि पयः। बलिं याचते वसुधाम्। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां [3]क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति हरति कर्षति वहति वा।

---

१—अपादानसम्प्रदानाधिकरणत्वरूपेणाविवक्षितं कर्मत्वेन विवक्षितं कारकं कर्मसंज्ञमित्यर्थः॥ २—ननु हस्तं निदधाति वृक्षे इत्यत्रापि कर्मत्वविवक्षाप्रसङ्ग इत्यत आह दुहित्यादि—दुहादीनां नीप्रभृतीनां च धातूनां यत्कर्म तत्सम्बन्धी योऽर्थस्तत्रापादानत्वाद्यविवक्षायां कर्मत्वविवक्षायामेव कर्मसंज्ञा नान्यत्र, अत्राविवक्षा द्विधा अपादानत्वादिप्राप्तिपूर्विका सर्वथा तदप्राप्तिरूपा च, तत्र 'दुह् दण्ड् चिञ् जि मथ मुष् एषु अपादानत्वाविवक्षायां कर्मत्वविवक्षायां च कर्मत्वे द्वितीया, तेष्वपादानत्वविवक्षायां पञ्चम्यपि। 'रुध्' धातुप्रयोगेऽधिकरणत्वाविवक्षायां कर्मत्वे द्वितीया, अधिकरणत्वविवक्षायां च सप्तमी। 'ब्रू' 'शासु' इत्यनयोः प्रयोगे सम्प्रदानत्वाविवक्षायां कर्मत्वे द्वितीया। अन्यत्र सर्वत्राप्राप्तिरूपैवाविवक्षा, तेषु च सर्वथा कर्मसंज्ञैवेष्टेति भावः। अत्र सूत्रोदाहरणेऽपादानत्वाद्यविवक्षया, यत्कर्मत्वं तद् गौणकर्मत्वेन व्यवह्रियते॥ ३—अत्र क्षीरनिधेः गौणकर्मत्वं मथ्नातेरालोडनपूर्वकनिःसारणार्थत्वात्। अत एव 'देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति भारविप्रयोगः संगच्छते॥

अर्थनिबन्धनेयं[1] संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥

इति द्वितीया।

**स्वतन्त्रः कर्ता १ । ४ । ५४ ॥**

क्रियायां[2] स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

**साधकतमं करणम् १ । ४ । ४२ ॥**

क्रियासिद्धौ प्रकृष्टोपकारकं[3] करणसंज्ञं स्यात् ॥

**कर्तृकरणयोस्तृतीया २ । ३ । १८ ॥**

अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली ॥

इति तृतीया।

**कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४ । ३२ ॥**

दानस्य[4] कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ॥

---

१–दुहादीनां धातूनां येऽर्थास्तद्वाचकधातुमात्रनिमित्तकेयं संज्ञेत्यर्थः ॥ २–पाकादिरूपायां क्रियायां यः पदार्थः स्वातन्त्र्येण वक्त्रा विवक्षितः; विवक्षा च 'इयं क्रिया अनेनैव साधनीया' इति रूपेण तदानीं स पदार्थः कर्तृसंज्ञः। अतएव 'स्थाली पचति, अग्निः पचति' इत्यादिप्रयोगा भवन्ति ॥ ३–यद्व्यापाराव्यवधानेन क्रियाफलनिष्पत्तिः तत्प्रकृष्टम्। सर्वाणि कारकाणि यद्यपि क्रियोपकारकाणि तथापीदमतिशयेन क्रियोपकारकमतस्तमप्प्रयोगः संगच्छते। सकृदनेकेषामतिशयेनोपकारकत्वाभावादेकस्यैवैकस्मिन् वाक्ये करणसंज्ञा इति सम्प्रदायः ॥ ४–इदमुपलक्षणम्, तथा च कर्ता क्रियामात्रस्य कर्मणा सह संबन्धुं यं पदार्थमभिप्रैति स संबन्धोद्देश्यः सम्प्रदानसंज्ञः। अत एव विप्राय गां ददाति इतिवत् 'चैत्रो मैत्राय वार्तां कथयति, तदाचक्ष्वासुरेन्द्राय, तुभ्यं हितमुपदिशामि' इत्यादिप्रयोगाः संगच्छन्ते ॥

**चतुर्थी सम्प्रदाने २ । ३ । १३ ॥**

विप्राय गां ददाति ॥

**नमस्स्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ । १६ ॥**

एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥

इति चतुर्थी ।

**ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥**

अपायो [१]विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥

**अपादाने पञ्चमी २ । ३ । २८ ॥**

ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥

इति पञ्चमी ।

**षष्ठी शेषे २ । ३ । ५० ॥**

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः ॥

इति षष्ठी ।

**आधारोऽधिकरणम् १ । ४ । ४५ ॥**

---

१-विश्लेषो विभागानुकूलव्यापारस्तस्मिन् साध्ये जननीये यद्ध्रुवमुदासीनं तादृशव्यापारानाश्रयं तदपादानसंज्ञम् । एवं च विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वमपादानत्वम् ॥

कर्तृकर्मद्वारा[1] तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ।

**सप्तम्यधिकरणे च २ । ३ । ३६ ॥**

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको[2] वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते[3] । स्थाल्यां[4] पचति । मोक्षे[5] इच्छास्ति । सर्वस्मिन्नात्मास्ति[6] । वनस्य दूरे अन्तिके वा ॥

इति सप्तमी ॥

इति[7] विभक्त्यर्थाः ॥

---

१–साक्षाद्व्यापाररूपक्रियाया आधारः कर्ता, फलरूपाया आधारः कर्म, ताभ्यां बाधात् परम्परया क्रियाधारस्यैतत्संज्ञा । तथा हि 'कटे आस्ते' इत्यत्र कर्ता चैत्रादिस्तन्निष्ठास्तिक्रियायाः परम्परयाधारस्य कटस्याधिकरणसंज्ञा । एवम् 'स्थाल्यां पचति' इत्यत्र साक्षाद्विक्लित्तेराधारस्तण्डुलास्तदाधारः स्थाली परम्परया विक्लित्तेरप्याधारः । एवं सर्वत्रोहनीयम् ॥ २–उप समीपे श्लेषः सम्बन्धस्तत्कृत औपश्लेषिकः । विषये भवो वैषयिकः । य आधारः सर्वमभिव्याप्नोति सोऽभिव्यापकः । मूले क्रमेणैषामुदाहरणानि । ३–आसनक्रियाकर्तृद्वारा आसनक्रियाया आधारः कटोऽधिकरणसंज्ञः ॥ ४–पाकक्रियाकर्मतण्डुलादिद्वारा पाकक्रियाया आधारः स्थाली अधिकरणसंज्ञा ॥ ५–अस्तिक्रियाकर्तृभूतेच्छाद्वारा अस्तिक्रियाया आधारो मोक्षोऽधिकरणसंज्ञः ॥ ६–अस्तिक्रियाकर्तृभूतात्मद्वारा अस्तिक्रियाया आधारः सर्वमधिकरणसंज्ञम् ॥ ७–सर्वासां विभक्तीनामेकत्र मेलनं यथा––

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥

# अथ समासाः

तत्रादौ केवलसमासः । समासः पञ्चधा । तत्र समसनं[1] समासः । स च [2]विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः ॥ १ ॥ प्रायेण [3]पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः ॥ २ ॥ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः ॥ तत्पुरुषभेदः[4] कर्मधारयः । [5]कर्मधारयभेदो द्विगुः ॥ ३ ॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ॥ ४ ॥ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ ५ ॥

**समर्थः पदविधिः २ । १ । १ ॥**

[6]पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥

**प्राक्कडारात्समासः २ । १ । ३ ॥**

कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥

**सह सुपा २ । १ । ४ ॥**

सुप् सुपा सह वा समस्यते ॥ समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । [7]परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । [8]वृत्त्यर्थावबोधकं वाक्यं विग्रहः ।

---

१—बहूनां पदानां मिलित्वैकपदभवनम् ॥ २—विशेषसंज्ञा अव्ययीभावादिरूपास्ताभिर्विनिर्मुक्त इत्यर्थः ॥ ३—पूर्वपदस्यार्थः प्रधानं यत्र । एवमन्यत्रापि ॥ ४—'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति सूत्रात् ॥ ५—'संख्यापूर्वो द्विगुः' इति सूत्रात् ॥ ६—पदमुद्दिश्य विधीयमानसमाससंज्ञादिः पदविधिः स समर्थस्य परस्परान्वितार्थस्य आश्रितो भवति अर्थात् समर्थाश्रयस्यैव भवति ॥ सामर्थ्यं द्विविधं व्यपेक्षारूपम् एकार्थीभावरूपं च । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात् परस्परं सम्बन्धो व्यपेक्षा । स्वार्थपर्यवसायिनां पदानां विशेषणविशेष्यभावावगाह्येकोपस्थितिजनकत्वमेकार्थीभावत्वम् ॥ ७—समस्यमानपदार्थापेक्षया भिन्नार्थाभिधायिनीत्यर्थः ॥ ८—वृत्तेर्योऽर्थः तस्यावबोधकं वाक्यं विग्रह इत्यर्थः ॥

स च लौकिकोऽलौकिकश्चेति द्विधा। तत्र पूर्वं भूत इति लौकिकः[1]। 'पूर्व अम् भूत सु' [2]इत्यलौकिकः। [3]भूतपूर्वः। भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः। ( [4]इवेन समासो विभक्त्यलोपश्च )। वागर्थौ इव वागर्थाविव ॥

इति केवलसमासः

## अथाव्ययीभावः

**अव्ययीभावः २ । १ । ५ ॥**

अधिकारोऽयं प्राक् तत्पुरुषात् ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६ ॥**

विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः। प्रायेणाविग्रहो नित्यसमासः। [5]प्रायेणास्वपदविग्रहो वा। विभक्तौ, हरि ङि अधि[6] इति स्थिते ॥

---

१–लोके प्रयोगार्ह एव लौकिकः ॥ २–लोके प्रयोगानर्हं एवालौकिकः ॥ ३–मूलोक्तविग्रहे 'सह सुपा' इत्यनेन विभाषा समाससंज्ञायां समासत्वात् प्रातिपदिकत्वेन विभक्त्योर्लुकि 'भूतपूर्वे चरट्' इति निर्देशेन भूतशब्दस्य पूर्वनिपाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात्सौ रुत्वादिकार्ये 'भूतपूर्वः' इति सिद्धम् ॥ ४–विभाषाधिकाराभावेऽपि, अयं समासोऽनित्य। अत एव शब्दस्य व्यत्ययेनापि प्रयोगे 'उद्बाहुरिव वामनः' इति कालिदासप्रयोगः संगच्छते ॥५–ननु विग्रहेणैव समासार्थबोधनाद अविग्रह इति कथनमसङ्गतमित्यरुचेराह प्रायेणास्वपदेत्यादि— न स्वेन पदेन विग्रहो यस्य सोऽस्वपदविग्रहः ॥ ६–अत्र सप्तम्यर्थस्यैव द्योतकोऽधिः। यद् अव्ययं यस्या विभक्तेरर्थस्य द्योतकं तद्विभक्त्यन्तस्यैव तेनाव्ययेन सह समासो भवतीति बोद्धव्यम् ॥

**[1]प्रथमानिर्दिष्टं समास उपसर्जनम् १ । २ । ४३ ॥**

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

**उपसर्जनं पूर्वम् २ । २ । ३० ॥**

समासे उपसर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । [2]अधिहरि ॥

**अव्ययीभावश्च २ । ४ । १८ ॥**

अयं नपुंसकं स्यात् ॥

**नाव्ययीभावादतोऽम्त्वपञ्चम्याः २ । ४ । ८३ ॥**

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च स्यात् ॥ गाः पातीति गोपास्तस्मिन्नित्यधिगोपम् ॥

**तृतीयासप्तम्योर्बहुलम् २ । ४ । ८४ ॥**

---

१–समाससंज्ञाविधायकशास्त्रघटकप्रथमान्तपदजन्यबोधविषयोऽर्थः उपसर्जनसंज्ञः । तथा हि समाससंज्ञाविधायकं शास्त्रम् 'अव्ययं विभक्ति—' इत्यादिसूत्रं तद्घटकं प्रथमान्तं पदम् 'अव्ययम्' इति, तज्जन्यबोधविषयः 'अधि' इति, तस्योपसर्जनसंज्ञा ॥ २–'हरि ङि अधि' इत्यलौकिकविग्रहे 'अव्ययं विभक्ति—' इत्यादिना अव्ययीभावसमासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति अधेः पूर्वनिपाते 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वे 'सुपो धातु—' इत्यादिना सुपो लुकि एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकनिमित्तकस्वाद्युत्पत्तौ 'अव्ययीभावश्च' इत्यव्ययत्वात् सुपो लुकि 'अधिहरि' इति सिद्ध्यति ॥

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम्, अधिगोपेन, अधिगोपे वा । [1]कृष्णस्य समीपम् उपकृष्णम् । [2]मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृ[3]द्धिर्दुर्यवनम् । [4]मक्षिकाणामभावो निर्मक्षिकम् । [5]हिमस्यात्ययोऽतिहिमम् । [6]निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । [7]हरिशब्दस्य प्रकाश इतिहरि । [8]विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । [9]रूपस्य योग्यमनुरूपम् । [10]अर्थमर्थं प्रति प्रत्यर्थम् । [11]शक्तिमनतिक्रम्य यथाशक्ति ॥

## अव्ययीभावे चाकाले ६ । ३ । ८१ ॥

सहस्य सः स्यादव्ययीभावे न तु काले । [12]हरेः सादृश्यं सहरि । [13]ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । [14]चक्रेण युगपत् सचक्रम् । [15]सदृशः सख्या ससखि । [16]क्षत्राणां संपत्तिः सक्षत्रम् । [17]तृणमप्यपरित्यज्य सतृणमत्ति । [18]अग्निग्रन्थपर्यन्तमधीते साग्नि ॥

## नदीभिश्च २ । १ । २० ॥

---

१–'कृष्णस्य समीपम्' इति लौकिकविग्रहः, 'कृष्ण ङस् उप' इत्यलौकिकविग्रहः ॥ २-अत्र 'मद्र आम् सु' इत्यलौकिकविग्रहः ३–'यवन आम् दुर्' ॥ ४–'मक्षिका आम् निर्' ॥ ५–'हिम ङस् अति' ६–'निद्रा ङस् अति' ॥ ७–'हरि ङस् इति' ॥ ८–'विष्णु ङस् अनु' ॥ ९–'रूप ङस् अनु' ॥ १०–'अर्थ अम् प्रति' ॥ ११–'शक्ति ङस् यथा'॥ १२–'हरि टा सह' ॥ १३–'ज्येष्ठ ङस् अनु' ॥ १४–'चक्र टा सह' ॥ १५–'सखि टा सह' ॥ १६–'क्षत्र भिस् सह' ॥ १७–'तृण टा सह' ॥ १८–'अग्नि टा सह' ॥

नदीभिः सह संख्या समस्यते। (समाहारे चायमिष्यते)। [1]पञ्चगङ्गम्। [2]द्वियमुनम्॥

**तद्धिताः। ४। १। ७६॥**

आपञ्चमसमाप्तेरधिकारोऽयम्॥

**अव्ययीभावे [3]शरत्प्रभृतिभ्यः ५। ४। १०७॥**

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः [4]समीपमुपशरदम्। [5]प्रतिविपाशम्। (जराया जरश्च) [6]उपजरसमित्यादि॥

**अनश्च ५। ४। १०८॥**

अन्नन्तादव्ययीभावाट्टच् स्यात्॥

**नस्तद्धिते ६। ४। १४४॥**

नान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्। [7]अध्यात्मम्॥

**नपुंसकादन्यतरस्याम् ५। ४। १०९॥**

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म॥

**झयः ५। ४। १११॥**

झयन्तादव्ययीभावाट्टज्वा स्यात्। उपसमिधम्। उपसमित्॥

इत्यव्ययीभावः॥ २॥



---

१–'पञ्चानां गङ्गानां समाहारः' इति लौकिकः 'पञ्चन् जस् गङ्गा जस्' इत्यलौकिको विग्रहः॥ २–द्वयोर्यमुनयोः समाहारः'॥ ३–अत्र शरदादिनिर्देशः॥ ४–अत्र समीपार्थे 'अव्ययं विभक्ति–' इत्यादिना समासः॥ ५–'विपाशं विपाशं प्रति' इति लौकिके 'विपाश अम् प्रति' इत्यलौकिके विग्रहे 'अव्ययं विभक्ति–' इत्यादिना यथार्थेऽव्ययीभावः॥ ६–'जरायाः समीपम्' इति विग्रहः॥ ७–'आत्मनि अधि' इति लौकिके 'आत्मन् ङि अधि' इत्यलौकिके विग्रहे विभक्त्यर्थेऽव्ययीभावः॥

# अथ तत्पुरुषः

**तत्पुरुषः २ । १ । २२ ॥**

अधिकारोऽयं प्राग्बहुव्रीहेः ॥

**द्विगुश्च २ । १ । २३ ॥**

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः२।१।२४॥**

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः । कृष्णं श्रितः कृष्णश्रित इत्यादि[1] ॥

**तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३० ॥**

तृतीयान्तं [2]तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । [3]धान्येनार्थो धान्यार्थः । [4]तत्कृतेति किम् ? अक्ष्णा काणः ॥

**कर्तृकरणे कृता बहुलम् २ । १ । ३२ ॥**

---

१–आदिपदेन दुःखातीतः, कूपपतितः, ग्रामगतः, तुहिनात्यस्तः (अत्यासोऽतिक्रमः), सुखप्राप्तः, दुःखापन्नः इत्युदाहरणानि ग्राह्याणि ॥ २–तृतीयान्तपदम्, 'शङ्कुलया' इति तदर्थः शङ्कुलारूपं करणम् तत्कृतो गुणः खण्डनक्रियारूपः तद्वाचकं खण्डपदं तत्प्रकृतिकसुबन्तेन सह 'शङ्कुलाटा' इति तृतीयान्तस्य समासः ॥ ३–अर्थ्यंत इति अर्थः प्रयोजनम्, 'धान्येन' इत्यत्र करणे तृतीया ॥ ४–ननु एतत्सूत्रोदाहरणद्वये करण एव तृतीया तथा च 'कर्तृकरणे–' इत्यनेनैव सिद्धे समासे इदं सूत्रं व्यर्थमित्याशङ्कते–तत्कृतेति, 'गुणवचनेन चेत्तृतीयान्तस्य समासस्तर्हि तत्कृतेनैव' इति नियमार्थमिदमित्याशयेनाह–अक्ष्णेति ॥

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। (प०) [1]कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २ । १ । ३६ ॥**

चतुर्थ्यन्तार्थाय[2] यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। (तदर्थेन [3]प्रकृतिविकृतिभाव एवेष्टः) तेनेह न–रन्धनाय स्थाली। (अर्थेन नित्यसमासो [4]विशेष्यलिङ्गता चेति वक्तव्यम्)। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥

**पञ्चमी भयेन २ । १ । ३७ ॥**

चोराद्भयं चोरभयम्॥

**[5]स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९ ॥**

**पञ्चम्याः स्तोकादिभ्यः ६ । ३ । २ ॥**

---

१–ननु 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणम्' इति परिभाषया कृदन्ततदादेरेवात्र ग्रहणे निर्भिन्नशब्देन समासो न स्यादत आह कृद्ग्रहण इति॥ २–चतुर्थ्यन्तवाच्याय यूपाय यद् दार्वादि तद्वाचिना सह चतुर्थ्यन्तं समस्यत इत्यर्थः॥ ३–प्रकृतिः समवायिकारणं विकृतिः कार्यमेवं च यत्र समवायिकारणकार्यभावस्तत्र समासो यथा 'घटाय मृत्तिका घटमृत्तिका, पटाय तन्तवः पटतन्तवः, शङ्कवे दारु शङ्कुदारु' इत्यादि। न तु 'रन्धनाय स्थाली' इत्यादौ॥ ४–'परवल्लिङ्गम्––' इति नियमतः प्राप्तपुंस्त्वस्य बाधकमिदम्, विशेष्यस्य यादृशं लिङ्गं तादृशमेव समस्तपदस्येत्यर्थः॥ ५–स्तोकाद्यर्थप्रकृतिकं कृच्छ्रप्रकृतिकं च पञ्चम्यन्तं क्तान्तेन सुबन्तेन सह समस्यते॥

अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥

**षष्ठी २ । २ । ८ ॥**

सुबन्तेन प्राग्वत् । राजपुरुषः ॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥**

अवयविना[1] सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । [2]षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥

**अर्धं नपुंसकम् २ । २ । २ ॥**

समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत् । अर्धं पिप्पल्याः [3]अर्धपिप्पली ॥

**सप्तमी शौण्डैः २ । १ । ४० ॥**

सप्तम्यन्तं शौण्डादिभिः[4] प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥

**दिक्संख्ये संज्ञायाम् २ । १ । ५० ॥**

संज्ञायामेवेति नियमार्थं सूत्रम् । [5]पूर्वेषुकामशमी । सप्तर्षयः ।

---

१—एकदेशशब्दश्चावयववाचीति भावः ॥ २—षष्ठीसमासे सति 'षष्ठी' इति प्रथमान्तत्वेन निर्देशात् षष्ठ्यन्तकायशब्दस्य पूर्वनिपाते 'कायपूर्वः' इति स्यात्, ततश्च पूर्वादिशब्दानां पूर्वनिपातनियमार्थमेवैतत् सूत्रमिति बोध्यम् ॥ ३— अत्र पिप्पलीशब्दे 'एकविभक्तावषष्ठ्यन्तवचनम्' इति वचनेन अनुपसर्जनत्वात् 'गोस्त्रियोः—' इति ह्रस्वो न ॥ ४—शौण्डादयो यथा——शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधि, पटु, पण्डित, कुशल, चपल, निपुण इति ॥ ५—इषुकामशमी ग्रामविशेषः । पूर्वेषुकामशमी संज्ञा ॥

तेनेह[1] न–उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

**तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१ ॥**

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये[2] प्राग्वत् । पूर्वस्यां शालायां भवः[3]–पूर्वा शाला इति समासे जाते ( सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः[4] ) ॥

**दिक्पूर्वपदादसंज्ञायां ञः ४ । २ । १०७ ॥**

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥

**तद्धितेष्वचामादेः ॥ ७ । २ । ११७ ॥**

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः[5] ॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ । ( द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ) ॥

**गोरतद्धितलुकि ५ । ४ । ९२ ॥**

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि ।

---

१–'संज्ञायामेव' इति नियमेन ॥ २–दिक्संख्याप्रकृतिकं सुबन्तं सुबन्तेन समस्यते इत्यर्थः ॥ ३–भव इति–'तत्र भवः' तद्धितप्रकरणे 'भवः' इत्यर्थनिर्देशात् ॥ ४–पुंल्लिङ्गे यादृशं रूपं तत्प्राप्तिः, अर्थात् स्त्रीप्रत्ययनिवृत्तिः; तन्निमित्तस्य स्त्रीत्वस्य निवृत्तेरिति भावः ॥ ५–'पूर्वस्यां शालायां भवः' इति लौकिकविग्रहे 'पूर्वा ङि शाला ङि' इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्यनेन पूर्वपदस्य पुंवद्भावे 'पूर्वशाला' शब्दात् ङौ 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वेन प्रातिपदिकत्वात् ङेर्लुकि 'तद्धितेष्वचामादेः' इति आद्यचो वृद्धौ स्वादिकार्ये 'पौर्वशालः' इति सिद्धम् ॥

पञ्चगवधनः[1] ॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः १ । २ । ४२ ॥**

**संख्यापूर्वो द्विगुः २ । १ । ५२ ॥**

तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात् ॥

**द्विगुरेकवचनम् २ । ४ । १ ॥**

द्विग्वर्थः समाहार एकवत्स्यात् ॥

**स नपुंसकम् २ । ४ । १७ ॥**

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ॥

**विशेषणं विशेष्येण बहुलम् २ । १ । ५७ ॥**

भेदकं[2] भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । [3]बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः । क्वचिन्न–रामो जामदग्न्यः ॥

---

१–'पञ्चन् जस् गो जस् धन सु' इत्यलौकिकविग्रहे पूर्वम् 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासः, तदनु 'तद्धितार्थोत्तरपदसमाहारे च' इति तत्पुरुषसमासे प्रातिपदिकत्वात् 'सुपो धातु–' इति सुपो लुकि, अन्तर्वर्तिविभक्तिमाश्रित्य पदत्वान्नलोपे 'पञ्च गो धन' इत्यवस्थायां गोशब्दात् 'गोरतद्धितलुकि' इति टचि, अनुबन्धलोपे, अवादेशे 'पञ्चगवधन' इत्यतः प्रातिपदिकत्वात्सौ विभक्तौ, अनुबन्धलोपे, रुत्वे विसर्गे च 'पञ्चगवधनः' इति सिद्धम् ॥

२–भेद्यं विशेष्यमित्याहुर्भेदकं तु विशेषणम् ।
प्रधानं तु विशेष्यं स्यादप्रधानं विशेषणम् ॥
पदार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् ।
विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव समर्पणात् ॥

३–क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

**उपमानानि[1] सामान्यवचनैः २ । १ । ५५ ॥**

घन इव श्यामो घनश्यामः । ( शाकपार्थिवादीनां सिद्धये [2]उत्तरपदलोपस्योपसंख्यानम् ) । शाकप्रियः पार्थिवः शाकपार्थिवः[3] । देवपूजको ब्राह्मणो देवब्राह्मणः ॥

**नञ् २ । २ । ६ ॥**

नञ् सुपा सह समस्यते ॥

**नलोपो नञः ६ । ३ । ७३ ॥**

नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥

**तस्मान्नुडचि ६ । ३ । ७४ ॥**

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । [4]नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥

**कुगति[5] प्रादयः २ । २ । १८ ॥**

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ॥

**ऊर्यादिच्विडाचश्च १ । ४ । ६१ ॥**

---

१—उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम् ॥ २—पूर्वपदे यद् उत्तरपदं तस्य लोपो वक्तव्य इत्यर्थः ॥ ३—शाकप्रियशब्दे उत्तरपदभूतस्य प्रियपदस्य लोपे 'शाकपार्थिवः' इति सिद्धयति, एवं पूजकशब्दलोपेन 'देवब्राह्मणः' इति सिद्धयति ॥ ४—नञ एकधाशब्देन समासे नञो नकारलोपे एकधाशब्दस्य नुडागमे 'अनश्वः' इतिवत् 'अनेकधा' इति स्यादित्याशङ्कां परिहरति नैकधेति ॥ ५—यद्यपि गतिपदेन प्रादीनामेव ग्रहणं भवति, तथापि क्रियायोग एव तेषां गतिसंज्ञाविधानेन यत्र क्रियायोगाभावस्तत्रापि 'सुपुरुषः' इत्यादौ समासविधानार्थं प्रादिग्रहणम् ॥

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य[1] । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ॥ ( प्रादयो गताद्यर्थे प्रथमया ) । प्रगत आचार्यः प्राचार्यः । ( अत्यादयः क्रान्ताद्यर्थे द्वितीयया ) । अतिक्रान्तो मालामिति विग्रहे—

**एकविभक्ति चापूर्वनिपाते १ । २ । ४४ ॥**

विग्रहे[2] यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥

**गोस्त्रियोरुपसर्जनस्य १ । २ । २८ ॥**

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । ( अवादयः क्रुष्टाद्यर्थे तृतीयया ) । अवक्रुष्टः कोकिलया—अवकोकिलः । ( पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ) । परिग्लानोऽध्ययनाय—पर्यध्ययनः । ( निरादयः क्रान्ताद्यर्थे पञ्चम्या ) । निष्क्रान्तः कौशाम्ब्याः[3]—निष्कौशाम्बिः ॥

---

१—'ऊरीकृत्य' इत्यस्य स्वीकृत्य, मनसि कृत्वा इति चार्थः । ऊरीशुक्लीपटपटाशब्दानाम् 'कृत्वा' इति क्त्वान्तेन योगे 'ऊर्यादि—' इति सूत्रेण गतिसंज्ञायां 'कुगति—' इति सूत्रेण समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वाशब्दस्य ल्यबादेशे 'ह्रस्वस्य पिति—' इति तुगागमे स्थानिवद्भावेन क्त्वान्तत्वात् 'क्त्वातोसुन्—' इत्यव्ययत्वे 'अव्ययादाप्सुपः' इति समासाज्जातस्य सुपो लुकि एषां साधुत्वम् ॥ २—विग्रहवाक्यघटकं यत्किंचिदनियतविभक्तिकपदापेक्षया तद्वाक्यघटकं यन्नियतविभक्तिकं पदं तदुपसर्जनसंज्ञं स्यात् । अत्र विग्रहवाक्ये अनियतविभक्तिकम् 'अति' पदम् अतिक्रान्तमतिक्रान्तेनेत्यादिविग्रहात् तदपेक्षया द्वितीयान्तमालाशब्दस्य नियतविभक्तित्वम्, तस्योपसर्जनसंज्ञा ॥ ३—कौशाम्बी नाम नगरीविशेषः ॥

**तत्रोपपदं सप्तमीस्थम् ३ । १ । ९२ ॥**

सप्तम्यन्ते[1] पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥

**उपपदमतिङ् २ । २ । १९ ॥**

उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । अतिङ किम् ? मा भवान् भूत् । माङिलुङिति सप्तमीनिर्देशान्माङुपपदम् । (प०) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । व्याघ्री[2] । अश्वक्रीती[3] । कच्छपीत्यादि ॥

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५ । ४ । ८६ ॥**

---

१ – सप्तम्यन्तं पदम् 'कर्मण्यण्' इत्यादौ 'कर्मणि' इत्यादि पदं तत्र वाच्यत्वेन स्थितः कुम्भादिरूपोऽर्थः, 'कुम्भं करोति' इत्यादौ कुम्भादेः कर्मसंज्ञाविधानात्; तद्वाचकं पदम 'कुम्भम्' इत्यादि द्वितीयान्तं तस्योपपदसंज्ञा ॥ २–'व्याजिघ्रति' इति विग्रहे 'आतश्चोपसर्गे–' इति कप्रत्यये आङो 'घ्र' शब्देन वेः 'आघ्र' शब्देन च 'गतिकारक' इति परिभाषासहकारेण सुबुत्पत्तेः प्राग् गतिसमासे जातिवाचकत्वात् 'जातेरस्त्रीविषयात्–' इत्यादिना ङीषि सुबुत्पत्त्यनन्तरं समासे तु सुपः प्राक् टापि अदन्तत्वाभावान् ङीष् न स्यात् । ३ – 'अश्वेन क्रीता' इति विग्रहे 'कर्तृकरणे कृता–' इति सूत्रेण निर्दिष्टपरिभाषया सुबुत्पत्तेः प्राक्समासे 'क्रीतात्करणपूर्वात्' इति ङीषि सिद्धम् । सुबुत्पत्त्यनन्तरं समासे तु टाप्यदन्तत्वाभावादत्रापि ङीष् न स्यात् ॥ ४–'कच्छेन पिबति' इति विग्रहे 'सुपि स्थः' इत्यत्र 'सुपि' इति विभक्तयोगेन कप्रत्यये 'उपपदमतिङ' इति समासे शेषकार्ये च जाते जातिलक्षणो ङीष् । अत्रापि परिभाषाविरहे पूर्वं टापि सति ङीष् न स्यादिति बोध्यम् ॥

संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्[१] । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥

**अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ५ । ४ । ८७ ॥**

एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहणं[२] द्वन्द्वार्थम् ॥

**रात्राह्नाहाः पुंसि २ । ४ । २९ ॥**

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः[३] । संख्यातरात्रः । (संख्यापूर्वं रात्रं क्लीबम्) । द्विरात्रम्[४] । त्रिरात्रम् ॥

**राजाहःसखिभ्यष्टच् ५ । ४ । ९१ ॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥

**आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६ ॥**

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६ । ३ । ४७ ॥**

---

१–अत्र 'तद्धितार्थ–' इति समासे सुपो लुकि 'तत्पुरुषस्य–' इत्यचि यथाप्राप्तकार्ये एतत् सिद्धम् ॥ २–'अहन्' शब्दात्परस्य रात्रिशब्दस्य द्वन्द्व एव संभवादिति भावः ॥ ३–'सर्वा चासौ रात्रिश्च, संख्याता चासौ रात्रिश्च' इति विग्रहे विशेषणसमासः ॥ ४–'द्विरात्रम्' इत्यादिषु 'तद्धितार्थ–' इति समाहारे द्विगुः ॥

आत्स्यात्[1]। द्वौ च दश च द्वादश[2]। अष्टाविंशतिः ॥

**त्रेस्त्रयः[3] ६ । ३ । ४८ ॥**

त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २ । ३ । २६ ॥**

एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । ( द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो[4] वाच्यः )। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः[5] पुरोडाशः ॥

**प्राप्तापन्ने च द्वितीयया २ । २ । ४ ॥**

समस्येते । अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै–अलंकुमारिः । अत[6] एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

**अर्धर्चाः पुंसि च २ । ४ । ३१ ॥**

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः ।

---

१–बहुव्रीहौ तु द्वित्राः, अशीतौ परस्यां द्व्यशीतिरित्यादौ न ॥ २–'द्व्यधिका दश' इत्युत्तरपदलोपो वा ॥ ३–सकारान्तोऽयमादेशः । अशीतौ परस्यां तु त्र्यशीतिरित्येव ॥ ४–प्रतिषेध इति, परवल्लिङ्गस्येति शेषः ॥ ५–अत्र 'तद्धितार्थ–' इति समासः, परवल्लिङ्गम्–' इति क्लीबत्वं प्राप्तं निषिध्य तद्धितप्रत्ययार्थपुरोडाशानुरोधेन पुंस्त्वम् ॥ ६–अलंपूर्वसमासविधेरनुपलम्भादाह–अत एवेति, अलंपूर्वस्य परवल्लिङ्गताप्रतिषेधवचनादित्यर्थः, वस्तुतस्तु 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासे 'एकविभक्ति–' इति उपसर्जनत्वे 'गोस्त्रियोः' इति ह्रस्वः । एवमेव 'निष्कौशाम्बिः' इत्यत्र 'निरादयः–' इति समासः, उक्तवार्तिकेन परवल्लिङ्गतानिषेधश्च ॥

'अर्धर्चम्'। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः।
[2]सामान्ये नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥

इति तत्पुरुषः॥ ३॥

## अथ बहुव्रीहिः

**शेषो बहुव्रीहिः २।२।२३॥**

अधिकारोऽयं प्राग्द्वन्द्वात्॥

**[3]अनेकमन्यपदार्थे २।२।२४॥**

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

**सप्तमीविशेषणे बहुव्रीहौ २।२।३५॥**

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्। अत[4] एव

---

१–'ऋचोऽर्धम्' इति विग्रहे 'अर्धं नपुंसकम्' इत्येकदेशिसमासे 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्ते 'अ' प्रत्यये विभक्तिकार्ये इदं सिद्धम्॥ २–यत्र विशेषरूपेण लिङ्गविशेषस्याभानं तत्सामान्यम्॥ ३–लिङ्गविशेषस्याविवक्षायां नपुंसकमेव प्रयोक्तव्यमत आह–अनेकमिति॥ ४–'कण्ठे' इत्यस्य सप्तम्यन्तत्वेनानेकप्रथमान्तत्वाभावात्समासाप्राप्तावाह–अत एव ज्ञापकादिति, अयं भावः–प्रथमान्तानामेव समासे सप्तम्यन्तालाभाद् व्यर्थमेव सप्तमीग्रहणं स्यादिति। इदमत्र तत्त्वम्, अनेकेषां प्रथमान्तानां द्वितीयादिसप्तम्यन्तार्थे बहुव्रीहिः, तत्र द्वितीयादिपञ्चम्यन्तार्थे यत्र बहुव्रीहिस्तत्र कर्तृकर्मप्रत्ययान्तसुबन्तेन सह समासः। उक्तोदाहरणेषु 'प्राप्तोदकः' इत्यत्र कर्तृवाचकं सुबन्तम्, तत्र प्राप्तपदे 'गत्यर्थाकर्म–' इति कर्तरि क्तप्रत्ययविधानात्। 'ऊढरथः' इत्यादिषु त्रिषु कर्मप्रत्ययान्ता ऊढादयः। षष्ठीसप्तम्यन्तार्थे बहुव्रीहौ न स नियमः। किन्तु मतुबर्थे समासः। तथा च वार्तिकम् 'मत्वर्थे बहुव्रीहिः कर्मकर्तृवचनेनाप्रथमायाः' इति। तत्र मत्वर्थः षष्ठ्यर्थसप्तम्यर्थरूपः। अत्र सर्वत्र कर्माद्यर्थे बहुव्रीहौ तेषां समासेनाभिधानादनभिहितकर्माद्यभावेन न द्वितीयादिः, किन्तु प्रथमैव॥

ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥

**हलदन्तात्सप्तम्याः संज्ञायाम् ६ । ३ । ९ ॥**

हलन्ताददन्ताच्च सप्तम्या अलुक्। [1]कण्ठेकालः। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। [2]ऊढरथोऽनड्वान्। [3]उपहृतपशू रुद्रः। [4]उद्धृतौदना स्थाली। [5]पीताम्बरो हरिः। [6]वीरपुरुषको ग्रामः। (प्रादिभ्यो[7] धातुजस्य वाच्यो वा चोत्तरपदलोपः)। प्रपतितपर्णः, प्रपर्णः। ([8]नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः)। अविद्यमानपुत्रः, अपुत्रः ॥

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६ । ३ । ३४ ॥**

---

१–'कण्ठे कालो यस्य सः' इति विग्रहः, नीलकण्ठो महादेव इत्यर्थः॥ २–'ऊढो रथो येन सः'॥ ३–'उपहृतः पशुः यस्मै सः'॥ ४–'उद्धृतम् ओदनं यस्याः सा'॥ ५–'पीतम् अम्बरं यस्य सः'॥ ६–'वीराः पुरुषा यस्मिन् सः' स्वार्थिकः कप्रत्ययः॥ ७–प्रादिभ्यः परं यद् धातुजं तदन्तस्य पदान्तरेण सह बहुव्रीहिः पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य लोपश्चेत्यर्थः। 'प्रकर्षेण पतितानि प्रपतितानि तादृशानि पर्णानि यस्य सः' इति विग्रहे वार्तिकेन समासे पतितशब्दस्य वैकल्पिकलोपे च 'प्रपर्णः' 'प्रपतितपर्णः' इति रूपद्वयं सिद्धम्॥ ८–नञः परं यदस्त्यर्थवाचि पदं तदन्तस्य पदान्तरेण बहुव्रीहिः अस्त्यर्थवाचिनां तु वा लोपः। न विद्यमानः अविद्यमानस्तादृशः पुत्रो यस्य सः अपुत्रः अविद्यमानपुत्रः। यद्यपि बहुव्रीहिसमासः 'अनेकमन्यपदार्थे' इति सूत्रेण सिद्धस्तथापि वैकल्पिकोत्तरपदलोपार्थं वार्तिकद्वयम्॥

उक्तपुंस्कादनूङ ऊङोऽभावोऽस्यामिति बहुव्रीहिः। [1]निपातनात्पञ्चम्या अलुक् षष्ठयाश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। [2]चित्रगुः। रूपवद्भार्यः। अनूङ किम्? वामोरूभार्यः॥ पूरण्यां तु—

**अप्पूरणीप्रमाण्योः ५ । ४ । ११६ ॥**

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः [3]कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्? कल्याणीप्रिय इत्यादि॥

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५ । ४ । ११३ ॥**

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः।

---

१–'भाषितपुंस्कादनूङ' इत्यत्र पञ्चमीश्रवणषष्ठयश्रवणयोः कारणमाह–निपातनादिति। 'भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः सोऽस्त्यस्य तद्भाषितपुंस्कम्' इति विग्रहफलमाह–तुल्ये प्रवृत्तिनिमित्त इति॥ २–'चित्रा गौर्यस्य' इति विग्रहे बहुव्रीहिसमासे चित्राशब्दे पुंवद्भावेन टापो निवृत्तिः, गोशब्दस्य 'गोस्त्रियोः—' इति ह्रस्वेनौकारस्योकारः। एवमेव 'रूपवद्भार्यः' इत्यत्र पुंवद्भावेन रूपवतीशब्दे दृष्टस्य ङीपो निवृत्तिः, भार्याशब्दवर्तिन आकारस्य ह्रस्वोऽकार इति बोध्यम्॥ ३–मूलोक्तविग्रहे षष्ठयर्थे बहुव्रीहौ विभक्तिलुकि 'अपूरणी' इति निषेधेन पुंवद्भावाभावे समुदायात् 'अप्पूरणी–' इत्यप्प्रत्यये 'यस्येति–' इति लोपे टापि जसि रूपमिदम्॥

जलजाक्षी । स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच् ।।

**द्वित्रिभ्यां ष मूर्ध्नः ५ । ४ । ११५ ॥**

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ।।

**अन्तर्बहिर्भ्यां च लोम्नः ५ । ४ । ११७ ॥**

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ।।

**पादस्य लोपोऽहस्त्यादिभ्यः ५ । ४ । १३८ ॥**

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य [1]व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? हस्तिपादः । कुसूलपादः ॥

**संख्यासुपूर्वस्य ५ । ४ । १४० ॥**

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । [2]द्विपात् । सुपात् ॥

**उद्विभ्यां काकुदस्य ५ । ४ । १४८ ॥**

लोपः स्यात् । [3]उत्काकुत् । विकाकुत् ।।

**पूर्णाद्विभाषा ५ । ४ । १४९ ॥**

---

१–'व्याघ्रः पादौ यस्य' इति विग्रहः । यद्यपि व्याघ्रो न हि कस्यचित्पादो भवति इति व्याघ्रशब्दस्य व्याघ्रपादे लक्षणायामपि तदीयः पादो नान्यस्येत्येवमसंभवस्तथापि व्याघ्रपादसदृशे लक्षणायाः पर्यवसानात् फलितार्थविग्रहः, 'व्याघ्रस्य पादाविव पादावस्य' इति ॥ २–'द्वौ पादौ यस्य सः' 'शोभनौ पादौ यस्य सः' इति विग्रहः ।। ३–'उद्गतं काकुदं ( तालु ) यस्य सः' इति लौकिको विग्रहः । अलौकिकस्तु 'उत् सु काकुद सु' इति । एवं 'विकाकुत्' 'पूर्णकाकुत्' इत्यादि ।।

पूर्णकाकुत् । पूर्णकाकुदः ॥

**सुहृद्दुर्हृदौ मित्रामित्रयोः ५ । ४ । १५० ॥**

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । [1]सुहृन्मित्रम् । दुर्हृदमित्रः ॥

**उरःप्रभृतिभ्यः कप् ५ । ४ । १५१ ॥**

**सोऽपदादौ ८ । ३ । ३८ ॥**

पाशकल्पककाम्येषु विसर्गस्य सः ॥

**कस्कादिषु च ८ । ३ । ४८ ॥**

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः । इति सः । [2]व्यूढोरस्कः ॥

**इणः षः ८ । ३ । ३९ ॥**

इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु । [3]प्रियसर्पिष्कः ॥

**निष्ठा २ । २ । ३६ ॥**

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । [4]युक्तयोगः ॥

**शेषाद्विभाषा ५ । ४ । १५४ ॥**

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । [5]महायशस्कः,महायशाः ॥

इति बहुव्रीहिः ॥ ४ ॥

---

१–'सुष्ठु शोभनं हृदयं यस्य सः' इति विग्रहः । एवं दुर्हृत् ॥
२—'व्यूढमुरो यस्य सः' ॥ ३–'प्रियं सर्पिः ( घृतम् ) यस्य सः' ॥
४–'युक्तो योगो येन सः' ॥ ५–'महद् यशो यस्य सः' ॥

# अथ द्वन्द्वः

## चार्थे द्वन्द्वः २ । २ । २९ ॥

अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र 'ईश्वरं गुरुं च भजस्व' इति [1]परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। 'भिक्षामट गां चानय' [2]इत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। [3]अनयोरसामर्थ्यात्समासो न 'धवखदिरौ छिन्धि' इति [4]मिलितानामन्वय इतरेतरयोगः। 'संज्ञापरिभाषम्' इति [5]समूहः समाहारः॥

---

१–एकस्य क्रियायामन्वयोत्तरमपरस्यावृत्त्या तत्रान्वयेन निरपेक्षत्वम्। 'धवखदिरौ छिन्धि' इत्यादौ त्वेकदैव धवखदिरयोश्छिदनक्रियायामन्वय इति न निरपेक्षत्वम्॥ २–उभयोर्मध्ये यत्र एकस्य अनुद्देश्यत्वरूपमानुषङ्गिकत्वम्, तेन रूपेणेतरत्र क्रियादावन्वयः। तदपेक्षयान्यस्य प्राधान्यं च तत्सम्बन्धिक्रियाया अवश्यकर्तव्यत्वरूपम्॥ ३–अनेकसुबन्तानां चार्थे वृत्त्यभावेनैकार्थीभावरूपसामर्थ्याभावादित्यर्थः॥ ४–मिलितानां परस्परापेक्षाणाम् उद्भूतावयवभेदसमूहरूपाणामेकधर्मावच्छिन्नेऽन्वय इतरेतरयोग इत्यर्थः॥ ५–समूह इति, तिरोहितावयवगतसंख्यः समूह इत्यर्थः॥ अत्रेदं तत्त्वम्— इतरेतरयोगद्वन्द्वे समस्यमानपदार्थगतसंख्यां समुदाये समारोप्य द्विवचनान्तबहुवचनान्तप्रयोगः। समाहारद्वन्द्वे तु समस्यमानपदार्थगतसंख्या तत्समुदाये नारोप्यते, किन्तु तत्समुदाय एकत्वबुद्ध्या एकवचनान्तप्रयोगः। ननु समाहारद्विगुद्वन्द्वयोः को भेद इति चेदुच्यते समाहारद्विगौ तदीयलौकिकालौकिकविग्रहयोः षष्ठ्यन्तपदप्रयोगः। यथा 'पञ्चानां गवां समाहारः' इत्यादि। समाहारद्वन्द्वे तु प्रथमान्तानामेव पदानां प्रयोगः, तदीयविग्रहवाक्यस्य 'संज्ञा च परिभाषा च' इत्यनयोः समाहार इत्येवमनुभवात्। 'संज्ञायाश्च परिभाषायाश्च' इत्येवं न द्वन्द्वस्य विग्रहः। प्रथमान्तानामेव द्वन्द्व इति सिद्धान्तात्॥

राजदन्तादिषु परम् २ । २ । ३१ ॥

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो राजदन्ताः[1] । ( धर्मादिष्वनियमः )। अर्थधर्मौ । धर्मार्थावित्यादि ॥

द्वन्द्वे घि २ । २ । ३२ ॥

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥

अजाद्यदन्तम् २ । २ । ३३ ॥

द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥

अल्पाच्तरम् २ । २ । ३४ ॥

शिवकेशवौ ॥

पिता मात्रा १ । २ । ७० ॥

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ, मातापितरौ वा ॥

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २ । ४ । २ ॥

एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम्[2] । रथिकाश्वारोहम् ॥

द्वन्द्वाच्चुदषहान्तात्समाहारे ५ । ४ । १०६ ॥

---

१-'राजदन्तास्तु चत्वारो दन्तानामुपरि स्थिताः' ॥ २-'मृदङ्गवादनं वेणुवादनं च शिल्पमस्य' इत्यर्थे 'तदस्य शिल्पम्' इति ठक् ॥

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्[1]। शमीदृषदम्[2]। वाक्त्विषम्[3]। छत्रोपानहम्[4]। समाहारे किम्? प्रावृट्शरदौ॥

इति द्वन्द्वः॥ ५॥

# अथ समासान्ताः

## ऋक्पूरब्धूः पथामानक्षे ५। ४। ७४॥

अ अनक्षे इतिच्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्[5]। विमलापं[6] सरः। राजधुरा[7]। अक्षे तु अक्षधूः[8]। दृढधूरक्षः[9]। सखिपथः[10]। रम्यपथो देशः॥

## अक्ष्णोऽदर्शनात् ५। ४। ७६॥

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः[11]॥

## उपसर्गादध्वनः ५। ४। ८५॥

---

१–त्वक् स्पर्शग्राहकमिन्द्रियम्, स्रग् मालयम्॥ २–अरणीसंज्ञकं यज्ञकाष्ठं शमी, दृषत् प्रस्तरम्॥ ३–वाग् वाणी, त्विट् प्रभा॥ ४–'छत्रं च उपानहौ चेत्येषां समाहारः' इति विग्रहः॥ ५–अत्र 'षष्ठीतत्पुरुषः' 'परवल्लिङ्गम्'–इति स्त्रीत्वं तु न लोके क्लीबप्रयोगात्॥ ६–'विमला आपो (जलानि) यत्र तत्'। सरस्तडागः॥ ७–राजभारः॥ ८–अक्षश्चक्रं तस्य धूरग्रभागः॥ ९–रथनाभिच्छिद्रम्॥ १०–'सख्युः पन्थाः' इति विग्रहः॥ ११ वातायनम्॥

प्रगतोऽध्वानं [1]प्राध्वो रथः ॥

**न पूजनात् ५ । ४ । ६९ ॥**

पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा[2] । अतिराजा ॥

इति समासान्ताः ॥

---

# अथ तद्धिताः, तत्रादौ साधारणप्रत्ययाः

**समर्थानां प्रथमाद्वा ४ । १ । ८२ ॥**

इदं [3]पदत्रयमधिक्रियते प्राग्दिश इति यावत् ॥

**अश्वपत्यादिभ्यश्च ४ । १ । ८४ ॥**

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु[4] । अश्वपतेरपत्यादि [5]आश्वपतम् । गाणपतम् ॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५ ॥**

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा—॥

---

१–'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः, 'प्रगतोऽध्वानम्' इति विग्रहः ॥ २–'शोभनो राजा' सुराजा, 'अतिशयितो राजा' अतिराजा । 'कुगतिप्रादयः' इति समासः ॥ ३–सूत्रमधिक्रियत इति तु नोक्तं स्वार्थिकप्रकरणे वामाग्रस्य सम्बन्धात् ॥ ४–'तेन दीव्यति' इति सूत्रपठितदीव्यतिरूपार्थात्प्राग् यावन्तोऽपत्यादयोऽर्थास्तेष्वर्थेष्वित्यर्थः ॥ ५–मूलोक्तलौकिकविग्रहे 'अश्वपति ङस्' इत्यस्मात् 'अश्वपत्यादिभ्यश्च' इति सूत्रेण अण्प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात्प्रातिपदिकत्वेन सुपि तस्य लुकि, आदिवृद्धौ 'यस्येति च' इतीकारलोपे यथाप्राप्तकार्ये सिद्ध्यति रूपम् ॥

**हलो यमां यमि लोपः ८ । ४ । ६४ ॥**

हलः परस्य यमो लोपः स्याद् वा यमि । इति यलोपः । आदित्यः । प्राजापत्यः । ( देवाद्यञञौ )। दैव्यम् । दैवम् । ( बहिषष्टिलोपो यञ्च )। बाह्यः । ( ईकक्च ) ॥

**किति च ७ । २ । ११८ ॥**

किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । [1]बाहीकः । ( [2]गोरजादिप्रसङ्गे यत् )। गोरपत्यादि [3]गव्यम् ॥

**उत्सादिभ्योऽञ् ४ । १ । ८६ ॥**

औत्सः[4] ॥

इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययाः ॥ १ ॥

---

## अथापत्याधिकारः

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४ । १ । ८७ ॥**

धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । [5]स्त्रैणः । [6]पौंस्नः ॥

**[7]तस्यापत्यम् । ४ । १ । ९२ ॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥

---

१–बहिर्भवः ॥ २–अजादिप्रत्ययप्रसङ्गे गोशब्दाद् यत्प्रत्ययः ॥ ३– गोः सन्ततिर्दधि वा ॥ ४–उत्सो निर्झरस्तत्र भव औत्सः ॥ ५–स्त्रिया अपत्यादिः, स्त्रैणशब्देन स्त्रीत्वं स्त्रीणां समुदायं स्त्रीजितं पुरुषं वा यथावसरं बुध्येत ॥ ६–पुंसोऽपत्यादिः ॥ ७–'तस्य' इति षष्ठ्यन्तानुकरणं लुप्तषष्ठीकं पदम् । 'अपत्यम्' इति सप्तम्यर्थे प्रथमा । एवं 'तत्र जातः, तेन प्रोक्तम्, तस्मै हितम्, तत आगतः, तदधीते, सोऽस्य निवासः' इत्यादीनि सप्तम्यन्ताद्यनुकरणानि लुप्तपञ्चमीकानि । अर्थनिर्देशे सर्वत्र सप्तम्यर्थे सौत्री प्रथमा ॥

**ओर्गुणः ६ । ४ । १४६ ॥**

उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥

**अपत्यं पौत्रप्रभृति गोत्रम् ४ । १ । १६२ ॥**

अपत्यत्वेन विवक्षितं पौत्रादि[1] गोत्रसंज्ञं स्यात् ॥

**एको गोत्रे ४ । १ । ९३ ॥**

गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ॥

**गर्गादिभ्यो यञ् ४ । १ । १०५ ॥**

गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥

**यञञोश्च ४ । ४ । ६४ ॥**

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः ॥

**जीवति[2] तु वंश्ये युवा ४ । १ । १६३ ॥**

---

१–मूलपुरुषस्येति शेषः ॥ २–इदमत्र तत्त्वम्, यद्यप्यपत्यशब्दः—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियान्त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥

इति कोशात् पुत्रपर्यायः; तथाप्यत्र 'अपत्यं पौत्रप्रभृति–' इति शास्त्रात् 'न पतन्ति पितरोऽनेन' इत्यर्थको यौगिको गृह्यते । तच्चापत्यं त्रिविधम्– 'अनन्तरापत्यम्' ( पुत्रः ) 'गोत्रापत्यम्, युवापत्यम्' च; तत्र मूलपुरुषतृतीयादेः सन्तानस्य गोत्रसंज्ञा 'अपत्यं पौत्रप्रभृति–' इत्यनेन । गोत्रापत्यप्रत्ययविवक्षायां मूलपुरुषसन्तानेषु एकत्र बहुत्र वा गोत्रत्वविवक्षायाम् एक एवापत्यप्रत्ययः 'एको गोत्रे' इति नियमात् । एवं च तृतीयापत्यविवक्षायां 'गर्गस्यापत्यापत्यम्' इति विग्रहे 'गर्गस्य गोत्रापत्यम्' 'गार्ग्यः' इत्येव रूपम् । यस्य सन्तानस्य पितृपितामहाद्यन्य-

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥

**गोत्राद्यून्यस्त्रियाम् ४ । १ । ९४ ॥**

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा ॥

**यञिञोश्च ४ । १ । १०१ ॥**

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७।१।२॥**

प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् एते स्युः। गर्गस्य युवापत्यं गार्ग्यायणः। दाक्षायणः॥

**अत इञ् ४ । १ । ९५ ॥**

अपत्येऽर्थे । दाक्षिः ॥

**बाह्वादिभ्यश्च ४ । १ । ९६ ॥**

बाहविः । औडुलोमिः[2] । (लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः) । उडुलोमाः । आकृतिगणोऽयम् ॥

**अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४ ॥**

---

तमोऽस्ति तस्य युवसंज्ञा, न गोत्रसंज्ञा । तत्र च गोत्रप्रत्ययान्तादेव प्रत्ययो न तु तदर्थे मूलप्रकृतेरनन्तरापत्यप्रत्यायान्ताद् युवापत्यप्रत्ययान्ताद्वा 'गोत्राद्यूनि–' इति नियमात् । गोत्राधिकारविहितप्रत्ययोऽनन्तरापत्ये न । एवं च अनन्तरापत्ये 'गार्गिः', गोत्रापत्ये 'गार्ग्यः', युवापत्ये 'गार्ग्यायणः' इति ॥

१—अदन्तं यत्प्रातिपदिकं तस्मादिञ् स्यादपत्येऽर्थे ॥ २—उडूनि नक्षत्राणि इव लोमानि यस्य स उडुलोमा तस्यापत्यं पुमानित्यर्थः ॥

एभ्योऽञ् गोत्रे । ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । बिदस्य गोत्रं बैदः । बैदौ । [1]बिदाः । पुत्रस्यापत्यं पौत्रः । पौत्रौ । [2]पौत्राः । एवं दौहित्रादयः ॥

**शिवादिभ्योऽण् ४ । १ । ११२ ॥**

[3]अपत्ये । शैवः । गाङ्गः ॥

**[4]ऋष्यन्धकवृष्णिकुरुभ्यश्च ४ । १ । ११४ ॥**

ऋषिभ्यः–वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः–[5]श्वाफल्कः । वृष्णिभ्यः–[6]वासुदेवः । कुरुभ्यः–[7]नाकुलः । साहदेवः ॥

**मातुरुत्संख्यासंभद्रपूर्वायाः ४ । १ । ११५ ॥**

संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च । [8]द्वैमातुरः । [9]षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥

**स्त्रीभ्यो ढक् ४ । १ । १२० ॥**

स्त्रीप्रत्ययान्तेभ्यो ढक् । वैनतेयः[10] ॥

**कन्यायाः कनीन च ४ । १ । ११६ ॥**

---

१–बिदस्य ऋषित्वेन गोत्रेऽञ्, अतः 'यञञोश्च' इति बहुत्वे लुक् ॥ २–पुत्रस्यानृषित्वेन गोत्रेऽञोऽप्राप्त्यानन्तरापत्य एवाञो जातत्वेन न लुक् । अत एव तत्र 'गोत्रे' इत्यनुवर्तितमिति बोध्यम् ॥ ३-यद्यपि 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः' इति 'यूनि लुक्' इति सूत्रभाष्यतो लभ्यते, तथापि वृत्तावितो गोत्राधिकारनिवृत्तेरुक्तत्वादपत्यसामान्ये प्रत्ययमाह–अपत्य इति ॥ ४–ऋषयो मन्त्रद्रष्टारः । अन्धकादयः सोमवंश्याः क्षत्रियाः ॥ ५–अक्रूरः ॥ ६–कृष्णः ॥ ७–नकुलस्य (माद्रीसुतस्य) अपत्यमिति विग्रहः । एवमेव साहदेव इत्यस्य ॥ ८–गणेश इत्यर्थः । अत्र द्वयोर्मात्रोरपत्यमिति विग्रहे 'तद्धितार्थ–' इति समासोत्तरं तद्धितप्रत्यय एवमुत्तरत्र ॥ ९–कार्तिकेयः ॥ १०–विनतासुतो गरुडः ॥

चादण् । कानीनो व्यासः कर्णश्च ॥

**राजश्वशुराद्यत् ४ । १ । १३७ ॥**

( राज्ञो [1]जातावेवेति वाच्यम् ) ॥

**ये चाभावकर्मणोः ६ । ४ । १६८ ॥**

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । [2]राजन्यः । जातावेवेति किम् ?--

**अन् ६ । ४ । १६७ ॥**

अन् प्रकृत्या स्यादणि परे । राजनः । [3]श्वशुर्यः ॥

**क्षत्त्राद् घः ४ । १ । १३८ ॥**

क्षत्त्रियः । जातावित्येव । क्षात्त्रिरन्यत्र ॥

**रेवत्यादिभ्यष्ठक् ४ । १ । १४६ ॥**

**ठस्येकः ७ । ३ । ५० ॥**

अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ॥

**जनपदशब्दात्क्षत्त्रियादञ् । ४ । १ । १६८ ॥**

[4]जनपदक्षत्त्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः ।

---

१-क्षत्त्रियात् स्वविवाहितायां क्षत्त्रियायामुत्पन्नसन्ताने एव यत्प्रत्ययो भवतीति भावः । वैश्यशूद्रजात्युत्पन्नकन्यायां क्षत्त्रियादुत्पन्नमपत्यं राजनः ॥ २-क्षत्त्रियजातिः ॥ ३-श्यालः ॥ ४-जनपदो जनपदनामधेयः शब्दो वाचको यस्य स जनपदशब्द इति बहुव्रीहिः । एवं च जनपदवाची सन् यः क्षत्त्रियवाची शब्दस्तत्प्रकृतिकात् षष्ठ्यन्तादपत्येऽर्थेऽञ्प्रत्ययः ॥

( [1]क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् )। पञ्चालानां राजा पाञ्चालः। ( पूरोरण् [2]वक्तव्यः )। पौरवः। ( पाण्डोर्ड्यण्। ) पाण्ड्यः॥

[3]कुरुनादिभ्यो ण्यः ३। १। १७२॥

कौरव्यः। नैषध्यः॥

ते तद्राजाः ४। १। १७४॥

[4]अञादयस्तद्राजसंज्ञाः स्युः॥

तद्राजस्य बहुषु तेनैवास्त्रियाम् २। ४। ६५॥

बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः, इत्यादि॥

कम्बोजाल्लुक् ४। १। १७५॥

अस्मात्तद्राजस्य लुक। कम्बोजः। कम्बोजौ। ( कम्बोजादिभ्य इति वक्तव्यम् )। चोलः। शकः। केरलः। यवनः॥

इत्यपत्याधिकारः॥ २॥

---

१–पञ्चालाङ्गवङ्गमगधकलिङ्गादयः शब्दा देशवाचिनो राजवाचिनश्च। तत्राद्ये बहुवचनान्ताः। अन्त्ये एकवचनान्ताः। यत्र च राजवाची तत्र 'पञ्चालस्य राज्ञो अपत्यम्' इति विग्रहेऽपत्यप्रत्ययः। यत्र च देशवाची तत्र 'पञ्चालानां राजा' इति विग्रहे षष्ठीबहुवचनान्ताद्राजरूपार्थे प्रत्ययः॥ २–अपत्ये राजनि चार्थे। एवमुत्तरत्रापि॥ ३–कुरुशब्दान्नकारादिशब्दाच्च ण्यप्रत्ययः स्यादित्यर्थः॥ ४–अपत्ये राजनि च विहिताः प्रत्ययास्तच्छब्देन परामृश्यन्ते तदाह–'अञादयः' इति॥

# अथ रक्ताद्यर्थकाः

**तेन रक्तं रागात् ४ । २ । १ ॥**

[1]अण् स्यात् । रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् ॥

**नक्षत्रेण युक्तः कालः ४ । २ । ३ ॥**

[2]अण् स्यात् । ( तिष्यपुष्ययोर्नक्षत्राणि[3] यलोप इति वाच्यम् ) । पुष्येण युक्तं पौषमहः ॥

**लुबविशेषे ४ । २ । ४ ॥**

[4]पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ॥

**दृष्टं साम ४ । २ । ७ ॥**

तेनेत्येव[5] । वसिष्ठेन दृष्टं वासिष्ठं साम ॥

**[6]वामदेवाड्ड्यड्ड्यौ ४ । २ । ९ ॥**

---

१–रञ्जकद्रव्यवाचकात् तृतीयान्तात् 'रक्तम्' इत्यस्मिन् अर्थे 'अण्' इति स्पष्टः सूत्रार्थः ॥ २–'प्राग्दीव्यतोऽण्' इत्यधिक्रियते । नक्षत्रवाचकात् तृतीयान्तात् 'युक्तः' इत्यर्थेऽण् स्याद् युक्तः कालश्चेत् ॥ ३–नक्षत्राणि नक्षत्रविहितानि इत्यर्थः ॥ ४–'नक्षत्रेण युक्तः कालः,' 'अण्' इत्यनुवर्त्य षष्ठ्या विपरिणम्य व्याचष्टे–'पूर्वेण' इति ॥ ५–'तेन रक्तम्' इत्यतोऽनुवर्त्याह–'तेनेत्येव' इति । तृतीयान्तात् 'दृष्टम्' इत्यर्थेऽण् दृष्टं प्रत्यक्षविषयीभूतं साम चेत्, इति सूत्रार्थः ॥ ६–तृतीयान्ताद्वामदेवशब्दात् 'दृष्टम्' इत्यर्थे ड्यत्, ड्यश्च प्रत्ययौ भवतः, दृष्टं साम चेत्; इति सूत्रार्थः ॥

वामदेवेन दृष्टं साम वामदेव्यम् ॥

**परिवृतो रथः ४ । २ । १० ॥**

अस्मिन्नर्थेऽण्[1] प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः ॥

**तत्रोद्धृतममत्रेभ्यः[2] ४ । २ । १४ ॥**

शरावे उद्धृतः शाराव ओदनः ॥

**संस्कृतं भक्षाः ४ । २ । १६ ॥**

सप्तम्यन्तादण्[3] स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः ॥

**[4]साऽस्य देवता ४ । २ । २४ ॥**

इन्द्रो देवताऽस्येति ऐन्द्रं हविः । पाशुपतम्[5] । बार्हस्पत्यम् ॥

**शुक्राद्घन्[6] ४ । २ । २६ ॥**

शुक्रियम् ॥

**सोमाट्ट्यण्[7] ४ । २ । ३० ॥**

---

१-तृतीयान्तात् 'परिवृतः' इत्यर्थेऽण् परिवृतो रथश्चेदिति सूत्रार्थः ॥ २-अमत्रवाचकात् सप्तम्यन्तात् 'उद्धृतम्' इत्यर्थेऽण् स्यादिति सूत्रार्थः । शरावो मृन्मयपात्रम् ॥ ३-'प्राग्दीव्यतोऽण्' इत्यधिक्रियते, 'तत्रोद्धृतम्—' इत्यतः 'तत्र' इति वर्तते ॥ ४-'प्राग्दीव्यतोऽण्' इत्यधिक्रियते । प्रथमान्ताद् देवतोपाधिकात् समर्थात् 'अस्य' इत्यर्थेऽणादयः ॥ ५-पाशुपतमिति, 'अश्वपत्यादिभ्यश्च' इत्यण् । बार्हस्पत्यमिति, पत्युत्तरपदलक्षणो ण्यः ॥ ६-'साऽस्य देवता' इत्यधिक्रियते । प्रथमान्तात् शुक्रशब्दात् 'देवतास्य' इत्यर्थे घन् प्रत्ययः स्यात् ॥ ७-'प्रथमान्तात्' सोमशब्दात् 'देवतास्य' इत्यर्थे टयण् प्रत्ययः स्यात् ॥

सौम्यम् ॥

**[1]वाय्वृतुपित्रुषसो यत् ४ । २ । ३१ ॥**

वायव्यम् । ऋतव्यम् ॥

**रीङ् ऋतः ७ । ४ । २७ ॥**

अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् । उषस्यम्[2] ॥

**पितृव्यमातुलमातामहपितामहाः ४ । २ । ३६ ॥**

एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः । पितुः पिता पितामहः ॥

**तस्य समूहः[3] ४ । २ । ३७ ॥**

काकानां समूहः काकम् ॥

**भिक्षादिभ्योऽण् ४ । २ । ३८ ॥**

भिक्षाणां समूहो भैक्षम्[5] । गर्भिणीनां समूहो गार्भिणम् । इह ( भस्याढे[6] तद्धिते ) इति पुंवद्भावे कृते--

---

१-प्रथमान्तेभ्यो वाय्वृतुपित्रुषस्शब्देभ्यः 'देवतास्य' इत्यर्थे यत् प्रत्ययः ॥ २-'उषःकालाभिमानिनी देवता अस्य' इति विग्रहः ॥ ३-षष्ठयन्तात् 'समूहः' इत्यर्थेऽण् स्यादिति सूत्रार्थः ॥ ४-षष्ठयन्त-भिक्षादिभ्यः 'समूहः' इत्यर्थेऽण् इति सूत्रार्थः ५-'अचित्तहस्ति' इति प्राप्तस्य ठको बाधनायायमण्विधीयते ।। ६-ढभिन्ने तद्धिते परतो भस्य पुंवत्, इति वार्तिकार्थः । पुंस्यपि गर्भसम्बन्धस्य वेदे निरूपितत्वेन भवत्येव गर्भिणीशब्दस्य भाषितपुंस्कत्वम् ॥

**इनण्यनपत्ये ६ । ४ । १६४ ॥**

अनपत्यार्थेऽणि परे इन् [1]प्रकृत्या स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो [2]यौवनम् ॥

**[3]ग्रामजनबन्धुभ्यस्तल् ४ । २ । ४३ ॥**

तलन्तं स्त्रियाम् । ग्रामता । जनता । बन्धुता । ( [4]गज-सहायाभ्यां चेति वक्तव्यम् ) । गजता । सहायता । [अह्नः[5] खः क्रतौ ] । अहीनः ॥

**[6]अचित्तहस्तिधेनोष्ठक् ४ । २ । ४७ ॥**

**इसुसुक्तान्तात्कः ७ । ३ । ५१ ॥**

इस् उस् उक् तान्तात्परस्य [7]ठस्य कः । साक्तुकम् । हास्तिकम् । धैनुकम् ॥

**[8]तदधीते तद्वेद ४ । २ । ५९ ॥**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७।३।३॥**

१–'प्रकृत्यकाच्' इत्यतोऽनुवर्त्याह–'प्रकृत्या' इति ॥ २–पुंवद्भावेन तिप्रत्ययनिवृत्तौ 'नस्तद्धिते' इति टिलोपः 'अन्' इति सूत्रविहितेन प्रकृतिभावेन वार्यते । शत्रन्तयुवतीशब्दस्य तु 'यौवतम्' इति भवति ॥ ३–'तस्य समूहः' इत्यधिकारसत्त्वेन षष्ठ्यन्तग्रामजनबन्धुभ्यः 'समूहः' इत्यर्थे 'तल्' इति सूत्रार्थः ॥४–तल् 'समूहः' इत्यर्थे, इति वार्तिकार्थः ॥ ५–षष्ठ्यन्ताद् अहन्शब्दात् 'समूहः' इत्यर्थे, खः, समूहः क्रतुसाधकश्चेदित्यर्थः । अहीनोऽहर्गणसाध्यसुत्याकः क्रतुः, अत्र 'नस्तद्धिते' इति टिलोपः ॥ ६–'समूहः' इत्यर्थे ॥ ७–'ठस्येकः' इत्यतः 'ठस्य' इत्यनुवर्ततेऽत आह–'ठस्य' इति ॥ ८–द्वितीयान्तात् 'अधीते' इत्यर्थे 'वेद' इत्यर्थे च उक्ता अणादयो वक्ष्यमाणाश्च प्रत्यया वा स्युः इति सूत्रार्थः ॥

पदान्ताभ्यां यकारवकाराभ्यां परस्य न [1]वृद्धिः किं तु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः। व्याकरणमधीते वेद वा वैयाकरणः॥

[2]क्रमादिभ्यो वुन् ४।२।६१॥

क्रमकः। पदकः। शिक्षकः। मीमांसकः॥

इति रक्ताद्यर्थकाः॥ ३॥

---

## अथ चातुरर्थिकाः

[3]तदस्मिन्नस्तीति देशे तन्नाम्नि ४।२।६७॥

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः॥

[4]तेन निर्वृत्तम् ४।२।६८॥

कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी॥

[5]तस्य निवासः ४।२।६९॥

शिबीनां निवासो देशः शैबः॥

[6]अदूरभवश्च ४।२।७०॥

विदिशाया अदूरभवं नगरं वैदिशम्॥

जनपदे लुप् ४।२।८१॥

---

१–'मृजेर्वृद्धिः' इत्यतोऽनुवर्त्याह—'न वृद्धिः' इति॥ २–द्वितीयान्त-क्रमादिभ्यः 'अधीते, वेद' इत्यर्थे वुन् इति सूत्रार्थः॥ ३,४,५,६–प्रथमा-न्तात् 'अस्मिन्नस्ति' इत्यर्थे तृतीयान्तात् 'निर्वृत्तम्' इत्यर्थे, षष्ठ्यन्तात् 'निवासः' इत्यर्थे 'अदूरभवः' इत्यर्थे च उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः, तन्नाम्ना देशप्रसिद्धिश्चेदिति क्रमेण सूत्रचतुष्टयार्थः॥

जनपदे वाच्ये [1]चातुरर्थिकस्य लुप् ॥

**लुपि[2] युक्तवद्व्यक्तिवचने १ । २ । ५१ ॥**

लुपि सति [3]प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो [4]जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ॥

**वरणादिभ्यश्च ४ । २ । ८२ ॥**

[5]अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः॥

**[6]कुमुदनडवेतसेभ्यो ड्मतुप् ४ । २ । ८७ ॥**

**झयः ८ । २ । १० ॥**

झयन्तान्मतोर्मस्य वः । [7]कुमुद्वान् । नड्वान् ॥

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८ । २ । ९ ॥**

[8]मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥

---

१–'तदस्मिन्नस्ति' 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति सूत्रचतुष्टयमनुवर्त्याह—'चातुरर्थिकस्य' इति ॥ २–यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन प्रत्ययलुपि सति प्रकृतेरेव निवासरूपार्थाभिधानात् तदनुरोधेन पुंस्त्वैकवचनप्राप्तावतिदेशमाह ॥ ३–युक्तशब्दः प्रकृतिवाची, व्यक्तिशब्दो लिङ्गवाचीत्याह–प्रकृतीति ॥ ४–देशस्तु जनपदैर्व्याप्तो जनपदव्याप्यो नगरादिः । जनपदस्तु बहुनगरग्रामव्याप्तमण्डलाधिकरणस्थानम् इति विशेषः ॥ ५–'जनपदे लुप्' इत्यतो 'लुप्' इति वर्तते । जनपदे पूर्वेण सिद्धत्वादाह–'अजनपदार्थः' इति ॥ ६–'तदस्मिन्नस्ति' 'तेन निर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति चतुरर्थी अनुवर्तते ॥ ७–'कुमुदाः सन्ति अस्मिन् देशे' इति विग्रहः ॥ ८–म् च अं च अनयोः समाहारः मं तस्मात् मात्, तस्य अधिकृत'पदात्'इत्येतद्विशेषणत्वेन तदन्तविधिरित्याह—'मवर्णावर्णान्तात्' इति । उपधात्वं चोपस्थितत्वान्मवर्णावर्णयोरेवेत्याह—'मवर्णावर्णोपधात् इति ॥

**नडशादाड्ड्वलच् ४ । २ । ८८ ॥**

[1]नड्वलः । [2]शाद्वलः ॥

**शिखाया वलच् ४ । २ । ८९ ॥**

[3]शिखावलम् ॥

इति चातुरर्थिकाः ॥ ४ ॥

## अथ शैषिकाः

**शेषे ४ । २ । ९२ ॥**

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः[4] स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यं चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं [5]रक्षः । 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः ॥

**राष्ट्रावारपाराद्घखौ ४ । २ । ९३ ॥**

आभ्यां क्रमाद् घखौ स्तः शेषे । राष्ट्रे जातादिः राष्ट्रियः । अवारपारीणः । (अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ) । अवारीणः । पारीणः । पारावारीणः ।

---

१–नडशब्दो धमनपर्यायः, यो हिन्दीभाषायाम् 'नरकट, नरकुल' इत्यादिनामभिर्व्यपदिश्यते । 'नडाः सन्ति अस्मिन्' इति नड्वलो नडप्रायो देशः ॥ २–'शादाः सन्ति अस्मिन्' इति शाद्वलो घासबहुलप्रदेशः ॥ ३–शिखया निर्वृत्तं शिखावलं नगरम् । निर्वृत्ताद्यर्थे देशे तन्नाम्न्यणो बाधनार्थं चेदम् । अदेशे तु दन्तशिखात्संज्ञायामिति पाश्चमिको मत्वर्थीयो वलच्, इति बोध्यम् ॥ ४–अणादय इति, प्राग्दीव्यतीयाः साधारणा उक्ता इत्यर्थः । वक्ष्यमाणाश्च 'शेषे' इत्यधिकारान्वयादिति बोध्यम् ॥ ५–राक्षस इत्यर्थः ॥

इह[1] प्रकृतिविशेषाद् घादयष्टयुटयुलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥

**ग्रामाद्यखञौ ४ । २ । ९४ ॥**

ग्राम्यः । ग्रामीणः ॥

**नद्यादिभ्यो[2] ढक् ४ । २ । ९७ ॥**

नादेयम् । माहेयम् । वाराणसेयम् ॥

**दक्षिणापश्चात्पुरसस्त्यक् ४ । २ । ९८ ॥**

दाक्षिणात्यः[3] । पाश्चात्त्यः । पौरस्त्यः ॥

**द्युप्रागपागुदक्प्रतीचो[4] यत् ४ । २ । १०१ ॥**

दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥

**अव्ययात्त्यप् ४ । २ । १०४ ॥**

(अमेहक्वतसित्रेभ्य एव) । अमात्यः[5] । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( त्यब्नेर्ध्रुव इति वक्तव्यम् ) । नित्यः[6] ॥

---

१–ननु 'राष्ट्रावार–' इत्यादिसूत्रेऽर्थानिर्देशात् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति नियमात्ते घादयः स्वार्थ एव भवेयुरित्याशङ्कायामाह––'इह' इति ॥ २–नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी । ( वडवाया वृषे ) इति नद्यादिः ॥ ३–'दक्षिणादाच्' इति आजन्तो दक्षिणाशब्दोऽव्ययसंज्ञः परसाहचर्यात् न तु टाबन्तः । 'दक्षिणस्यामदूरे दक्षिणा तत्र जातादिः' इति विग्रहः । पश्चाद्भवः पाश्चात्त्यः । पुरो भवः पौरस्त्यः । 'पूर्वपौरस्त्यप्रथमाद्याः' इत्यमरः ॥ ४–द्यौः स्वर्गे, प्राक् पूर्वदिशि, अपाक्प्रत्यक्शब्दौ पश्चिमदिशि उदगित्युत्तरे । तत्र तत्र जातादिरिति विग्रहः स्वयमूहनीयः ॥ ५–मन्त्री ॥ ६–नितरां भवः ॥

**वृद्धिर्यस्याचामादिस्तद्वृद्धम् १ । १ । ७३ ॥**

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥

**त्यदादीनि च १ । १ । ७४ ॥**

वृद्धसंज्ञानि स्युः ॥

**वृद्धाच्छः ४ । २ । ११४ ॥**

शालीयः । मालीयः । तदीयः । (वा नामधेयस्य वृद्धसंज्ञा वक्तव्या)। देवदत्तीयः । दैवदत्तः ॥

**गहादिभ्यश्च ४ । २ । १३८ ॥**

गहीयः[1] ॥

**युष्मदस्मदोरन्यतरस्यां खञ् च ४ । ३ । १ ॥**

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः, अस्मदीयः ॥

**तस्मिन्नणि च युष्माकास्माकौ ४ । ३ । २ ॥**

युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः ॥ आस्माकीनः । यौष्माकः । आस्माकः ॥

**तवकममकावेकवचने ४ । ३ । ३ ॥**

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः । तावकः । मामकीनः । मामकः । छे तु—

**प्रत्ययोत्तरपदयोश्च ७ । २ । ९८ ॥**

मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ॥

---

१–गहो देशविशेषस्तत्र जातादिः ॥

**मध्यान्मः ४ । ३ । ८ ॥**

मध्यमः ॥

**कालाट्ठञ् ४ । ३ । ११ ॥**

कालवाचिभ्यष्ठञ् स्यात् । कालिकम् । मासिकम् । सांवत्सरिकम् । ( अव्ययानां भमात्रे टिलोपः ) [1]सायम्प्रातिकः । पौनःपुनिकः ॥

**प्रावृष एण्यः ४ । ३ । १७ ॥**

प्रावृषेण्यः[2] ॥

**सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४ । ३ । २३ ॥**

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । [3]सायन्तनम् । चिरन्तनम् । 'प्राह्णेप्रगे' अनयोरेदन्तत्वं निपात्यते । प्राह्णेतनम्[4] । प्रगेतनम्[5] । दोषातनम्[6] ॥

**तत्र जातः ४ । ३ । २५ ।**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने[7] जातः स्रौघ्नः । उत्से जात औत्सः[8] । राष्ट्रे जातो राष्ट्रियः[9] । अवारपारे जातः-अवारपारीणः, इत्यादि ॥

---

१-सायंप्रातर्भवः । पुनः पुनर्भवः ॥ २-वर्षाकाले भवः (जातार्थे तु ठकि प्रावृषिक इति रूपम् ) ॥ ३-साये भवं चिरे भवमिति विग्रहः । विभक्तिलुकि सति प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते । स्वरादिपाठमनुसृत्य 'सायं भवम्, चिरं भवम्' इति च विग्रहः स्यात् ॥ ४-पूर्वाह्णकालोत्पन्नमित्यर्थः ॥ ५-प्रातःकालोत्पन्नमित्यर्थः ॥ ६-रात्रिभवमित्यर्थः ॥ ७-स्रुघ्नो देशविशेषः, पाटलिपुत्रम् ( पटना ) इति विख्यातं नगरं स्रुघ्न इति पद्मचन्द्रकोषः ॥ ८-'उत्सादिभ्यः-' इति अञ् ॥ ९-राष्ट्रावार-' इति घः ॥

**प्रावृष ठप् ४ । ३ । २६ ॥**

एण्यापवादः । प्रावृषिकः ॥

**प्रायभवः ४ । ३ । ३९ ॥**

तत्रेत्येव[1] । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ॥

**सम्भूते[2] २ । ३ । ४१ ॥**

स्रुघ्ने संभवति स्रौघ्नः ॥

**कोशाड्ढञ् ४ । ३ । ४२ ॥**

कौशेयं[3] वस्त्रम् ॥

**[4]तत्र भवः ४ । ३ । ५३ ॥**

स्रुघ्ने भवः स्रौघ्नः । औत्सः । राष्ट्रियः ॥

**दिगादिभ्यो यत् ४ । ३ । ४५ ॥**

दिश्यम् । वर्ग्यम् ॥

**शरीरावयवाच्च[5] ४ । ३ । ५५ ॥**

दन्त्यम् । कण्ठ्यम् । ( अध्यात्मादेष्ठञिष्यते ) । अध्यात्मं भवमाध्यात्मिकम् ॥

---

१–सप्तम्यन्तसमर्थात् 'प्रायभवः' इत्यर्थेऽणादयो घादयश्च स्युः, इत्यर्थंफलितमाह – 'तत्रेत्येव' इति ॥ २–अत्र 'नपुंसके भावे क्तः' संभूतं सम्भावना समावेशो वा ॥ ३–कोशे भवमिति विग्रहः 'कौशेयं कृमिकोशोत्थम्' इत्यमरः ॥ ४–सप्तम्यन्तसमर्थात् 'भवः' इत्यर्थेऽणादयो घादयश्च स्युरित्यर्थः । भवजातयोरेकार्थत्वादन्यतरो व्यर्थं इति तु न शङ्कनीयम्, जात इत्यस्य उत्पन्न इति, भव इत्यस्य च विद्यमान इत्यर्थसत्त्वेन तयोर्भेदात् ॥ ५–चकारात् 'दिगादिभ्यो यत्' इत्यतो 'यत्' इत्याकृष्यते ॥

**अनुशतिकादीनां च ७ । ३ । २० ॥**

[1]एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम्॥

**जिह्वामूलाङ्गुलेश्छः ४ । ३ । ६२ ॥**

जिह्वामूलीयम् । अङ्गुलीयम् ॥

[2]**वर्गान्ताच्च ४ । ३ । ६३ ॥**

कवर्गीयम् ॥

[3]**तत आगतः ४ । ३ । ७४ ॥**

स्रुघ्नादागतः स्रौघ्नः ॥

[4]**ठगायस्थानेभ्यः ४ । ३ । ७५ ॥**

[5]शुल्कशालाया आगतः शौल्कशालिकः ॥

[6]**विद्यायोनिसंबन्धेभ्यो वुञ् ४ । ३ । ७७ ॥**

औपाध्यायकः । पैतामहकः ॥

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४ । ३ । ८१ ॥**

---

१–'मृजेर्वृद्धिः' 'तद्धितेष्वचामादेः' 'उत्तरपदस्य' 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्यनुवृत्तिफलितमाह–'एषामुभयपदवृद्धिः' इति ॥ २–'जिह्वामूलाङ्गुलेश्छः' इत्यतः 'छः' इति वर्तते ॥ ३–पञ्चम्यन्तसमर्थात् 'आगतः' इत्यर्थेऽणादयो घादयश्च स्युरित्यर्थः ॥ ४–आयः स्वामिग्राह्यो भागः स यस्मिन् उत्पद्यते तदायस्थानम्, तद्वाचकात् पञ्चम्यन्तात् 'आगतः' इत्यर्थे ठक् प्रत्ययः ॥ ५–शुल्कगृहादित्यर्थः ॥ ६–विद्याकृतो योनिकृतः संबन्धो येषां तद्वाचकात् 'आगतः' इत्यर्थे वुञ् स्यात् ॥

समादागतं समरूप्यम्। पक्षे—गहादित्वाच्छः। समीयम्। विषमीयम्। देवदत्तरूप्यम्। दैवदत्तम्॥

**मयट् च ४।३।८२॥**

सममयम्। देवदत्तमयम्॥

**[1]प्रभवति ४।३।८३॥**

हिमवतः [2]प्रभवति हैमवती गङ्गा॥

**[3]तद्गच्छति पथिदूतयोः ४।३।८५॥**

स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा॥

**[4]अभिनिष्क्रामति द्वारम् ४।३।८६॥**

स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्॥

**[5]अधिकृत्य कृते ग्रन्थे ४।३।८७॥**

शारीरकमधिकृत्य कृतो ग्रन्थः [6]शारीरकीयः॥

**सोऽस्य[7] निवासः ४।३।८९॥**

---

१–प्रभवः प्रथमप्रकाशस्तत्कर्तरि 'प्रभवति' इत्यर्थे पञ्चम्यन्तसमर्थादणादयो घादयश्च स्युरित्यर्थः॥ २–प्रथमं प्रकाशते॥ ३–द्वितीयान्तात् 'गच्छति' इत्यर्थे प्रत्ययः स चेद् गन्ता पन्था दूतो वा। अत्र असिश्छिनत्ति इतिवत् करणस्य पथः कर्तृत्वविवक्षा। एवमुत्तरसूत्रे द्वारशब्दस्यापि॥ ४–द्वितीयान्तसमर्थात् 'अभिनिष्क्रामति' इत्यर्थेऽणादयो घादयश्च स्युः। अभिनिष्क्रमणकर्तृ द्वारं चेदित्यर्थः॥ ५–द्वितीयान्तात् समर्थात् 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थे प्रत्ययः॥ ६–'वृद्धाच्छः' इति छः॥ ७–प्रथमान्तसमर्थात् 'अस्य निवासः' इत्यर्थे प्रत्ययः। निवासो वासदेशः; अधिकरणे घञ्॥

स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥

[1]तेन प्रोक्तम् ४ । ३ । १०१ ॥

पाणिनिना प्रोक्तं पाणिनीयम् ॥

[2]तस्येदम् ४ । ३ । १२० ॥

उपगोरिदम् औपगवम् ॥

इति शैषिकाः ॥ ५ ॥

## अथ विकारार्थकाः

[3]तस्य विकारः ४ । ३ । १३४ ॥

[ अश्मनो विकारे [4]टिलोपो वक्तव्यः ] । [5]अश्मनो विकारः आश्मः । भास्मनः । [6]मार्त्तिकः ॥

[7]अवयवे च प्राण्योषधिवृक्षेभ्यः ४ । ३ । १३५ ॥

चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । [8]मौर्वं काण्डं भस्म वा । पैप्पलम् ॥

---

१–तृतीयान्तसमर्थात् 'प्रोक्तम्' इत्यर्थे प्रत्ययः ॥ २–षष्ठ्यन्तात् समर्थात् 'इदम्' इत्यर्थेऽणादयः स्युः ॥ ३–षष्ठ्यन्तात्समर्थात् 'विकारः' इत्यर्थे प्राग्दीव्यतीया अणादयः स्युः । विकारः कार्यम् ॥ ४–'अन्' इति प्रकृतिभावेन टिलोपनिवृत्तौ टिलोपः प्रतिप्रसूयते ॥ ५–पाषाणस्य ॥ ६–मृत्तिकाया विकारः ॥ ७–षष्ठ्यन्तेभ्यः प्राण्योषधिवृक्षेभ्योऽवयवे विकारे चाणादयः स्युः ॥ ८–मौर्वमित्यत्र मूर्वाशब्द ओषधिविशेषस्य बोधकः, तस्य अवयवो विकारो वेत्यर्थः ॥

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ४ । ३ । १४३ ॥**

[1]प्रकृतिमात्रान्मयड् वा स्यात् विकारावयवयोः । अश्ममयम्, आश्मनम् । अभक्ष्येत्यादि किम् ? मौद्गः सूपः । कार्पासमाच्छादनम् ॥

[2]**नित्यं वृद्धशरादिभ्यः ४ । ३ । १४४ ॥**

आम्रमयम् । शरमयम् ॥

[3]**गोश्च पुरीषे ४ । ३ । १४५ ॥**

गोः पुरीषं गोमयम् ॥

[4]**गोपयसोर्यत् ४ । ३ । १६० ॥**

गव्यम् । पयस्यम् ॥

इति विकारार्थाः ( प्राग्दीव्यतीयाः ) ॥ ६ ॥

---

१–'एतत्'शब्देन 'तस्य विकारः' 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति सूत्रोपात्तौ विकारावयवौ गृह्येते । षष्ठ्यन्तसमर्थात् 'विकारावयवयोरर्थयोर्मयड् वा स्यात्' इति सूत्रार्थंफलितमाह–प्रकृतिमात्रेति ॥ २–वृद्धसंज्ञकाच्छरादिगणपठिताच्च नित्यं मयट् स्याद् विकारावयवयोरित्यर्थः । 'शर, दर्भ, मृद्, कुटी, तृण, सोम, विल्वज'–इति शरादयः ॥ ३–'मयट्' इति वर्तते । पुरीषं न विकारो नाप्यवयव इति । संबन्धित्वं त्वव्याहतमिति भावः ॥ ४–'एतयोः' इत्यनुवृत्या विकारावयवयोरयं विधीयते मयटं बाधितुमिति भावः ॥

## अथ ठगधिकारः

**प्राग्वहतेष्ठक् ४ । ४ । १ ॥**

तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥

**तेन[1] दीव्यति खनति जयति जितम् ४ । ४ । २ ॥**

अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः ॥

**संस्कृतम्[2] ४ । ४ । ३ ॥**

दध्ना संस्कृतं दाधिकम् । मारीचिकम् ॥

**तरति[3] ४ । ४ । ५ ॥**

तेनेत्येव । उडुपेन तरति औडुपिकः ॥

**चरति ४ । ४ । ८ ॥**

तृतीयान्ताद् गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति[4] हास्तिकः । दध्ना चरति[5] दाधिकः ॥

**संसृष्टे[6] ४ । ४ । २२ ॥**

दध्ना संसृष्टं दाधिकम् ॥

---

१–तृतीयान्तसमर्थात् 'दीव्यति खनति जयति जितम्' इत्येतेष्वर्थेषु ठक्, इति सूत्रार्थः ॥ २-तृतीयान्तसमर्थात् 'संस्कृतम्' इत्यर्थे ठक् । संस्कृतं संस्कारः, स च सत उत्कर्षाधानरूपः । ३–तृतीयान्तसमर्थात् 'तरति' इत्यर्थे ठक्, इत्यर्थमाह—तेनेत्येवेति ॥ ४–गच्छतीत्यर्थः ॥ ५–भक्षयतीत्यर्थः ॥ ६–तृतीयान्तसमर्थात् 'संसृष्टम्' इत्यर्थे ठक् ससृष्टे संसर्गाश्रये इत्यर्थः, संसर्गो मेलनम् ॥

**उञ्छति[1] ४ । ४ । ३२ ।**

बदराण्युञ्छति बादरिकः[2] ॥

**रक्षति[3] ४ । ४ । ३३ ॥**

समाजं रक्षति सामाजिकः ॥

**शब्ददर्दुरं[4] करोति ४ । ४ । ३४ ॥**

शब्दं करोति शाब्दिकः[5] । दर्दुरं करोति दार्दुरिकः ॥

**धर्मं[6] चरति ४ । ४ । ४१ ॥**

धार्मिकः ( अधर्माच्चेति वक्तव्यम् ) । आधर्मिकः ॥

**शिल्पम्[7] ४ । ४ । ५५ ॥**

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ॥

**प्रहरणम्[8] ४ । ४ । ५७ ॥**

तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः[9] ॥

---

१–'तत्प्रत्यनुपूर्वम्–'इत्यतः 'तत्' इत्यनुवर्तते, तेन द्वितीयान्तसमर्थात् 'उञ्छति' इत्यर्थे ठक् ॥ २–बदर्याः फलानि बदराणि, तानि उञ्छति अवयवशो गृह्णाति इति विग्रहे ठक्प्रत्ययः ॥ ३–द्वितीयान्तसमर्थात् 'रक्षति' इत्यर्थे ठक् ॥ ४–द्वितीयान्तसमर्थात् शब्ददर्दुरशब्दात् 'करोति' इत्यर्थे ठक् ॥ ५–वैयाकरणः ॥ ६–द्वितीयान्तसमर्थाद् धर्मशब्दात् 'चरति' अनुतिष्ठति इत्यर्थे ठक् ॥ ७–'तदस्य पण्यम्' इत्यतः 'तदस्य' इति सम्बन्धेन प्रथमान्तसमर्थात् 'शिल्पमस्य' इत्यर्थे ठक् । शिल्पं कलासु कौशलम् ॥ ८–प्रथमान्तसमर्थात् 'प्रहरणमस्य' इत्यर्थे ठक् । प्रह्रियतेऽनेनेति प्रहरणम् आयुधम् ॥ ९–'इसुसुक्तान्तात् कः' इति ठस्य कादेशे 'इणः षः' इति विसर्गस्य षः ॥

**शीलम्**[1] ४ । ४ । ६१ ॥

अपूपभक्षणं शीलमस्य आपूपिकः[2] ॥

**निकटे**[3] **वसति** ४ । ४ । ७३ ॥

नैकटिको भिक्षुकः ॥

इति ठगधिकारः । ( प्राग्वहतीयाः ) ॥ ७ ॥

---

## अथ यदधिकारः

**प्राग्घिताद्यत्** ४ । ४ । ७५ ॥

तस्मै हितमित्यतः प्राग् यदधिक्रियते ॥

[4]**तद्वहति रथयुगप्रासङ्गम्** । ४ । ४ । ७६ ॥

रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ॥

**धुरो**[5] **यड्ढकौ** ४ । ४ । ७७ ॥

हलि चेति दीर्घे प्राप्ते—

**न भकुर्छुराम्** ८ । २ । ७९ ॥

---

१—प्रथमान्तसमर्थात् 'शीलमस्य' इत्यर्थे ठक् ॥ २—अपूपशब्दो लक्षणया अपूपभक्षणपरः ॥ ३—'तत्र नियुक्तः' इत्यतः 'तत्र' इत्यधिकारे सप्तम्यन्तसमर्थात् निकटशब्दात् 'वसति' इत्यर्थे ठक् ॥ ४—द्वितीयान्तसमर्थेभ्यो रथयुगप्रासङ्गशब्देभ्यः 'वहति' इत्यर्थे यत् । रथ्योऽश्वादिः, स एव युग्यो युगशब्दस्य रथाङ्गवाचकत्वात् । कर्षणकाले वृषस्कन्धे यत्काष्ठमासज्यते स प्रासङ्गस्तं यो वहति स प्रासङ्ग्यो वृषभः ॥ ५—द्वितीयान्तसमर्थाद् धुर्शब्दात् 'वहति' इत्यर्थे यत् ढक् च प्रत्ययौ ॥

भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात् । धुर्यः[1] । धौरेयः ।

[2]**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ४ । ४ । ९१ ।**

नावा तार्यं[3] नाव्यं जलम् । वयसा[4] तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम्[5] । विषेण वध्यो विष्यः[6] । मूलेन[7] आनाम्यं मूल्यम् । मूलेन[8] समो मूल्यः । सीतया[9] समितं सीत्यं क्षेत्रम् । तुलया संमितं[10] तुल्यम् ॥

**तत्र[11] साधुः ४ । ४ । ९८ ॥**

अग्रे साधुः–अग्र्यः । सामसु साधुः सामन्यः । ये चाभावकर्मणोरिति प्रकृतिभावः । कर्मण्यः । शरण्यः ॥

[12]**सभाया यः ४ । ४ । १०५ ॥**

सभ्यः ॥

इति यतोऽवधिः । ( प्राग्घितीयाः ) ॥ ८ ॥

---

१–धुर्यो भारवाहकः स एव धौरेयः ॥ २–'यत्' प्रत्ययः । अत्र सूत्रे प्रथममूलशब्दान्तं द्वन्द्वं विधाय द्वितीयमूलादितुलान्तद्वन्द्वं च, तयोः पुनर्द्वन्द्व इति व्याख्येयम् । अन्यथा मूलशब्दयोरेकशेषापत्तिः ॥ ३-तरितुं शक्यम् ॥ ४–वयसा तुल्यं मित्रमेव वयस्यः ॥ ५–धर्मफलम् ॥ ६–विषेण वधमर्हति ॥ ७–यावता द्रव्येण वणिग्भिर्वस्त्रादि क्रीतं तन्मूलं मूलधनमित्यर्थः । तेन मूलेन आनाम्यमात्मानम्प्रति शेषीकर्तव्यम् ( लाभाख्यो भागः ) मूल्यम् । लोके लाभसहिते मूलधने, मूल्यशब्दो रूढः ॥ ८–मूलेन मूलभागेन समः सदृशो मूल्यः ॥ ९–'सीता लाङ्गलपद्धतिः' इत्यमरः । सीतया समितं सङ्गतं कृष्टं सत् निम्नोन्नतत्वादिरहितं कृतमित्यर्थः ॥ १०–सम्मितं परिच्छिन्नम्, तुल्यं सदृशपर्यायम् ॥ ११–सप्तम्यन्तसमर्थात् 'साधुः' इत्यर्थे यत् । साधुः प्रवीणो योग्यो वा नोपकर्ता ॥ १२–सप्तम्यन्तसमर्थात् सभाशब्दात् 'साधुः' इत्यर्थे यः प्रत्ययः ॥

# अथ छयतोरधिकारः

**प्राक् क्रीताच्छः ५ । १ । १ ॥**

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ॥

**उगवादिभ्यो यत् ५ । १ । २ ॥**

प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् । छस्यापवादः । शङ्कवे हितं [1]शङ्कव्यं दारु । [2]गव्यम् । ( नाभि नभं च ) । नभ्योऽक्षः[3] । नभ्यमञ्जनम् ॥

**[4]तस्मै हितम् ५ । १ । ५ ॥**

वत्सेभ्यो हितो वत्सीयो गोधुक् ॥

**[5]शरीरावयवाद्यत् ५ । १ । ६ ॥**

दन्त्यम् । कण्ठ्यम् । [6]नस्यम् ॥

---

१—यत्प्रत्यये भत्वे 'ओर्गुणः' इति गुणे 'वान्तो यि प्रत्यये' इत्यनेन वान्तादेशे सिद्धम् । शङ्कव्यं कीलकोपकारकं काष्ठम् ॥ २—गव्यमत्र गोनिमित्तकं घासादि बोध्यम् ॥ ३—सच्छिद्रं रथाङ्गं नाभिः तदनुप्रविष्टः काष्ठविशेषोऽक्षः स च तदनुगुणत्वात्तस्मै हितः । अञ्जनम्-अभ्यञ्जनं तैलाभ्यङ्गम् इत्यर्थः । तदपि स्नेहत्वान्नाभये हितं भवति ॥ ४—चतुर्थ्यन्तसमर्थात् 'हितम्' इत्यर्थे छः प्रत्ययः, उवर्णान्ताद् गवादिभ्यश्च तु 'यत्' प्रत्ययः ॥ ५-चतुर्थ्यन्तसमर्थात् शरीरावयवात् 'हितम्' इत्यर्थे यत् । ६—नासिकायै हितमिति विग्रहः । नस्यशब्देनाधुना संघ्रातव्यं तमालचूर्णादि बोध्यते ॥

[1]आत्मन्विश्वजनभोगोत्तरपदात्खः ५ । १ । ९ ॥

आत्माध्वानौ खे ६ । ४ । १६९ ॥

एतौ खे [2]प्रकृत्या स्तः । आत्मने हितम् आत्मनीनम् । विश्वजनीनम् । [3]मातृभोगीणः ॥

इति छयतोरवधिः । ( प्राक्क्रीतीयाः ) ॥ ६ ॥

---

## अथ ठञधिकारः

प्राग्वतेष्ठञ् ५ । १ । १८ ॥

तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते ॥

[4]तेन क्रीतम् ५ । १ । ३७ ॥

सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम्[5] ॥

सर्वभूमिपृथिवीभ्यामणञौ ५ । १ । ४१ ॥

तस्येश्वरः ५ । १ । ४२ ॥

[6]सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां च । सर्वभूमेरीश्वरः[7] सार्वभौमः । पार्थिवः ॥

---

१–चतुर्थ्यन्तसमर्थाद् आत्मन्विश्वजनभोगोत्तरपदात् 'हितम्' इत्यर्थे खः ॥ २–'प्रकृत्यैकाच्' इत्यतोऽनुवर्त्याह 'प्रकृत्या' इति ॥ ३–'मातु-र्भोगः शरीरं तस्मै हितः' इति विग्रहः ॥ तृतीयान्तसमर्थात् 'क्रीतम्' इत्यर्थे ठञ्प्रत्ययः ॥ ५–प्रस्थेन तत्परिच्छिन्नेन धान्येन क्रीतं शाकादि ॥ ६–षष्ठ्यन्ताभ्यामाभ्यामेतौ स्तः 'ईश्वरः' इत्यर्थे ॥ ७–अस्मिन् सूत्रे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यनुवृत्तौ व्याख्यायोदाहरति–'सर्व-भूमेरीश्वरः' इति ।

[1]पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ५ । १ । ५९ ॥

एते रूढिशब्दा निपात्यन्ते ॥

तदर्हति ५ । १ । ६३ ॥

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ॥

[2]दण्डादिभ्यो यत् । ५ । १ । ६६ ॥

एभ्यो यत् स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः ॥

[3]तेन निर्वृत्तम् ५ । १ । ७९ ॥

अह्ना निर्वृत्तम् [4]आह्निकम् ॥

इति ठञोऽवधिः । ( प्राग्वतीयाः ) ॥ १० ॥

---

१–पङ्क्तिशब्दो नानार्थः; क्रमसन्निवेशे—ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिः । दशसंख्यायाम्—पङ्क्तिरथो दशरथ इत्यर्थः । छन्दोविशेषे च म्गौ गिति पङ्क्तिः । विंशत्याद्याः सङ्ख्यायां सङ्ख्येये चैकवचनान्ताः, विंशतिर्गावः गवां विंशतिरित्यादि ॥ २–द्वितीयान्तसमर्थेभ्यो दण्डादिभ्यः 'अर्हति' इत्यर्थे यत् प्रत्ययः ॥ ३–तृतीयान्तसमर्थात् 'निर्वृत्तम् ( निष्पन्नम् )' इत्यर्थे ठञ् ॥ ४–'अह्नष्टखोरेव' इति नियमेन 'नस्तद्धिते' इति टिलोपव्यावृत्तौ 'अल्लोपोऽनः' इत्यकारलोपः ॥

# अथ त्वतलोरधिकारः

[1]तेन तुल्यं क्रिया चेद्वतिः ५ । १ । ११५ ॥

ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते । क्रिया चेदिति किम् ? गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥

[2]तत्र तस्येव ५ । १ । ११६ ॥

मथुरायामिव मथुरावत् स्रुघ्ने [3]प्राकारः । चैत्रस्येव चैत्रवन्मैत्रस्य गावः ॥

[4]तस्य भावस्त्वतलौ ५ । १ । ११९ ॥

[5]प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबम् ॥

आ च त्वात् ५ । १ । १२० ॥

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । [6]अपवादैः सह

---

१–तृतीयान्तात् 'तुल्यं' इत्यर्थे वतिः स्यात् । 'यत् तुल्यं सा क्रिया चेत्' इति सूत्रार्थः ॥ २–सप्तम्यन्तात् षष्ठ्यन्ताच्च 'इव' इत्यर्थे वतिः प्रत्ययः ॥ ३–प्राकारश्चतुर्दिक्षु आवरणम् ॥ ४–षष्ठ्यन्तसमर्थात् 'भावः' इत्यर्थे त्वतलौ प्रत्ययौ स्तः ॥ ५–यस्माद् गवादिशब्दात्त्वतलौ क्रियेते स गवादिः प्रकृतिः' तज्जन्यबोधो गोत्वप्रकारकगोविशेष्यकस्तत्र यः प्रकारः विशेषणं गोत्वादिः स भावप्रत्ययार्थः । मुख्यविशेष्यतानिरूपितप्रकारताश्रय इति निष्कर्षः ॥ ६–अयं भावः, भावार्थप्रत्ययप्रकरणेऽग्रे इमनिजादयः प्रत्यया विधीयन्ते, ते च त्वतलोर्बाधका न भवेयुरित्येतदर्थमधिकारसूत्रम् । अत्रत्यचकारश्च 'स्त्रीपुंसाभ्याम्–' इति विहिताभ्यां नञ्स्नञ्भ्यां सह त्वतलोः प्रयोगसमावेशार्थं इति ॥

समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः—स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम। पुंस्त्वम्। । पुंस्ता ॥

[1]पृथ्वादिभ्य इमनिज्वा ५।१।१२२॥

वावचनमणादि[2]समावेशार्थम् ॥

र ऋतो हलादेर्लघोः ६।४।१६१॥

हलादेर्लघोरृकारस्य रः स्यादिष्ठेमेयस्सु परतः। [3]पृथु-मृदुभृशकृशदृढपरिवृढानामेव रत्वम् ॥

टेः ६।४।१५५॥

भस्य टेर्लोप इष्ठेमेयस्सु। पृथोर्भावः [4]प्रथिमा—

इगन्ताच्च लघुपूर्वात् ५।१।१३१॥

इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः। पार्थवम्। म्रदिमा, मार्दवम् ॥

---

१-षष्ठ्यन्तसमर्थेभ्यः पृथ्वादिभ्यः 'भावः' इत्यर्थे इमनिच् ॥ २—अणादिरत्र प्रत्ययो न तु प्रत्याहारः॥ ३—'पृथु'प्रभृतिशब्दाः क्रमेण स्थूलकोमलप्रचुरदुर्बलप्रौढस्वामिवाचकाः ॥ ४—'पृथोर्भावः' इति विग्रहे 'पृथु अस्' इत्यस्मात् 'पृथ्वादिभ्य इमनिज्वा' इति विकल्पेनेमनिच्-प्रत्यये तद्धितान्तत्वेन प्रातिपदिकत्वाद् विभक्तेर्लुकि 'र ऋतो हलादेर्लघोः' इति सूत्रेण ऋकारस्य रशब्दादेशे 'टेः' इति टेर्लोपे यथाप्राप्तशास्त्रकार्ये प्रथिमा, इमनिचोऽभावे, 'इगन्ताच्च लघुपूर्वात्' इत्यण्प्रत्यये आदि-वृद्धौ अन्यकार्ये पार्थवम्। त्वप्रत्यये पृथुत्वम्। तल्प्रत्यये च पृथुतेति रूपचतुष्टयम्। एवं 'म्रदिमा' इत्यादावपि ज्ञेयम् ॥

[१]वर्णदृढादिभ्यः ष्यञ्च ५ । १ । १२३ ॥

चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा ॥

[२]गुणवचनब्राह्मणादिभ्यः कर्मणि च ५ । १ । १२४ ॥

चाद्भावे । जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । आकृतिगणोऽयम ॥

[३]सख्युर्यः ५ । १ । १२६ ॥

सख्युर्भावः कर्म वा सख्यम् ॥

[४]कपिज्ञात्योर्ढक् ५ । १ । १२७ ॥

कापेयम् । ज्ञातेयम् ॥

[५]पत्यन्तपुरोहितादिभ्यो यक् ५ । १ । १२८ ॥

सैनापत्यम् । पौरोहित्यम् ॥

इति त्वतलोरधिकारः ॥ ११ ॥



---

१—षष्ठ्यन्तसमर्थेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च 'भावः इत्यर्थे ष्यञ्, चकाराद् इमनिच् ॥ २—षष्ठ्यन्तसमर्थेभ्यो गुणवाचिभ्यो ब्राह्मणादिभ्यश्च 'भाव:' 'कर्म' इत्यर्थे ष्यञ् । कर्म द्विविधम्—क्रिया कार्यं च । तत्र शरीरायासमात्रसाध्यं शौचादि क्रिया, शास्त्रेण विहितो यागादिः कार्यम् इत्यनयोर्भेदः ॥ ३—षष्ठ्यन्तात् सखिशब्दात् 'भावकर्मणोः' अर्थयोर्यः प्रत्ययः ॥ ४—षष्ठ्यन्तसमर्थकपिज्ञातिशब्दाभ्यां 'भावकर्मणोः' अर्थयोर्ढक् प्रत्ययः ॥ ५—षष्ठ्यन्तेभ्यः पत्यन्तशब्देभ्यः पुरोहितादिशब्देभ्यश्च 'भावकर्मणोः' अर्थयोर्यक् प्रत्ययः ॥

## अथ भवनाद्यर्थकाः

[1]धान्यानां भवने क्षेत्रे खञ् ५ । २ । १ ॥

भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ॥

[2]व्रीहिशाल्योर्ढक् ५ । २ । २ ।

व्रैहेयम् । शालेयम् ॥

हैयङ्गवीनं संज्ञायाम् ५ । २ । २३ ॥

ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः— हैयङ्गवीनं नवनीतम् ॥

[3]तदस्य संजातं तारकादिभ्य इतच् ५ । २ । ३६ ॥

तारकाः संजाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् ॥

[4]प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ ॥

तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य—ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ॥

---

१–षष्ठयन्ताद् धान्यवाचिशब्दात् 'भवनं क्षेत्रम्' इत्यर्थे खञ् प्रत्ययः ॥ २–षष्ठयन्तसमर्थव्रीहिशालिशब्दाभ्याम् 'भवनं क्षेत्रम्' इत्यर्थे ढक् । 'व्रीहीणां शालीनां भवनं क्षेत्रम्' इति विग्रहः ॥ ३–प्रथमान्तेभ्यः संजातोपाधिकेभ्यः तारकादिशब्देभ्यः 'अस्य' इत्यर्थे इतच् । पण्डित इत्यस्य तु 'सदसद्विवेकिनी बुद्धिः पण्डा, सा संजातास्य' इति विग्रहः । एवं लज्जितः तृषितः पुष्पितः फलितः पुलकितो रोमाञ्चित इत्यादि ॥ ४–प्रमाणे विद्यमानात् प्रथमान्तात् 'अस्य' इति निर्दिष्टे प्रमेयेऽर्थे त्रय एते प्रत्ययाः स्युः । तत्र परिच्छेदकमात्रे मात्रच् । आद्यौ द्वौ ऊर्ध्वमान एव । तथा च भाष्यम्–'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति ।

**[1]यत्तदेतेभ्यः परिमाणे वतुप् ५ । २ । ३९ ॥**

यत्परिमाणमस्य यावान् । तावान् । एतावान् ॥

**किमिदंभ्यां वो घः ५ । २ । ४० ॥**

आभ्यां वतुप् स्याद् वकारस्य घश्च ।

**इदंकिमोरीश्की ६ । ३ । ९० ॥**

दृग्दृशवतुषु इदम ईश् किमः की । कियान् । इयान् ॥

**[2]संख्याया अवयवे तयप् ५ । २ । ४२ ॥**

पञ्च अवयवा अस्य पञ्चतयम् ॥

**द्वित्रिभ्यां तयस्यायज्वा ५ । २ । ४३ ॥**

द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ॥

**उभादुदात्तो नित्यम् ५ । २ । ४४ ॥**

उभशब्दात्तयपोऽयच् स चाद्युदात्तः । उभयम् ॥

**[3]तस्य पूरणे डट् ५ । २ । ४८ ॥**

एकादशानां पूरणः एकादशः ॥

---

१–परिमाणोपाधिकेभ्यः प्रथमान्तेभ्यः 'यद्-तद्-एतद्' शब्देभ्यः 'अस्य' इत्यर्थे वतुप् ॥ २–अवयवे वर्तमानसंख्यावाचकात् प्रथमान्तादवयविरूपेऽर्थे तयप् इत्यर्थः । अवयवी च कुत्रचिदनुद्भूतावयवभेदः समुदायस्तेन 'मुनित्रयम्' 'बहुतयं यूपम्' इत्यादि प्रयोगाः । कुत्रचिदनुद्भूतावयवसमुदायः, यथा 'उभये देवमनुष्याः' इति ॥ ३–पूर्य्यतेऽनेनेति पूरणः, करणे ल्युट्, संख्येयार्थवाचिसंख्यावाचकात् प्रथमान्तात्पूरणेऽर्थे डट्प्रत्यय इति सूत्रार्थः । यस्मात्संख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्यय इति निष्कर्षः । इदमत्र तत्त्वम्–पूरणार्थप्रत्ययो द्वित्वादिसंख्यावाचकेभ्यः शब्देभ्य एव न तु प्रथमसंख्यावाचकादेकशब्दात्, एकत्वसंख्याया संख्यान्तरपूरकानपेक्षणात् । द्वितीयादिसंख्या तु संख्यान्तरपूरकापेक्षयैव प्रवर्तते, तस्या एकत्वादिसंख्याविकल्पे द्वित्वादिसंख्यानवस्थानात् ॥

**नान्तादसंख्यादेर्मट् ५ । २ । ४९ ॥**

[1]डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ?

**ति विंशतेर्डिति ६ । ४ । १४२ ॥**

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे । [2]विंशः । असंख्यादेः किम् ? एकादशः ॥

**षट्कतिकतिपयचतुरां थुक् ५ । २ । ५१ ॥**

एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । [3]कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः ॥

**द्वेस्तीयः ५ । २ । ५४ ॥**

डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥

**[4]त्रेः संप्रसारणं च ५ । २ । ५५ ॥**

तृतीयः ॥

---

१–असंख्यादेर्नान्तशब्दाद्विहितस्य डटो मडागम इत्यर्थः ॥ २–'विंशतेः पूरणः' इति विग्रहे 'तस्य पूरणे–' इति डटि 'ति विंशतेः–' इति लोपविधानसामर्थ्येन तिमात्रस्य लोपे 'विंश अ' इति जाते 'असिद्धवदत्राभात्' इति तिलोपस्यासिद्धत्वात् 'यस्येति च' इति लोपाप्रवृत्तौ, 'अतो गुणे' इत्यकारयोः पररूपे सति 'विंशः' इति सिद्धम् ॥ ३–ननु 'षट्कति–' इति सूत्रेण डटस्थुगागमः क्रियते, डट् च संख्यावाचकादेव, 'कतिपय' शब्दस्तु न तथेत्यत आह–'कतिपय' इति । एवञ्च 'कतिपयानां पूरणः' इति विग्रहे ज्ञापकाड्डटि तस्य थुगागमे 'कतिपयथः' इति सिद्धम् ॥ ४–त्रिशब्दात्तीयप्रत्ययस्तत्सन्नियोगेन त्रिशब्दस्य सम्प्रसारणं चेति सूत्रार्थः ॥

[1]श्रोत्रियंश्छन्दोऽधीते ५ । २ । ८४ ॥

श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः ॥

पूर्वादिनिः ५ । २ । ८६ ॥

[2]पर्वं कृतमनेन पूर्वी ॥

[3]सपूर्वाच्च ५ । २ । ८७ ॥

[4]कृतपूर्वी ॥

इष्टादिभ्यश्च ५ । २ । ८८ ॥

इष्टमनेन [5]इष्टी । अधीती ॥

इति भवनाद्यर्थकाः ॥ १२ ॥

---

१–'छन्दोऽधीते इति विग्रहे घन्प्रत्ययान्तः श्रोत्रियन्निति विकल्पेन निपात्यते । तदभावे छन्दश्शब्दात् 'तदधीते' इत्यर्थे छान्दसः इति रूपम् ॥ २–द्वितीयान्तपूर्वशब्दात् 'अनेन' इत्यर्थे इनिप्रत्ययः, इति सूत्रार्थे अनेनेति कर्तृरूपार्थस्य क्रियां विनान्वयानर्हत्वे कृतमित्यस्याध्याहारः पूर्वमिति क्रियाविशेषणं तदाह––'पूर्वं कृतम्' इत्यादि ॥ ३–सपूर्वात्पूर्वशब्दात् 'अनेन' इत्यस्मिन्नर्थे इनिरित्यर्थः ॥ ४–अविवक्षितकर्मकात् कृधातोर्भावे क्तप्रत्यये 'पूर्वं कृतमनेन' इति विग्रहे 'सह सुपा' इत्यनेन समासोत्तरम् 'सपूर्वाच्च' इति इनिप्रत्यये 'कृतपूर्वी' इति । अत्र किं कृतपूर्वीति कर्मण आकाङ्क्षायां कटादेरध्याहारः । एवं श्रुतपूर्वी वार्ताम्, भुक्तपूर्वी ओदनम्, इत्याद्युदाहरणं ज्ञेयम् ॥५–यज्धातोर्भूते भावे क्तः । एवमुत्तरत्रापीङ्धातोर्बोध्यम् ॥

## अथ मत्वर्थीयाः

**तदस्यास्त्यस्मिन्निति[1] मतुप् ५ । २ । ९४ ॥**

गावोऽस्यास्मिन्वा सन्ति गोमान् ॥

**तसौ मत्वर्थे १ । ४ । १९ ॥**

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। गरुत्मान् । वसोः संप्रसारणम् । विदुष्मान् । ( गुणवचनेभ्यो[2] मतुपो लुगिष्टः ) । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥

**प्राणिस्थादातो[3] लजन्यतरस्याम् ५ । २ । ९६ ॥**

चूडालः । चूडावान् । प्राणिस्थात्किम् ? शिखावान् । दीपः । प्राण्यङ्गादेव[4] । मेधावान्[5] ॥

**लोमादिपामादिपिच्छादिभ्यः शनेलचः ५ । २ । १०० ॥**

लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः[6] (ग० सू०) अङ्गात्कल्याणे अङ्गना[7] । (ग० सू०)

---

१–सत्ताक्रियाकर्तृभूतात्प्रथमान्तात्समर्थात् 'अस्यास्मिन्वा' इत्यर्थे मतुप् प्रत्ययः । 'अस्ति ' इत्यत्र पुरुषवचने न विवक्षिते वर्तमानकालस्तु विवक्षित एव; अत एव 'गावोऽस्यासन्' इति विग्रहे 'गोमान्' इति न प्रयोगः । 'गोमानासीत्' इति' प्रयोगस्तु तथाव्यवहारविषय आसीदित्यर्थकः ॥ २–गुणे तद्वति च प्रसिद्धा ये शब्दाः शुक्लादयस्ते गुणवचनास्तेभ्यः परस्य मतुपो लुगित्यर्थः । अत एव 'रूपवान् घटः इत्यादौ मतुपो लुङ न ॥ ३–सत्ताक्रियाकर्तृभूतादाकारान्तात्प्राण्यङ्ग-वाचकाल्लज्वेत्यर्थः ॥ ४–प्राणिवृत्तिमूर्तिमदङ्गवाचकादेवेत्यर्थः ॥ ५–मेधाशब्दो बुद्धिपर्यायः ६–विचर्चिकारोगयुक्त इत्यर्थः ॥ ७–'कल्याणानि शोभनान्यङ्गानि यस्याः सा' इति विग्रहः । स्त्रीपर्यायवाच्यङ्गनाशब्दः ॥

लक्ष्म्या अच्च । लक्ष्मणः[१] । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् ॥

**दन्त[२] उन्नत उरच् ५ । २ । १०६ ॥**

उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥

**केशाद्वोऽन्यतरस्याम् ५ । २ । १०९ ॥**

केशवः । केशी । केशिकः । केशवान् ( अन्येभ्योऽपि दृश्यते ) । मणिवः[३] ( अर्णसो[४] लोपश्च ) । अर्णवः ॥

**अत इनिठनौ ५ । २ । ११५ ॥**

दण्डी । दण्डिकः ॥

**व्रीह्यादिभ्यश्च ५ । २ । ११६ ॥**

व्रीही । व्रीहिकः ॥

**अस्मायामेधास्रजो विनिः ५ । २ । १२१ ॥**

यशस्वी । यशस्वान् । मायावी । मेधावी । स्रग्वी[५] ॥

**वाचो ग्मिनिः ५ । २ । १२४ ॥**

वाग्ग्मी[६] ॥

---

१—लक्ष्मीशब्दस्याकारादेशो नप्रत्ययश्च । मत्वर्थे लक्ष्मीवान् लक्ष्मणः । पिच्छशब्दो मयूरपक्षपर्यायः । 'पिच्छिलः पन्थाः' इत्यादिप्रयोगदर्शनात् पिच्छिलशब्दः पङ्कयुक्ताया आर्द्रभूमेर्वाचकोऽप्यस्ति ॥ २—उन्नतोपाधिकात्प्रथमान्ताद्दन्तशब्दान्मत्वर्थे उरच्प्रत्ययः ॥ ३—मणिरस्यास्तीति विग्रहः । मणिवो नागविशेषः ॥ ४—अर्णःशब्दाद् वप्रत्ययः सस्य लोपश्च मत्वर्थे । अर्णांसि जलानि सन्त्यस्मिन्निति अर्णवः समुद्रः ॥ ५—मालाधारी ॥ ६—इकारो नकारपरित्राणार्थं चकारस्य कुत्वे जश्त्वे च कृते वाग्ग्मी वाग्ग्मिनौ' इत्यादौ द्वयोर्गकारयोः श्रवणं भवति । द्वित्वे तु त्रयाणाम् । 'मिनिः' इत्युक्ते तु द्वित्वे द्वयोस्तदभावे चैकस्यैव गकारस्य श्रवणं भवेत् । किञ्च 'प्रत्यये भाषायाम्' इति नित्यानुनासिकत्वं दुर्वारमिति केचित् । अन्ये तु 'वाचो ग्मिनिः इति सूत्रस्य प्रथमान्ताद् वाच्शब्दान्मिनिप्रत्ययः चकारस्य गकारादेशश्चेत्यर्थः । अत्र गकारविधानसामर्थ्यात् 'प्रत्यये भाषायाम्' इति नानुनासिक इति वदन्ति ॥

**अर्शआदिभ्योऽच् ५ । २ । १२७ ॥**

अर्शोऽस्य[1] विद्यते अर्शसः । आकृतिगणोऽयम् ॥

[2]**अहंशुभमोर्युस् ५ । २ । १४० ॥**

अहंयुः अहङ्कारवान् । शुभंयुस्तु शुभान्वितः ॥

इति मत्वर्थीयाः ॥ १३ ॥

---

# अथ प्राग्दिशीयाः

**प्राग्दिशो विभक्तिः ५ । ३ । १ ॥**

दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः ॥

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५ । ३ । २ ॥**

किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते ॥

**पञ्चम्यास्तसिल् ५ । ३ । ७ ॥**

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात् ॥

**कु तिहोः ७ । २ । १०४ ॥**

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । [3]कुतः, कस्मात् ॥

---

१–अर्शः पायुरोगविशेषः ॥ २–'अहम्' 'शुभम्' इतीमे विभक्तिप्रतिरूपके अव्यये ॥ ३–'कस्मात्' इति विग्रहे 'किम् ङसि' इत्यस्मात् 'पञ्चम्यास्तसिल्' इति तसिल्प्रत्यये तद्धितान्तत्वात्प्रातिपदिकत्वेन सुपो लुकि 'कु तिहोः' इति कुभावे स्वरादिपाठेन तसिलन्तस्याव्ययत्वेन तद्धितान्तादागतस्य सुपो लुकि रुत्वादिकार्ये सिद्धम् । एवम् 'काभ्याम्, केभ्यः, कस्याः' इत्यादिविग्रहेष्वपि तदेव रूपम् ॥

**इदम इश् ५ । ३ । ३ ॥**

प्राग्दिशीये परे । [१]इतः ॥

**अन्[२] ५ । ३ । ५ ॥**

एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । [३]अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तु द्वाभ्याम् ॥

**पर्यभिभ्यां च ५ । ३ । ९ ॥**

आभ्यां तसिल् स्यात् । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ॥

**[४]सप्तम्यास्त्रल् ५ । ३ । १० ॥**

कुत्र[५] । यत्र । तत्र । बहुत्र ॥

**इदमो हः ५ । ३ । ११ ॥**

त्रलोऽपवादः । [६]इह ॥

---

१–'अस्मात्' इति विग्रहः ॥ २–एतदः स्थाने 'अन्' इत्यादेशः प्राग्दिशीये परे ॥ ३–'अतः' इत्यत्र अनो नस्य 'नलोपः प्रातिपदिकान्तस्य' इति लोपः । 'एतस्मात्' अमुष्मात्, यस्मात्, तस्मात्, बहुभ्यः' इति क्रमेणैषां विग्रहः । 'अमुतः' इत्यादिषु तसिलः 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकत्वेन 'त्यदादीनामः' इत्यत्वम् ॥ ४–सप्तम्यन्तेभ्यः किमादिभ्यस्त्रल् स्यात्स्वार्थे ॥ ५–'कस्मिन्, यस्मिन्, तस्मिन्, बहुषु' इति क्रमेणैषां विग्रहः । कुत्रेत्यादित्रयाणां देशार्थं एव प्रयोगः बहुत्रेत्यस्य तु कालेऽपीति बोध्यम् ॥ ६–'अस्मिन्देशे' इति विग्रहे हप्रत्यये इदम इशादेशे साधु ॥

**किमोऽत् ५ । ३ । १२ ॥**

वाग्रहणमपकृष्यते[1] । सप्तम्यन्तात्किमोऽद्वा स्यात् पक्षे त्रल् ॥

**क्वाति ७ । २ । १०५ ॥**

किमः क्वादेशः स्यादति । क्व, कुत्र[2] ॥

**इतराभ्योऽपि दृश्यन्ते ५ । ३ । १४ ॥**

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं[3] दीर्घायुः, देवानां प्रियः । आयुष्मान् ॥

**सर्वैकान्यकिंयत्तदः काले दा ५ । ३ । १५ ।**

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ॥

**सर्वस्य सोऽन्यतरस्यां दि ५ । ३ । ६ ॥**

दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा । सर्वदा । एकदा । अन्यदा । [4]कदा । यदा । तदा । काले किम् ? सर्वत्र देशे ॥

**इदमो हिंल्[5] ५ । ३ । १६ ॥**

---

१—'वा ह च च्छन्दसि' इत्यस्मात्सूत्रादिति शेषः ॥ २–'कस्मिन् देशे' इत्युभयत्र विग्रहः ॥ ३—भवदादियोग एवेत्युक्तम्, तत्रादिपदार्थमाह—एवं दीर्घायुः, देवानां प्रिय इत्यादि । यथा—स दीर्घायुः, ततो दीर्घायुः, तत्र दीर्घायुः । एवमग्रेऽपि ॥ ४–'कस्मिन् काले' इति विग्रहे 'सर्वैकान्य–' इति दाप्रत्यये 'प्राग्दिशो–' इति विभक्तिसंज्ञायाम् 'किमः कः' इति कादेशे सिद्धम् ॥ ५–हस्यापवादोऽयम् ॥

सप्तम्यन्तात् काल इत्येव ॥

**एतेतौ रथोः ५ । ३ । ४ ॥**

इदम्शब्दस्य एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे। अस्मिन् काले* एतर्हि। काले किम् ? इह देशे ॥

**[1]अनद्यतने र्हिलन्यतरस्याम् ५ । ३ । २१ ॥**

कर्हि, कदा । यर्हि, यदा । तर्हि, तदा ॥

**एतदः ५ । ३ । ५ ॥**

एत इत् एतौ स्तो रेफादौ थादौ च प्राग्दिशीये । एतस्मिन् काले एतर्हि ॥

**[2]प्रकारवचने थाल् ५ । ३ । २३ ॥**

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे । तेन प्रकारेण तथा । यथा ॥

---

* अस्मिन्नेवार्थे 'अधुना' 'इदानीम्' इत्येतावपि प्रयोगौ भवतः 'अधुना' 'दानीं च' इति सूत्राभ्यामिति बोध्यम् ॥

१—अतीताया रात्रेः पश्चार्द्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनकालः । तन्मध्यवर्तिकालविशेषे र्हिल्प्रत्ययो न प्रयोक्तव्यः ॥

२—सामान्यस्य भेदको विशेषोऽत्र प्रकारः, न तु सादृश्यम् । यथा सामान्यतो ज्ञातं देवदत्तं प्रति अवस्थाविशेषजिज्ञासायां केन विशेषधर्मेण युक्तो देवदत्त इत्याशयेन 'कथं देवदत्तः ?' इति केनचित्पृष्टः कश्चिद् भवज्ज्ञातावस्थाविशेषविशिष्ट एव देवदत्त इत्याशयेनोत्तरयति—'तथा- देवदत्तः' इति । तेन प्रकारेणेति मूलोक्तविग्रहे 'विशिष्टः' इति शेषो बोध्यः । एवमग्रेऽपि ॥

**इदमस्थमुः ५ । ३ । २४ ॥**

थालोऽपवादः । ( एतदोऽपि वाच्यः ) । अनेन एतेन वा प्रकारेण इत्थम् ॥

**किमश्च ५ । ३ । २५ ॥**

केन प्रकारेण कथम् ॥

इति प्राग्दिशीयाः ॥ १४ ॥

---

# अथ प्रागिवीयाः

**अतिशायने तमबिष्ठनौ ५ । ३ । ५५ ॥**

[1]अतिशयविशिष्टार्थवृत्तेः स्वार्थ एतौ स्तः । [2]अयमेषामतिशयेनाढ्यः आढ्यतमः, लघुतमः, [3]लघिष्ठः ॥

**तिङश्च ५ । ३ । ५६ ॥**

तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥

**तरप्तमपौ घः १ । १ । २२ ॥**

एतौ घसंज्ञौ स्तः ॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ५ । ४ । ११ ॥**

---

१–'अतिशायने–' इत्यत्र बाहुलकात्कर्मणि ल्युट् । अतिशयः प्रकर्षस्तत्फलितार्थमाह–अतिशयविशिष्टेत्यादि ॥ २–बहुषु तुल्यरूपप्रकर्षसम्भवाद् यत्र सर्वापेक्षया प्रकर्षस्तदभिधायकस्तमबादिः । तरब्विधायकसूत्रे द्वयोरिति श्रवणाद् बहूनां मध्ये एकत्र प्रकर्षविवक्षायामेव तमबिष्ठनौ भवतः । 'अयमपि आढ्यः, अयमपि आढ्यः, अयमपि आढ्यः, अयमेषामतिशयेनाढ्यः' इति आढ्यतमः ॥ ३–'टेः' इत्यनेन टेर्लोपो बोध्यः ॥

किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। [1]किन्तमाम् । [2]प्राह्णेतमाम् । [3]पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः ॥

**[4]द्विवचनविभज्योपपदे तरबीयसुनौ ५ । ३ । ७७ ॥**

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः । [5]अयमनयोरतिशयेन लघुः लघुतरो लघीयान् ॥ उदीच्याः [6]प्राच्येभ्यः [7]पटुतराः पटीयांसः ॥

**प्रशस्यस्य श्रः ५ । ३ । ६० ॥**

अस्य श्रादेशः [8]स्यादजाद्योः परतः ॥

**प्रकृत्यैकाच् ६ । ४ । १६३ ॥**

इष्टादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः, श्रेयान् ॥

**ज्य च ५ । ३ । ६१ ॥**

---

१–अयमेषामतिशयेन किम् इति विग्रहे किंशब्दात्तमप्प्रत्यये 'तरप्तमपौ घः' इति तस्य घसंज्ञायाम् किमेत्तिङव्यय—' इति आमुप्रत्यये तस्मिन्परे मकारोत्तराकारस्य 'यस्येति च' इति लोपे आमोरनुबन्धलोपे स्वरादित्वादव्ययसंज्ञायां विभक्तेर्लुकि सिद्धमिदम् ॥ २–अत्र 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुग्बोध्यः ॥ ३–'तिङश्च' इति तमपि रूपमिदम् ॥ ४–द्व्यर्थप्रतिपादके, विभजनीये चोपपदे द्वयोर्मध्येऽन्यतरापेक्षातिशयविशिष्टस्वार्थवृत्तेर्विभागप्रयोजकीभूतधर्मवाचकाच्च स्वार्थे एतौ प्रत्ययौ भवत इत्यर्थः ॥ ५–'अयमपि लघुः, अयमपि लघुः अयमनयोरतिशयेन लघुः' इति लघुतरः, लघीयानिति ॥ ६–अत्र 'पञ्चमी विभक्ते' इति पञ्चमी ॥ ७–'प्राच्येभ्योऽतिशयेन पटवः' इत्येव विग्रहः, न तु आढ्यतम इत्यादिवत् ॥ ८–इष्ठेयसोः परयोरित्यर्थः ॥

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः ॥

[1]ज्यादादीयसः ६ । ४ । १६० ॥

आदेः परस्य । ज्यायान् ॥

**बहोर्लोपो भू च बहोः ६ । ४ । १५८ ॥**

बहोः [2]परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । [3]भूमा । भूयान् ॥

**इष्ठस्य यिट् च ६ । ४ । १५९ ॥**

बहोः परस्य इष्ठस्य लोपः स्याद् यिडागमश्च । भूयिष्ठः ॥

**विन्मतोर्लुक् ५ । ३ । ६५ ॥**

विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी [4]स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ॥

**[5]ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५ । ३ । ६७ ॥**

ईषदूनो विद्वान् [6]विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ॥

**विभाषा सुपो बहुच् पुरस्तात्तु ५ । ३ । ६८ ॥**

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुच्वा स्यात्स च प्रागेव न तु परतः । ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् ? जयतिकल्पम् ॥

---

१—ज्यशब्दात्परस्येयस आत्स्यादित्यर्थः ॥ २—'इमनिच्' प्रत्ययस्य 'ईयसुन्' प्रत्ययस्य च लोप इत्यर्थः । आदेः परस्येति नियमादिकारलोपो भवति ॥ ३—'बहूनां भावः' इति विग्रहे 'पृथ्वादिभ्यः-' इतीमनिच् प्रत्ययः॥ ४—'अस्मायामेधा-' इति विहितस्य विनो लुक् । अत्र भत्वेन पदत्वाभावात् 'चोः कुः' इति कुत्वं न पदान्तत्वाभावात् ॥ ५- ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्तात्तिङन्ताच्चैते प्रत्ययाः ॥ ६—विद्वत्सदृश इत्यर्थः ॥

**प्रागिवात्कः ५ । ३ । ७० ॥**

इवे प्रतिकृतावित्यतः प्राक्काधिकारः ॥

**अव्ययसर्वनाम्नामकच् प्राक् टेः ५ । ३ । ७१ ॥**

कापवादः । तिङश्चेत्यनुवर्तते ॥

**[1]अज्ञाते ५ । ३ । ७३ ॥**

[2]कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । (ओकारसकारभकारादौ सुपि [3]सर्वनाम्नष्टेः प्रागकच् । अन्यत्र सुबन्तस्य ) । युष्मकाभिः । युवकयोः । त्वयका ॥

**कुत्सिते ५ । ३ । ७४ ॥**

कुत्सितोऽश्वोऽश्वकः ॥

**[4]किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ५ । ३ । ९२ ॥**

अनयोः कतरो वैष्णवः । यतरः । ततरः ॥

**वा बहूनां जातिपरिप्रश्ने डतमच् ५ । ३ । ९३ ॥**

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । कतमो भवतां कठः। यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ॥

इति प्रागिवीयाः ॥ १५ ॥

---

१- अज्ञातत्वविशिष्टेऽर्थे वर्तमानात्सुबन्तात्कप्रत्ययः ॥ २- 'अज्ञातोऽश्वः' इत्यपि विग्रहः ॥ ३-इदं हि युष्मदस्मच्छब्दविषयकम् ॥ ४-द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच्-प्रत्यय इत्यर्थः ॥

## अथ स्वार्थिकाः

**इवे[1] प्रतिकृतौ ५ । ३ । ९६ ॥**

कन् स्यात् । अश्व इव प्रतिकृतिरश्वकः । ( सर्वप्रातिपदिकेभ्यः स्वार्थे कन् ) अश्वकः ॥

**तत्प्रकृतवचने[2] मयट् ५ । ४ । २१ ॥**

प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । अपूपमयम्[3] । द्वितीये तु अन्नमयो यज्ञः । अपूपमयं पर्व ॥

**प्रज्ञादिभ्यश्च ५ । ४ । ३८ ॥**

अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥

**[4]बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५ । ४ । ४२ ॥**

बहूनि ददाति बहुशः । अल्पशः । ([5]आद्यादिभ्यस्तसेरुपसं-

---

१—इवार्थे सदृशे वर्तमानात् प्रातिपदिकात् कन् । यद् उपमेयं सा प्रतिकृतिश्चेदित्यर्थः, प्रतिकृतौ किम् गोसदृशो गवयः । प्रतिकृतिर्मृदादिनिर्मिता प्रतिमा ॥ २—प्रचुरस्य वचने बोधने सति प्रथमान्तात्समर्थान्मयट् प्रत्ययः स्यादित्येकोऽर्थः, तदुदाहरणं प्राचुर्येण बाहुल्येन प्रकृतमन्नमन्नमयम् । प्राचुर्येण प्रस्तुतान्नादिवचनात् प्रथमान्तात्समर्थाद् अधिकरणे मयट् स्यादिति द्वितीयोऽर्थः, उदाहरणम्—प्राचुर्येण प्रस्तुतानि अन्नान्यस्मिन्सोऽन्नमयो यज्ञ इति—इत्येवं तन्त्रेणार्थद्वये सूत्रतात्पर्यम्, तदेवोक्तं वृत्तौ 'भावे' इत्यादिना ॥ ३—प्रकृतोऽपूप इत्यर्थः । यद्यप्यत्र मयटः स्वार्थिकत्वेन तदन्तस्यापूपमयशब्दस्य 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते' इति नियमेन प्रकृतिवल्लिङ्गतया पुंस्त्वेन भाव्यम्, तथापि 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति वचनादत्र क्लीबत्वमनवद्यम् ॥ ४—बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दात् स्वार्थे शस्प्रत्ययः ॥ ५—अयं तसिः सार्वविभक्तिकः ॥

ख्यानम् । ) आदौ आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण, स्वरतः । वर्णतः ॥

**कृभ्वस्तियोगे[1] संपद्यकर्तरि च्विः ५ । ४ । ५० ॥**

(अभूततद्भाव इति वक्तव्यम्) । विकारात्मतां[2] प्राप्नुवत्यां प्रकृतौ[3] वर्तमानाद्विकारशब्दात्[4] स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ॥

**अस्य च्वौ ७ । ४ । ३२ ॥**

अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात्[5] । ( अव्ययस्य च्वावीत्वं नेति वाच्यम् ) । दोषाभूतमहः । दिवाभूता रात्रिः ॥

**विभाषा साति कार्त्स्न्ये ५ । ४ । ५२ ॥**

च्विविषये सातिर्वा स्यात्साकल्ये ॥

**सात्पदाद्योः ८ । ३ । १११ ॥**

सस्य षत्वं न स्यात् । कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति । दधि[6] सिञ्चति ॥

**च्वौ च ७ । ४ । २६ ॥**

च्वौ परे पूर्वस्य दीर्घः स्यात् । अग्नीभवति ॥

---

१–यस्य यो भावी न भूतः स तद्भावं चेत्सम्पद्यते तस्मिन्नभूततद्भावे वर्तमानात्सम्पत्तिक्रियाकर्तृभूतात्प्रातिपदिकात् कृभ्वस्तीनां धातूनां योगे च्विप्रत्ययो भवति—इति सूत्रार्थः ॥ २–विकारात्मतां कार्यरूपताम् ॥ ३–प्रकृतौ समवायिकारणे ॥ ४–कार्य्यवाचकाद् घटादिशब्दात् ॥ ५–न गङ्गा अगङ्गा अगङ्गा गङ्गा सम्पद्यमाना तथा स्यादिति विग्रहः ॥ ६–प्रसङ्गप्राप्तम् 'सात्पदाद्योः' इत्येतत्सूत्रस्थस्य पदादेरित्यस्योदाहरणम् ॥

**अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्५।४।५७॥**

[1]द्व्यजेवावरं न्यूनं न तु ततो न्यूनमनेकाजिति यावत्। तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे। (डाचि विवक्षिते द्वे बहुलम्) इति डाचि विवक्षिते द्वित्वम्। (नित्यमाम्रेडिते डाचीति वक्तव्यम्) डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटाकरोति। अव्यक्तानुकरणात्किम्? दृषत्करोति। [2]द्व्यजवरार्धात्किम्? श्रत्करोति। अवरेति[3] किम्? खरटखरटाकरोति। अनितौ किम्? पटिति करोति॥

इति स्वार्थिकाः॥ १६॥

॥ इति तद्धिताः॥

---

१–'डाचि च विवक्षिते द्वे बहुलम्' इति वार्तिकेन डाचः प्रागेव पटत्शब्दस्य द्वित्वे 'पटत्पटत्' इति जातम्, तत्रैकः पटत्शब्दस्तदर्द्धम्, तत्र यदि न्यूनं चेदस्ति तदा द्व्यजेव, न तु द्व्यचोऽपि न्यूनमेकाच्पटत् शब्दः, एवं तादृशमर्द्धं यस्य समुदायस्य 'पटत् पटत्' इत्यस्य तस्मात्समुदायाड्डाच्प्रत्यये परस्य 'पटत्' इत्यस्य 'तस्य परमाम्रेडितम्' इत्याम्रेडितसंज्ञायाम् 'नित्यमाम्रेडिते डाचि–'इति वार्तिकेन पूर्वं 'पटत्' इत्यस्य तकारस्य पर 'पटत्' इत्येतस्य पकारस्य च पररूपे परत्र टिलोपे 'पटपटाकरोति' इति सिद्धम्॥ २–यदीदं न कर्तव्यं स्यात्तदा यदिदमव्यक्तशब्दानुकरणं 'श्रत्' इति, तस्माड्डाच् स्यात्। कृते तस्मिन् न दोषः, द्वित्वे सति 'श्रत्, श्रत्' इति, समुदायस्यार्द्धं 'श्रत्' इति, तद्-द्व्यचो न्यूनमेव, न तु द्व्यजेवावरमिति भावः॥ ३–अवरग्रहणाभावे 'अव्यक्तानुकरणाद्द्व्यजर्धात्' इत्यादिरूपं सूत्रं स्यात्॥ द्व्यच् अर्द्धं यस्येति तद्द्व्यजर्द्धं प्रातिपदिकं तस्माड्डाजित्यर्थेऽत्र न स्याद् अर्द्धस्य 'खरटत्' इत्यस्य द्व्यच्त्वाभावात्। कृते तस्मिन् न्यूनं चेद् द्व्यच् एव न तु एकाजरूपमधिकस्य द्व्यजपेक्षया न व्यावृत्तिरित्यत्रापि सिद्धमिष्टमिति॥

# अथ[1] स्त्रीप्रत्ययाः

**स्त्रियाम् ४ । १ । ३ ॥**

अधिकारोऽयम् । समर्थानामिति यावत् ॥

**अजाद्यतष्टाप् ४ । १ । ४ ॥**

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं :तत्र द्योत्ये टाप् स्यात् । अजा[2] । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । इत्यादि ॥ मेधा । गङ्गा । सर्वा ॥

**उगितश्च ४ । १ । ६ ॥**

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् । भवती[3] । भवन्ती[4] । पचन्ती । दीव्यन्ती ॥

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४ । १ । १५ ॥**

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः

---

१–टाबादेः प्रायः कृदन्ततद्धितान्तयोरेव प्रकृतित्वात् तदुपपादक-प्रकरणानन्तरम् एतस्यौचित्यात्तद्धितानन्तरं स्त्रीप्रत्ययप्रकरणमारभते ॥ २–अजादिशब्दाः क्रमेण 'छागी' 'मेषी' 'तुरंगी' 'कलविङ्की' 'आखुः–' इत्येतेषां वाचकाः । एषु जातिलक्षणो ङीष् बाध्यते । बालादिशब्दाः प्रथमवयोवाचिनस्तेषु 'वयसि प्रथमे' इति प्राप्तो ङीब् बाध्यते ॥ ३–भाधातोर्डवतुप्रत्यये कृते निष्पन्नस्य सर्वनाममवच्छब्दस्योगिदन्तत्वात् ङीप् ॥ ४–शत्रन्ताद्भवतो ङीपि 'शप्श्यनोर्नित्यम्' इति नुमि तत्सिद्धिः । एवमेव 'पचन्ती' इत्यादि ॥

स्त्रियां ङीप्स्यात् । [1]कुरुचरी । नदट् नदी । देवट् देवी । [2]सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । (नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ) [3]स्त्रैणी । पौंस्नी । शाक्तिकी । याष्टीकी । आढ्यंकरणी । [4]तरुणी । तलुनी ॥

**यञश्च ४ । १ । १६ ॥**

यञन्तात् स्त्रियां ङीप्स्यात् । [5]अकारलोपे कृते—

**हलस्तद्धितस्य ६ । ४ । १५० ॥**

हलः परस्य तद्धितयकारस्योपधाभूतस्य लोप ईति परे । गार्गी[6] ॥

**प्राचां ष्फ [7]तद्धितः ४ । १ । १७ ॥**

---

१–'कुरुषु' चरतीति विग्रहे 'चरेष्टः' इति टप्रत्ययः । नदट् देवट् चरडिति त्रयः पचाद्यजन्ताष्टितः' ॥ २–सौपर्णेयीप्रभृतिषु क्रमेण 'स्त्रीभ्यो ढक्' 'साऽस्य देवता' 'उत्सादिभ्योऽञ्' 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' 'संख्याया अवयवे तयप्' 'तेन दीव्यति खनति जयति जितम्' 'लवणाट्ठञ्' 'त्यदादिषु दृशोऽनालोचने कञ्च' 'इण्नशजिसर्तिभ्यः क्वरप्' इति सूत्रैस्तत्तत्प्रत्यया बोध्याः ॥ ३–'स्त्रीपुंसाभ्यां नञ्स्नञौ—' 'शक्तियष्टयोरीकक्' 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति सूत्रैः प्रत्यया बोध्याः ॥ ४–'त्रोरश्च लो वा' इति उणादिसूत्रेण उन्नन्तौ यौवनवयोवाचिनाविमौ ॥ ५–'यस्येति च' इत्यनेनेति शेषः ॥ ६–'गर्गस्य गोत्रापत्यं स्त्री' इति विग्रहः । 'गर्गादिभ्यो यञ्' इति यञ्प्रत्ययः । 'गार्ग्यायणी' इत्यस्याप्ययमेव विग्रहः ॥ ७–ष्फप्रत्ययस्य तद्धितसंज्ञायाः प्रयोजनं तस्मिन् परे 'यस्येति च' इत्यकारलोपः । तद्धितान्तत्वात्प्रातिपदिकसंज्ञा च ॥

यञन्तात् ष्फो वा स्यात्स:च तद्धित: ॥

**षिद्गौरादिभ्यश्च ४ । १ । ४१ ॥**

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात् । गार्ग्यायणी । [1]नर्तकी । गौरी । [2]अनडुही । अनड्वाही । आकृतिगणोऽयम् ।

**वयसि प्रथमे ४ । १ । २० ॥**

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात् । [3]कुमारी ॥

**द्विगोः ४ । १ । २१ ॥**

अदन्ताद् द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । [4]त्र्यनीका सेना ॥

**वर्णादनुदात्तात्तोपधात्तो नः ४ । १ । ३९ ॥**

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एनी, [5]एता । रोहिणी, रोहिता ॥

---

१—नर्तनशीला नर्तकी । 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्ययः ॥ २—'आमनडुहः स्त्रियां वा वाच्यः—' इति वार्तिकेन वैकल्पिक आम्प्रत्ययः ॥ ३—कुमारत्वमवस्थाविशेषः,

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
कैशोरमापञ्चदशाद् यौवनं तु ततः परम् ॥

कौमारयौवनवृद्धत्वभेदात्त्रीणि वयांसि, आयुश्चतुर्भागैश्चत्वारि वा ॥ यौवनात्प्राक्प्रथमं वयः । अत्रेदं तत्त्वम्—'वयस्यचरमे' इति वार्तिकबलेन वृद्धवयो वर्जयित्वा सर्वत्रैव ङीप्रत्ययः इष्टः ॥ ४—'पञ्चपात्रम्' 'त्रिभुवनम्' 'चतुर्युगम्' इत्यादौ तु ङीप्टापौ न' 'पात्राद्यन्तस्य न' इति वार्तिकेन तेषु स्त्रीत्वनिषेधात् ॥ ५—एतशब्दश्चित्रवर्णवाची । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । रोहितशब्दो रक्तवर्णवाची । 'रोहितो लोहितो रक्तः' इत्यमरः ॥

**वोतो गुणवचनात् ४ । १ । ४४ ॥**

उदन्ताद् गुणवाचिनो वा ङीष् स्यात् । मृद्वी[1], मृदुः ॥

**बह्वादिभ्यश्च ४ । १ । ४५ ॥**

एभ्यो वा ङीष् स्यात् । बह्वी, बहुः[2] । ( कृदिकारादक्तिनः[3] ) । रात्री, रात्रिः । ( सर्वतोऽक्तिन्नर्थादित्येके[4] ) । शकटी । शकटिः ॥

**पुंयोगादाख्यायाम् ४ । १ । ४८ ॥**

या[5] पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी । ( पालकान्तान्न )—

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७ । ३ । ४४ ॥**

प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि स आप्सुपः परो

---

१—एवं पट्वी पटुः, तन्वी तनुरित्याद्यपि ज्ञेयम् ॥ २—बहुशब्दो वैपुल्यवचन एकवचनान्तोऽत्र यत एकाश्रयवर्ति वैपुल्यरूपं बहुत्वम् । बहुरोदनः, बहुः सूपः । संख्यावाची तु पञ्चादिवत् बहुवचनान्तः । त्रित्वाद्याश्रयगतस्य बहुत्वस्य द्व्येकयोरसंभवात् कारकप्रकरणे वचनग्रहणोदाहरणे मूले तादृशप्रयोगदर्शनात् ॥ ३—क्तिन्प्रत्ययावयवभिन्नः कृत्संबन्धी य इकारस्तदन्तान् ङीष् वा । अस्य 'अङ्गुलिः, अङ्गुली' 'धूलिः, धूली' 'आजिः, आजी' इत्यादीनि चोदाहरणानि ज्ञेयानि ॥ ४—क्तिन्नर्थप्रत्ययावयवभिन्नेकारान्तात् प्रातिपदिकमात्रान् ङीष् वा । अनेन वार्तिकेनाव्युत्पन्नादपि इकारान्तान्ङीष् प्रत्ययः ॥ ५—या पुमाख्या पुंस्वेव यः प्रसिद्धः शब्दः पुंयोगात् पुंसंबन्धाद्धेतोः स्त्रियां वर्तते तत्र प्रवृत्तिं लभते तस्मात् पुंबोधकाच्छब्दान् ङीष् इत्यर्थः । योगश्चात्र दाम्पत्यजन्यजनकभावादिसाधारणस्तेन केकयदेवकरेवतसम्बन्धिकन्यासु केकयीदेवकीरेवतीशब्दानां प्रयोगः ।

न चेत् । गोपालिका[1] । अश्वपालिका । सर्विका । कारिका । अतः किम् ? नौका । प्रत्ययस्थात्किम् ? शक्नोतीति शका[2] । असुपः किम् ? बहुपरिव्राजका[3] नगरी । ( सूर्याद्देवतायां चाब्वाच्यः ) सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् ? ( सूर्यागस्त्ययोश्छे च ङ्यां च ) । यलोपः । सूरी[4]––कुन्ती, मानुषीयम् ॥

**इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४ । १ । ४९ ॥**

एषामानुगागमः स्यात् ङीष् च । इन्द्रस्य स्त्री––इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । ( हिमारण्ययोर्महत्त्वे ) । महद्धिमं हिमानी । महदरण्यमरण्यानी । (यवाद्दोषे) । दुष्टो यवो यवानी[5] । (यवनाल्लिप्याम्) । यवनानां लिपिर्यवनानी । ( मातुलोपाध्याययोरानुग्वा ) । मातुलानी[6], मातुली ।

---

१–'गाः पालयतीति गोपालः स एव गोपालकस्तस्य स्त्री' इति विग्रहः । एवमुत्तरत्र । ण्वुलन्तेन सह गवादीनां तु न षष्ठीसमासः; 'तृजकाभ्यां कर्तरि' इति षष्ठीसमासनिषेधात् ॥ २–पचाद्यजन्तोऽयं शब्दः । अत्र शकधातुस्थः ककारः ॥ ३–'बहवः परिव्राजका यस्यां सा' बहुपरिव्राजका इत्यत्र बहुव्रीहौ परिव्राजकशब्दोत्तरवर्तिनो जसः 'सुपो-धातु–' इति लुकि बहुपरिव्राजकप्रातिपदिकाज् जातो यष्टाप् स 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन सुपः परः एवेति न भवत्येवात्रेकार इति भावः ॥ ४–अत्र 'पुंयोगादाख्यायाम्' इति ङीष् । अत्र 'यस्येति च' इत्यकारलोपे कृतेऽनेन वार्तिकेन यकारलोपः ॥ ५–यवाकृतिर्धान्यविशेषः ॥ ६–'मातुलस्य स्त्री' इति विग्रहः । 'पितृव्यमातुलमातामहपितामहाः' इति सूत्रेण मातुर्भ्रातर्य्यर्थे निपातितो मातुलशब्दः ॥

उपाध्यायानी, उपाध्यायी। (आचार्यादणत्वं च)। आचार्यस्य[2] स्त्री आचार्यानी। (अर्यक्षत्रियाभ्यां वा स्वार्थे)। अर्याणी, अर्या। क्षत्रियाणी, क्षत्रिया॥

**क्रीतात्करणपूर्वात् ४।१।५०॥**

क्रीतान्तादन्तात करणादेः स्त्रियां ङीष् स्यात्। वस्त्रक्रीती। क्वचिन्न[4]। धनक्रीता॥

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४॥**

असंयोगोपधमुपसर्जनं यत् स्वाङ्गं[5] तदन्तादन्तान् ङीष् वा स्यात्। केशानतिक्रान्ता–अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। असंयोगोपधात्किम्? सुगुल्फा[6]। उपसर्जनात्किम्? शिखा॥

---

१–'उपेत्य अधीयतेऽस्मादित्युपाध्यायस्तस्य स्त्री' इति विग्रहः। 'इङश्च' इत्यपादाने घञ् प्रत्ययः। या स्त्री स्वयमेवाध्यापिका तत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' इति वार्तिकेन घञन्ताद् वैकल्पिकङीष्प्रत्यये 'उपाध्यायी' उपाध्याया' इति रूपद्वयम्॥ २–आचार्यलक्षणं च-

आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि।
स्वयमाचरते यस्मात्तस्मादाचार्य इष्यते॥

—इति शिष्टोक्तदिशा ज्ञेयम्। या स्त्री स्वयमेवाचार्यगुणसम्पन्ना तत्र आचार्या इत्येकमेव रूपम्॥ ३–'वस्त्रेण क्रीता' इति विग्रहे 'कर्तृकरणे–' इति सूत्रेण 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति परिभाषया सुबुत्पत्तेः पूर्वं समासेन निष्पन्नाद् वस्त्रक्रीतशब्दान् ङीष्प्रत्ययः॥ ४–'कर्तृकरणे–इति सूत्रे बहुलग्रहणेन निरुक्तपरिभाषायाः क्वचिदप्रवृत्तौ सुबुत्पत्त्यनन्तरं समासे सुपः प्रागन्तरङ्गत्वाट्टापि समासे कृते 'धनक्रीता' इति जाते तस्य चादन्तत्वाभावान्न ङीष्। तदाह- क्वचिन्नेति॥ ५–स्वाङ्गलक्षणं यथा—

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम्॥

इति। स्वाङ्गलक्षणं केशमुखादिषु समानमेव॥ ६–गुल्फशब्दो घुटिकापर्यायः॥

**न क्रोडादिबह्वचः ४ । १ । ५६ ॥**

[1]क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोऽयम् । सुजघना[2] ॥

**नखमुखात्संज्ञायाम् ४ । १ । ५८ ॥**

न ङीष् ॥

**पूर्वपदात्संज्ञायामगः ८ । ४ । ३ ॥**

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने । शूर्पणखा[3] । गौरमुखा । संज्ञायां किम् ? ताम्रमुखी कन्या ।

**जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३ ॥**

जातिवाचि[4] यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । तटी[5] । वृषली[6] । कठी[7] । बह्वृची[8] । जातेः किम् ? मुण्डा[9] । अस्त्रीविषयात्किम् ? बलाका[10] । अयोपधात्किम् ? क्षत्रिया । ( योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ) । हयी[11] । गवयी[12] । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी । ( मत्स्यस्य ङ्याम् ) । यलोपः । मत्सी ।

---

१–क्रोड नख खुर गोखा उखा शिखा बाल शफ शुक्र इति क्रोडादिराकृतिगणः ॥ २--एवं 'कमलनयना' 'पद्मवदना' इत्यादयः । ३–अत्र 'स्वाङ्गाच्चोप–' इति ङीष् प्राप्तः 'नखमुखात्' इति निषिध्यते ॥ ४–'आकृतिग्रहणा जातिः' इत्यस्योदाहरणम् 'तटी' इति । 'लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या' इत्यस्योदाहरणम् 'वृषली' इति । 'गोत्रं च चरणैः सह' इत्यस्योदाहरणम् 'कठी' 'बह्वृची' ॥ ५–तीरम् ॥ ६--शूद्रजातीया स्त्री ॥ ७–कठगोत्रोत्पन्ना ॥ ८–'बह्व्य ऋचोऽध्येतव्या यस्याः सा' इति बहुव्रीहौ 'ऋक्पूरब्धूः-' इति अप्रत्ययः ॥ ९-मुण्डिता ॥ १०-

बलाका बकपङ्क्तिः स्याद्बलाका विषकण्टिका ।
बलाका कामुकी प्रोक्ता बलाकश्च बको मतः ॥

११–अश्वा ॥ १२–गवयशब्देन गोसमानाकारः पशुविशेषो गृह्यते ॥

**इतो मनुष्यजातेः ४ । १ । ६५ ॥**

ङीष्[1] । दाक्षी ॥

**ऊङुतः ४ । १ । ६६ ॥**

उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । [2]कुरूः । अयोपधात्किम् ? अध्वर्युर्ब्राह्मणी[3] ॥

**[4]पङ्गोश्च ४ । १ । ६८ ॥**

पङ्गूः । ( श्वशुरस्योकाराकारलोपश्च ) ) श्वश्रूः ॥

**ऊरूत्तरपदादौपम्ये ४ । १ । ६९ ॥**

उपमानवाचि पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । [5]करभोरूः ॥

**संहितशफलक्षणवामादेश्च ४ । १ । ७० ॥**

अनौपम्यार्थं सूत्रम् । संहितोरूः[6] । शफोरूः[7] । लक्षणोरूः[8] । [9]वामोरूः ॥

**शार्ङ्गरवाद्यञो ङीन् ४ । १ । ७३ ॥**

---

१–इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष् स्यादित्यर्थः । दाक्षीत्यत्र 'दक्षस्य गोत्रापत्यं कन्या' इति विग्रहे 'अत इञ्' इतीञ् प्रत्ययान्तान्ङीष् प्रत्ययः ॥ २–कुरुनादिभ्यो ण्यः, तस्य स्त्रियामवन्तीत्यादिना लुक् ॥ ३–यजुर्वेदज्ञ ऋत्विग् अध्वर्युशब्देनोच्यते, तस्यैव स्त्रियामुदाहरणमिदम् ॥ ४–अजात्यर्थमिदम् । पङ्गुशब्दो हि गुणवाची ॥ ५–करभाविव स्निग्धावूरू यस्याः सा ॥ ६–संहितौ पृथुत्वात्संश्लिष्टौ ऊरू यस्याः सा ॥ ७–शफवत्संश्लिष्टत्वे शफत्वारोपः । शफौ खुरौ तौ ऊरू यस्याः सेति विग्रहः ॥ ८–लक्षणशब्दोऽर्शआद्यजन्तः 'लक्षणौ लक्षणवन्तौ ऊरू यस्याः सा' इति विग्रहः ॥ ९–वामौ सुन्दरावूरू यस्याः सा ॥

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी[1] । बैदी[2] । ब्राह्मणी । ( नृनरयोर्वृद्धिश्च ) । नारी ॥

**यूनस्तिः ४ । १ । ७७ ॥**

युवन्शब्दात् स्त्रियां तिः प्रत्ययः स्यात् । युवतिः[3] ॥

॥ इति स्त्रीप्रत्ययाः ॥

---

शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ।
कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी सम्पूर्णा ॥



---

१–'शृङ्गरोरपत्यं स्त्री' इति विग्रहः । तस्यापत्यमित्यौत्सर्गिकोऽण् । नित्त्वादाद्युदात्तः ॥ २–'बिदस्य गोत्रापत्यं स्त्री' इति विग्रहे 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञ्प्रत्ययः ॥ ३–युवन्शब्दात्तिप्रत्यये 'स्वादिषु–' इति पदत्वे नलोपः॥ ननु युवतीति दीर्घेकारान्तस्य कथं सिद्धिरिति चेत् 'यौति मिश्रीकरोत्यात्मानं पत्या' इति विग्रहे युधातोर्लटि तस्य शत्रादेशे 'उगितश्च' इति ङीप्प्रत्यये सिद्धमिष्टमिति शिवम् ॥

यथाबुद्धिविलासेन टिप्पणी येह निर्मिता ।
बालानां सुखबोधाय तया तुष्यतु शङ्करः ॥

# परिशिष्टम्

# अथ लिङ्गपरिचयः

## तत्रादौ स्त्रीलिङ्गाधिकारः

ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः। ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात्, तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोऋदन्तत्वाभावात्॥

अन्यूक्तिन्प्रत्ययान्ताः तल्प्रत्ययान्ताश्च शब्दाः, तथा आबन्ता ङीब्ङीषन्ता ऊङन्ताश्च शब्दाः स्त्रियामेव बोध्याः। यथा—अवनिः, चमूः, कृतिः, भूतिः, ब्राह्मणता, देवता, रमा, कुमारी, कुण्डोघ्नी, कुरूः इत्यादयः।

गो, मणि, यष्टि, मुष्टि, पाटलि, वस्ति, शाल्मलि, त्रुटि, मसि, मरीचि, मृत्यु, शीधु, कर्कन्धु, किष्कु, कण्डु, रेणु, अशनि, भरणि, अरणि, श्रोणि, योनि, ऊर्मि, तिथि, इषु, इषुधि, बाहु इत्यादयः शब्दाः पुंसि स्त्रियां च प्रयुज्यन्ते। 'सुमनस्'शब्दो देवार्थवाचकश्चेन्नित्यपुंल्लिङ्गः, पुष्पार्थवाचकश्चेत्तदा नपुंसके स्त्रीलिङ्गे चोभयत्र प्रयुज्यते। दुन्दुभिशब्दोऽक्षार्थे स्त्रीलिङ्गोऽन्यत्र पुंल्लिङ्गः। भूमिविद्युत्सरिल्लतावनितापर्यायाः शब्दा अपि स्त्रियामेव भवन्ति। अत्रापवादः—यादो नपुंसकम्। दारशब्दः पुमान्। यादःशब्दः सरित्पर्यायः, दारशब्दस्तु वनितापर्यायः।

श्री, विंशति, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति, नवति, भास्, स्रुच्, स्रज्, दिश्, उष्णिह्, उपानह्, प्रावृष्, विप्रुष्, रुष्, तृष्, विश्, त्विष्, दर्वि, विदि, वेदि, खनि, शानि, अश्रि, वेशि, कृषि, ओषधि, कटि, अङ्गुलि, नाडि, रुचि, वीचि, नालि, धूलि, किकि, केलि, छवि, रात्रि, शष्कुलि, राजि, कुटि, वर्ति, भ्रुकुटि, त्रुटि, वलि, पङ्क्ति, प्रतिपद्, आपद्, विपद्, सम्पद्, शरद्, संसद्, परिषद्, उषस्, संविद्, क्षुध्, मुद्, समिध्, आशिष्, धुर्,

पुर्, गिर्, द्वार्, अप्, त्वच्, वाच्, यवागू, नौ, स्फिच्, सीमन्, याच्ञा——एते शब्दाः, लक्ष्मीभूमिग्लानिप्रभृतय ई-मि-नि प्रत्ययान्ताश्च स्त्रीलिङ्गा बोध्याः ।

इति स्त्रीलिङ्गाधिकारः ।

## अथ पुँल्लिङ्गाधिकारः

**घञबन्तः, घाजन्तश्च** । 'घञ्, अप्, घ, अच्' इत्येतत्प्रत्ययान्ताः शब्दाः पुँल्लिङ्गा भवन्ति, यथा—पाकः, त्यागः । करः, गरः । विस्तरः, गोचरः । चयः, जयः इत्यादयः । एवमेव **नङन्तः** । नङ्प्रत्ययान्ताः शब्दाः पुँल्लिङ्गाः, यथा—यज्ञः, यत्नः, विश्नः, प्रश्नः इत्यादयः । याच्ञा-शब्दस्तु स्त्रियामेव प्रयुज्यते । **कयन्तो घुः** । किप्रत्ययान्ता घुसंज्ञक-शब्दाः पुँल्लिङ्गा एव भवन्ति, यथा–आधिः, निधिः, उदधिरित्यादयः । इषुधिस्तु स्त्रियामेव प्रयुज्यते ।

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्का एत-त्पर्यायशब्दाश्च पुंस्येव प्रयुज्यन्ते, यथा—देवाः सुराः । असुराः दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो बाहुः । कण्ठो गलः (ग्रीवाशब्दस्तु स्त्रियामेव) । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दमः । अत्रापवादाः– त्रिविष्टपत्रिभुवने नपुंसके, द्यौः स्त्रियाम् । इषुबाहू स्त्रियां च, बाणकाण्डौ नपुंसके च ।

नकारान्ताः सर्वे पुँल्लिङ्गाः—यथा—राजा, तक्षा, युवा इत्यादयः । न च चर्मवर्मादिष्वतिव्याप्तिः, '**मन्द्व्यच्कोऽकर्तरि**' इति वचनेन तत्र नपुंसकत्वाभिधानात् ।

क्रतुपुरुषकपोलगुल्फमेघशब्दास्तत्पर्यायवाचकाश्च पुंसि भवन्ति । यथा——क्रतुः अध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः । अत्रापवादः—अभ्रं नपुंसकम् ।

उकारान्ताः शब्दाः पुंसि स्युः। यथा—प्रभुः, इक्षुरित्यादयः। अत्रापवादाः——हनुकरेणुधेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गुशब्दाः स्त्रियां भवन्ति। तथास्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालुशब्दा नपुंसके भवन्ति। अत्र वसुशब्दो धनवाची गृह्यते गणदेवतार्थकस्तु पुंस्येव प्रयुज्यते। मद्गुमधुशीधुसीधुसानुकमण्डलुशब्दाः पुन्नपुंसकयोर्भवन्ति।

'रु' इत्यन्ताः त्वन्ताश्च शब्दाः पुंसि स्युः। यथा——मेरुः, गुरुः, सेतुः, केतुरित्यादयः। अथापवादा.—दारुकसेरुजतुवस्तुमस्तुशब्दा नपुंसके भवन्ति। सक्तुशब्दः पुन्नपुंसकयोः।

कोपधोऽकारान्तः शब्दः पुंसि स्यात्। यथा——स्तवकः, कल्कः। अत्रापवादाः——चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके। कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतटाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलकानि च पुन्नपुंसकयोः।

टोपधोऽकारान्तश्च पुंसि स्यात्। यथा——घटः, पटः। अथापवादाः— किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके भवन्ति। कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि पुंन्नपुंसकयोः।

णोपधोऽकारान्तः पुंसि स्यात्। यथा——गुणः, गणः, पाषाणः। अथापवादाः- ऋणलवणपर्णतोरणोष्णानि नपुंसके भवन्ति। कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि पुन्नपुंसकयोर्भवन्ति।

थोपधोऽकारान्तः पुँल्लिङ्गो यथा——रथः, ग्रन्थः, श्रन्थः। अत्रापवादाः—काष्ठपृष्ठसिक्थोक्थानि नपुंसके। दिगर्थकाष्ठाशब्दः स्त्रियाम्। तीर्थयूथप्रोथगाथशब्दाः पुन्नपुंसकयोः। गाथाशब्दः स्त्रियाम्।

नोपधोऽदन्तः पुंसि भवेत्। यथा – इनः, फेनः। अपवादाः—— जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके। मानयानाभिधानमलिनपुलिनोद्यान-

शयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि पुन्नपुंसकयोः ।

पोपधोऽकारान्तः पुंसि स्यात् । यथा—यूपः, दीपः, सर्पः । अत्रापवादाः—पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके । सूर्पकुतपकुणपद्वीपविटपानि पुन्नपुंसकयोः ।

भोपधोऽकारान्तः पुँल्लिङ्गः स्यात् । यथा—स्तम्भः, कुम्भ इत्यादयः । अपवादाः—तलभं नपुंसकम् । जृम्भं पुन्नपुंसकयोः ।

मोपधोऽदन्तः पुंसि स्यात् । यथा—सोमः, भीम इत्यादयः । अपवादाः-रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि पुंनपुंसकयोः ।

योपधोऽदन्तः पुँल्लिङ्गः । यथा-समयः, हयः । अपवादाः—किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । गोमयकषायमलयान्वयाव्ययानि पुन्नपुंसकयोः ।

रोपधोऽकारान्तः पुंसि स्यात् । यथा—क्षुरः, अङ्कुरः । अपवादाः—द्वाराग्रस्फारतक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रस्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रवलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके भवन्ति । शुक्रशब्दोऽपि देवताभिन्नेऽर्थे क्लीबे प्रयुज्यते । चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि पुन्नपुंसकयोर्भवन्ति ।

षोपधोऽकारान्ताः पुंसि भवेत् । यथा—वृषः, वृक्ष इत्यादि । अपवादाः—शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके भवन्ति । यूषकरीषमिषविषवर्षाणि पुन्नपुंसकयोः ।

सोपधोऽकारान्ताः पुंसि भवेत् । यथा—वत्सः, वायसः । अपवादाः—पनसबिसबुससाहसानि नपुंसके । चमसांसरसनिर्यासोपवास-

कार्पासवासमासकासकांसमांसानि पुन्नपुंसकयोः। कंसशब्दोऽप्राणिनि पुंन्नपुंसकलिङ्गः। 'कंसोऽस्त्री पानभाजनम्' इति कोषात्। प्राणिनि तु पुंल्लिङ्गः, कंसो नाम राजोग्रसेनिः।

रश्मिदिवसशब्दौ तत्पर्यायवाचकशब्दाश्च पुंसि स्युः। रश्मि-मयूखः, दिवसो घस्रः। अपवादाः—दीधितिः स्त्रियाम्। दिनाहनी नपुंसके।

परिमाणवाचकशब्दाः पुंसि भवेयुः। कुडवः, प्रस्थः। अपवादाः—द्रोणाढकौ नपुंसके पुंल्लिङ्गे च। खारीमानिके स्त्रियाम्।

दाराक्षतलाजासूनां बहुवचनान्तत्वं पुंस्त्वं च।

मरुत्, गरुत्, तरत्, ऋत्विक्, ऋषि, राशि, दृति, ग्रन्थि, कृमि, ध्वनि, वलि, कौलि, मौलि, रवि, कवि, कपि, मुनि, ध्वज, गज, मुञ्ज, पुञ्ज, हस्त, कुन्त, अन्त, व्रात, वात, दूत, धूर्त, सूत, चूत, मुहूर्त, षण्ड, भण्ड, करण्ड, भरण्ड, वरण्ड, तुण्ड, गण्ड, मुण्ड, पाषण्ड, शिखण्ड, वंश, अंश, पुरोडाश, ह्रद, कन्द, कुन्द, बुद्बुद, शब्द, अर्घ, पथिन्, मथिन्, ऋभुक्षिन्, स्तम्ब, नितम्ब, पूग, पल्लव, पल्वल, कफ, रेफ, कटाह, निर्व्यूह, मठ, मणि, तरङ्ग, तुरङ्ग, गन्ध, स्कन्ध, मृदङ्ग, सङ्ग, समुद्र, पुङ्ख, सारथि, अतिथि, कुक्षि, बस्ति, पाणि, अञ्जलि—एते शब्दाः पुंलिङ्गे भवन्ति। अन्यथाः कतिपये शब्दा नपुंसकेऽपि।

इति पुँल्लिङ्गाधिकारः।

---

## अथ नपुंसकलिङ्गाधिकारः

भावल्युडन्ता भावनिष्ठान्तास्तद्धितत्वष्यञ्प्रत्ययान्ता भावकर्मनिमित्तकयत्-य-ढक्-यक्-अञ्-अण्-वुञ्-छप्रत्ययान्ताश्च शब्दाः क्लीबे भवन्ति। दिङ्मात्रमुदाहरणं क्रमेण यथा—हसनम्, शायितम्, शुक्लत्वम्,

शौक्ल्यम्, स्तैयम्, सख्यम्, कापेयम्, आधिपत्यम्, औष्ट्रम्, द्वैहायनम्, पितापुत्रकम्, अच्छावाकीयम् ।

अव्ययीभावो नपुंसकं स्यात् । अधिस्त्रि, उपकुम्भम् । एकवद्-भाववन्तो द्वन्द्वाः क्लीबे बोध्याः । पाणिपादम् ।

राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम्, ईश्वरसभम्, इन्द्रसभम् इत्यादि । अमनुष्यशब्दो रूढ्या रक्षःपर्यायो बोध्यः । रक्षःसभम्, पिशाचसभमित्यादि । पर्यायस्यैवेष्यते, तेनेह न राजसभा, चन्द्रगुप्तसभा । सुरासेनाच्छायाशालानिशान्तस्तत्पुरुषः स्त्रियां नपुंसके च भवति । अपथपुण्याहशब्दौ संख्यापूर्वा रात्रिश्च नपुंसके भवन्ति । द्विगुरपि स्त्रियां नपुंसके च भवति । यथा—पञ्चमूली, त्रिभुवनम् ।

इसन्ता उसन्ताश्च शब्दाः क्लीबे प्रयुज्यन्ते । हविः, धनुः । अत्रापवादः—अर्चिः स्त्रियां नपुंसके च भवति । छदिस्तु स्त्रियामेव ।

मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नशब्दास्तत्पर्यायवाचिनश्च नपुंसके भवन्ति । यथा-मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसम् आमिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं विलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अत्रापवादाः—सीरः, अर्थः, ओदनः—एते पुँल्लिङ्गाः । वक्त्रनेत्रारण्यगाण्डीवशब्दाः पुन्नपुंसकयोः । अटवी स्त्रियाम् ।

लोपधोऽकारान्तः क्लीबे स्यात् । कुलम्, कूलम्, स्थलमित्यादि । अपवादाः—तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि भवन्ति । शीलमूलमङ्गलशालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालविडालखिलशूलाः पुन्नपुंसकयोः ।

शतादिः संख्या क्लीबम् । शतम् सहस्रम् इत्यादि । अपवादाः—शतायुतप्रयुताः पुन्नपुंसकयोः । अत्र शतशब्दोऽनन्तवाची । लक्षा कोटिः स्त्रियाम् । कोशप्रमाणाल्लक्षशब्दो नपुंसकेऽपि । मन्प्रत्ययान्ता द्व्यच्काः शब्दाः क्लीबे स्युर्न तु कर्तरि । यथा चर्म, वर्म । द्व्यच्काः किम्? अणिमा-

अत्रापवादः—ब्रह्मशब्दः पुन्नपुंसकयोः। असन्तो द्व्यच्कः क्लीबे भवति। यशः, मनः, तपः। द्व्यच्कः किम्? चन्द्रमाः। अपवादः—अप्सराः स्त्रियाम्, प्रायेणायं बहुवचनान्तः।

त्रान्तशब्दो नपुंसकं भवति। यथा——पत्रं छत्रमित्यादि। अपवादाः-यात्रामात्राभस्त्रादंष्ट्रावरत्राशब्दाः स्त्रियामेव। भृत्रामित्रच्छात्रपुत्र-मन्त्रवृत्रमेढ्रोष्ट्राः पुंस्येव। पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि नपुंसके च भवन्ति।

बलकुसुमशुल्वपत्तनरणशब्दास्तत्पर्यायवाचकाश्च क्लीबे भवन्ति। बलं वीर्यम्। कुसुमं पुष्पम्। शुल्वं ताम्रम्। पत्तनं नगरम्। आहवरणं युद्धम्। अत्रापवादाः——पद्मकमलोत्पलानि पुन्नपुंसकयोः। आहवसंग्रामौ पुंसि। आजिः स्त्रियामेव।

फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्, आम्रम्। वियत्, जगत्, शकृत्, पृषत्, उदश्वित्, नवनीत, अवतान, अनत, अमृत, निमित्त, वित्त, चित्त, पित्त, व्रत, रजत, वृत्त, पलित, श्राद्ध, कुलिश, दैव, पीठ, कुण्ड, अङ्ग, अङ्क, दधि, सक्थि, अक्षि, आस्य, आस्पद, कण्व, बीज, धान्य, आज्य, शस्य, रूप्य, पण्य, वण्य, धृष्य, हव्य, कव्य, काव्य, सत्य, अपत्य, मूल्य, शिक्य, कुड्य, मद्य, हर्म्य, तूर्य, सैन्य, द्वन्द्व, बर्ह, दुःख, बडिश, पिच्छ, विम्ब, कुटुम्ब, कवच, वर, शर, वृन्दारक, अक्ष—एते शब्दा नपुंसके भवन्ति। अक्षशब्दोऽत्रेन्द्रियवाची गृह्यते।

घृत, भूत, मुस्त, क्ष्वेलित, ऐरावत, पुस्तक, बुस्त, लोहित, शृङ्ग, अर्घ, निदाघ, उद्यम, शल्य, दृढ, व्रज, कुञ्ज, कुथ, कूर्च, प्रस्थ, दर्प, अर्भ, अर्धर्च, दर्भ, पुच्छ, कबन्ध, औषध, आयुध, दण्ड, मण्ड, खण्ड, शव, सैन्धव, पार्श्व, आकाश, कुश, काश, अङ्कुश, कुलिश, गृह, मेह, देह, पट्ट, पटह, अष्टापद, अम्बुद, ककुद-एते शब्दाः पुन्नपुंसकयोर्भवन्ति।

इति नपुंसकलिङ्गाधिकारः।

श्रीहरिः

# विभक्त्यर्थनिरूपणम्

[ इतः प्राक्तने संस्करणे सूत्राणां वर्णानुक्रमो मुद्रित आसीद् वार्तिकसूची च। किन्त्विह संस्करणे तयोः स्थानेऽनुवादादौ छात्राणां भृशमुपकाराय विभक्त्यर्थनिरूपणमुपस्थाप्यते। ग्रन्थादौ विषयसूची तु प्राक्तनसंस्करणवदेव प्रकाशिता विद्यते। तत्रेदं परिवर्तनमक्षिलक्ष्यीकृत्यापेक्षितं संशोधनं विधाय पठनीयमिति निवेद्यते। ]

लघुसिद्धान्तकौमुद्यां कारकप्रकरणं संक्षिप्ततरं समुपलभ्यते। अतस्तत्र यन्नोक्तं यच्चावश्यकं संस्कृतलेखनप्रकारबोधनाय, तदिह संगृह्य समुपवर्ण्यते। पूरकमिदं प्रकरणं पूर्वोक्तविभक्त्यर्थप्रकरणस्य।

तत्र **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे**त्युक्तम्। प्रातिपदिकार्थस्तावच्छक्यार्थरूपः, तस्मिन् प्रथमा। न च सिंहो माणवक इत्यादौ प्रथमा न स्यात्तत्र लक्ष्यार्थस्यैव बोधविषयत्वादिति वाच्यम्; शक्यार्थमादाय प्रथमाया विभक्तेरुत्पत्तौ सत्यां पश्चात्पदान्तरसमभिहारे लक्ष्यार्थबोधेऽपि क्षत्यभावात्। लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये च प्रथमा। तयोरर्थयोः प्रातिपदिकार्थेऽगतार्थत्वात्। वचनमात्रे च प्रथमा। वचनं

संख्या, वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारात्। **सम्बोधने च प्रथम**ेत्युक्तम्। प्रातिपदिकार्थसूत्रे मात्रग्रहणात् तत्प्रत्याख्यानपक्षेऽपि प्रातिपदिकार्थ एव प्रथमेति नियमाद् वा सम्बोधनाधिक्येऽप्राप्तौ सम्बोधने चेति सूत्रस्यारम्भः।

अत्र—

**सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।**
**प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते॥**
**सम्बोधनं न वाक्यार्थ इति वृद्धेभ्य आगमः।**

—इति हर्युक्तेः क्रियासु विनियोगफलकोऽभिमुखीभावः सम्बोधनम्—

इति बोध्यम्।

इह सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणम्। तथा च 'व्रजानि देवदत्त' इत्यादौ 'एकतिङ् वाक्यम्' इति वाक्यत्वे सिद्धे '**आमन्त्रितस्य च**' इति निघातो भवति। क्रियाम्प्रत्यविशेषणत्वे तु भिन्नवाक्यत्वान्नैतत् सिद्ध्येत्, '**समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः**' इति वार्तिकात्। तथा चोक्तम्—

**सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्।**
**व्रजानि देवदत्तेति निघातोऽत्र तथा सति॥ इति॥**

इति एवं च 'राम मां पाहि' इति वाक्यस्य रामसम्बन्धिसम्बोधनविषयो मत्कर्मकं रक्षणमर्थः। व्रजानि देवदत्तेत्यत्र तु देवदत्तसम्बन्धिसम्बोधनविषयो मत्कर्तृकं गमनमर्थः।

इति प्रथमा

—:०:—

**'कर्तुरीप्सिततमं कर्म'** इत्युक्तम्। कर्त्रा आप्तुमिष्यमाणतमं कारकं कर्मसंज्ञं स्यादित्यर्थः। 'माषेष्वश्वं बध्नाति' इति वाक्ये माष' शब्दे कर्मत्ववारणाय कर्तुरिति पदं प्रयुक्तम्। माषेषु प्रसक्तमश्वमन्यत्र बध्नातीति वाक्यार्थः। अत्र कर्मण ईप्सिता माषा न तु कर्तुः। 'पयसा ओदनं भुङ्क्ते' इत्यादौ करणादिरूपे पयआदिशब्दे कर्मत्वं वारयितुं तमब्ग्रहणं कृतम्। भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वेऽपि ओदन एवात्र ईप्सिततमः। पयस्तु संस्कारकत्वात् करणम्। न ह्यसौ केवलपयसः **पानेन** संतुष्यति, किन्तु तत्संस्कृतेनौदनेन। यदा तु पय एवेप्सिततममस्य भवति, तदा कर्मत्वं भवत्येव—पयः पिबतीति। अत्र तमपो ग्रहणं यत्रेति बहुव्रीहिणा समुदायाक्षेपः। 'अग्नेर्माणवकं वारयति' इत्यादौ माणवकस्येप्सिततमत्वविवक्षया कर्मसंज्ञा। ईप्सितमात्रविवक्षया अग्नेरपादानसंज्ञा।' इति व्यवस्थासिद्ध्यर्थं तमपोऽत्यावश्यकत्वात्। **'अधिशीङ्स्थासां कर्म'** इति सूत्रात् कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्।

**अनुक्ते कर्मणि द्वितीये**त्युक्तम्। उक्ते तु प्रथमैव प्रातिपदिकार्थमात्रत्वात्। **अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः।** तिङा अभिधानं यथा—हरिः सेव्यते। कृता यथा—लक्ष्म्या सेवितो हरिः। तद्धितेनाभिधानं यथा—शतेन क्रीतः शत्यः अश्वः (अत्र शताच्च ठन्यतावशते—इति यत्) समासेनाभिधानं यथा—प्राप्त आनन्दो यं स प्राप्तानन्दः। **क्वचिन्निपातेनाभिधानं यथा**- विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्। साम्प्रतमित्यस्य हि युज्यत इत्यर्थः। एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितम्। **तथा यक्तं**

चानीप्सितम् ( १ । ४ । ५० ) ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। तद् यथा—ग्रामं गच्छंस्तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते । अकथितं चेत्यादि तु मूल एव द्रष्टव्यम् । तत्रेदं बोध्यम्——अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यादित्युच्यते । अकारके तु न कर्मसंज्ञा । अत एव माणवकस्य पितरं पन्थानं पृच्छति——इत्यादौ 'माणवक'शब्दस्य नैव कर्मसंज्ञा । तत्र क्रियान्वयित्वलक्षणस्य कारकत्वस्याभावात् ।

**अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ( वा० )।** कुरून् स्वपिति, मासमास्ते, गोदोहमास्ते, क्रोशमास्ते इति क्रमेण देशादीनामुदाहरणानि ।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ( १ । ४ । ५२ ) ॥** गत्याद्यर्थानां शब्दकर्मकाणामकर्मकाणां चाणौ यः कर्ता स णौ कर्मसंज्ञः स्यात्। गत्यर्थस्य-- शत्रूनगमयत् स्वर्गम् । शत्रवः स्वर्गमगच्छन् । तान् श्रीहरिः स्वर्गमगमयत् । अत्र गमेरण्यन्तावस्थायां शत्रवः कर्तारस्ते ण्यन्तावस्थायां कर्म अभवन् । एवमग्रेऽप्यूह्यम् । बुद्ध्यर्थस्य—वेदार्थं स्वानवेदयत् । ( स्वे वेदानविदुस्तान् श्रीहरिर्वेदार्थमवेदयत् ) । प्रत्यवसानमशनं तदर्थस्य यथा—आशयत् अमृतं देवान्—देवा अमृतम् आश्नन्, तान् हरिः आशयदिति भावः । शब्दकर्मकस्य यथा—वेदमध्यापयद् विधिम् । ( विधिः वेदमध्यैत तं हरिर्वेदमध्यापयत् इत्यर्थः ) । अकर्मकस्य यथा--आसयत् सलिले पृथ्वीम् । ( सलिले पृथ्वी आस्त, तां हरिः आसयत् ) । गतीत्यादि किम् ? पाचयत्योदनं देवदत्तेन । गत्यादिनियमाभावेऽत्रापि देवदत्तमित्यापद्येत ।

अणौ यः कर्ता स एव णौ कर्म स्यादिति निर्द्धारणेन 'गमयति देवदत्तो यज्ञदत्तम्। तमपरः प्रयुङ्क्ते। गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः' इत्यत्र देवदत्तशब्दस्य न कर्मत्वम्। **नीवह्योर्न ( वा० )।** नयतेर्वहतेश्चाणौ यः कर्ता तस्य णौ कर्मत्वं न स्यात्। यथा--नाययति वाहयति वा भारं भृत्येन। यद्यप्यनयोः प्रापणमर्थो न गतिः, तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टा इत्येतावन्मात्रेण प्राप्तिं मत्वा प्रतिषेध उक्तः। **नियन्तृकर्तृकस्य वहेरनिषेधः ( वा० )।** वाहयति रथं वाहान् सूतः। नियन्तात्र पशुप्रेरको न तु सारथिरेवेति। तेन वाहयति बलीवर्दान् यवानिति सिद्ध्यति। अस्मादेव भाष्योदाहरणात् 'रूढिर्योगमपहरति' इति न्यायोऽत्र न स्वीक्रियते। **आदिखाद्योर्न ( वा० )।** आदयति खादयति वान्नं वटुना। अत्र प्रत्यवसानार्थात्कर्मत्वे प्राप्ते वार्तिककृता तस्य निषेधः कृतः। **भक्षेरहिंसार्थस्य न ( वा० )।** भक्षयत्यन्नं वटुना। अहिंसार्थस्य किम्? भक्षयति बलीवर्दान् सस्यम्। अत्र क्षेत्रस्थानां यवादिसस्यानां भक्ष्यमाणानां हिंसा ज्ञेया, तस्यामवस्थायां तेषां चेतनत्वात्। **जल्पतिप्रभृतीनामुपसंख्यानम् ( वा० )।** जल्पयति भाषयति धर्मं पुत्रं देवदत्तः। न च जल्पतिभाषत्योः शब्द-क्रियत्वेन 'गतिबुद्धि' इति सूत्रेणैव सिद्धे व्यर्थमेवेदमुपसंख्यानमिति वाच्यम्, शब्दकर्मणामित्यस्य शब्दः कर्मकारकं येषामित्यर्थात्। अन्यथा 'वेदमध्यापयद्विधिम्' इत्यादेरसिद्धिप्रसङ्गात्। **दृशेश्च ( वा० )।** दर्शयति हरिं भक्तान्। 'गति-बुद्धि' इति सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते। तेन 'स्मरति जिघ्रति' इत्यादीनां न—स्मारयति घ्रापयति वा देवदत्तेन। आध्यानार्थकस्यैव स्मरतेः 'घटादयो मितः' इति मित्त्वं न चिन्तार्थकस्यैति ध्यातव्यम्। **शब्दायतेर्न (वा० )।**

शब्दाययति देवदत्तेन। धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात् प्राप्तिः। येषां देशकालादिभिन्नं कर्म न संभवति, तेऽत्राकर्मकाः। न त्वविवक्षितकर्माणोऽपि। तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं भवत्येव। देवदत्तेन पाचयतीत्यादौ तु न।

**हृक्रोरन्यतरस्याम्** ( १।४।५३ ) हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात्। हारयति कारयति वा भृत्यं भृत्येन वा कटम्। **अभिवादिदृशोरात्मनेपदे वेति वाच्यम्** ( वा० ) अभिवादयते दर्शयते देवं भक्तं भक्तेन वा। **अधिशीङ्स्थासां कर्म** ( १। ४। ४६ ) अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः। **अभिनिविशश्च** ( १।४।४७ ) 'अभिनि' इत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्। क्वचिन्न—पापेऽभिनिवेशः। **उपान्वध्याङ्वसः** ( १।४।४८ )। उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः। **अभुक्त्यर्थस्य न** ( वा० )। वने उपवसति। **अथोपपदविभक्तिः**—

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥**

अयं भावः—उभसर्वयोस्तसौ उभसर्वतसौ तदन्तयोर्योगे द्वितीयेत्यर्थः। धिक्छब्दयोगेऽपि द्वितीया कार्या। 'उपर्यध्यधसः सामीप्ये' इति सूत्रेण कृतद्वित्वेषु उपर्यादिषु त्रिषु सत्सु ( तेषां योगे सति वा ) द्वितीया कार्या। ततोऽन्यत्रापि द्वितीया दृश्यते। क्रमेणोदाहरणानि यथा—उभयतः कृष्णं गोपाः। सर्वतः कृष्णं गोप्यः। धिक् कृष्णाभक्तम्। उपर्युपरि लोकं हरिः।

अध्यधि लोकम्। अधोऽधो लोकम्। ततोऽन्यत्रापि दृश्यत इति यदुक्तं तदेव प्रपञ्चयति वार्तिककारः—**अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि (वा०)**। अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। समयानिकषाशब्दौ सामीप्यवचनावव्यये। विलङ्घ्य लङ्कां निकषा हनिष्यति—इति माघः। हेति खेदे। हा कृष्णाभक्तम्। तस्य शोच्यत इत्यर्थः। बुभुक्षितं न प्रतिभाति किञ्चित्।

**अन्तरान्तरेण युक्ते (२।३।४)**। आभ्यां योगे द्वितीया स्यात्। अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्। कर्मप्रवचनीयाधिकारे **अनुर्लक्षणे (१।४।४८)**। लक्षणे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः स्यात्। गत्युपसर्गसंज्ञापवादः। **कर्मप्रवचनीययुक्ते द्वितीया (२।३।८)**। एतेन योगे द्वितीया स्यात्। जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। परापि हेताविति तृतीयानेन बाध्यते। लक्षणेत्थंभूतेत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात्। **तृतीयार्थे (१।४।८५)**। अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात्। नदीमन्ववसिता सेना। नद्या सह संबद्धेत्यर्थः। षिञ् बन्धने क्तः। **हीने (१।४।८६)**। हीने द्योत्येऽनुः प्राग्वत्। अनु हरिं सुराः। हरेर्हीना इत्यर्थः।

**उपोऽधिके च (१।४।८७)** अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात्। अधिके सप्तमी वक्ष्यते। हीने—उप हरिं सुराः। **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१।४।९०)**। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे—वृक्षं प्रति पर्यनु वा विद्योतते विद्युत्। इत्थंभूताख्याने—भक्तो विष्णुं प्रति पर्यनु वा। भागे—लक्ष्मीर्हरिं प्रति पर्यनु वा। हरेर्भाग इत्यर्थः। वीप्सायाम्—

वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति। अत्रोपसर्गत्वाभावान्न षत्वम्। एषु किम्? परिषिञ्चति। **अभिरभागे** (१।४।९१)। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात्। हरिमभि वर्तते। भक्तो हरिमभि। देवं देवमभिसिञ्चति। अभागे किम्? यदत्र ममाभिष्यात्तद्दीयताम्। **अतिरतिक्रमणे च** (१।४।९६)–अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात्। अति देवान् कृष्णः। **कालाध्वनोरत्यन्तसंयोगे** (२।३।५)। इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।

इति द्वितीया

---

**स्वतन्त्रः कर्ता** (१।४।५४)—इत्युक्तम्। तत्र प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यं बोध्यम्। आह च—**धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते**। इति। ननु स्थाल्यादीनां तण्डुलादिपाके न स्वातन्त्र्यमिति स्थाली पचतीत्यादिप्रयोगो न संगच्छेतेति चेन्न, क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यादित्यर्थस्वीकारेण तादृशप्रयोगाणामपि साधुत्वोपपत्तेः। स्वातन्त्र्यमारोपितमनारोपितं च कर्तृसंज्ञानिमित्तं भवति। आरोपितं स्थाल्यादौ। अनारोपितं पुरुषे। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यादिति लघुसिद्धान्तकौमुद्यां विभक्त्यर्थप्रकरणे प्रागुक्तम्। तत्र यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम्। उक्तं च—

**क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् ।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥ इति ॥**

अनभिहिते कर्तरि करणे च तृतीया स्यादिति तत्रैव प्रकरणे प्रतिपादितम् । महालक्ष्म्या महाशूलेन मारितो महिषः–इत्याद्युदाहरणम् । महालक्ष्म्येत्यनभिहितं कर्तृपदम् । महाशूलेनेति करणपदम्, मारणक्रियासिद्धौ प्रकृष्टोपकारकत्वात् । **प्रकृत्यादिभ्य उपसंख्यानम्** (वा०)। अत्र तृतीयाया इति शेषः । प्रकृत्या चारुः । प्रकृतिर्यावदाश्रयभावी धर्मविशेषः । तथा च यावदाश्रयभाविधर्मविशेषसम्बन्धिचारुत्ववानिति बोधः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि । आकृतिगणोऽयम् । तेन नाम्ना सुतीक्ष्णः, चरितेन दान्तः इत्यादि सिद्धम् । **दिवः कर्म च** (१।४।४३) दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान् वा दीव्यति । **अपवर्गे तृतीया** (२।३।६) । अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः । अपवर्गे किम् ? मासमधीतो नायातः । अनेन फलप्राप्त्यभावः स्फुटमुच्यते । **सहयुक्तेऽप्रधाने** (२।३।१९) । सहार्थेन युक्ते अप्रधाने तृतीया स्यात् । पुत्रेण सहागतः पिता । पुत्रकर्तृकागमनसमानकालिकागमनवान् पिता– इति बोधः ।

एवं 'साकं सार्धं समम्' इत्यादीनां योगेऽपि । विनापि तद्योगं तृतीया, वृद्धो यूनेत्यादिनिर्देशात् । **येनाङ्गविकारः** (२।३।२०) येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते, ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः । 'अङ्गविकारः' इति किम् ?

अक्षि काणमस्य । **इत्थंभूतलक्षणे ( २ । ३ । २१ )**। कंचित् प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटा ज्ञाप्य-तापसत्वविशिष्ट इत्यर्थः। **संज्ञोऽन्यतरस्यां कर्मणि (२। ३। २२)**। सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा संजानीते। ( **समप्रतिभ्यामनाध्याने** - इति तङ् )। आध्याने तु पित्रा पितरं वा संजानाति। **हेतौ ( २। ३। २३ )** हेत्वर्थे तृतीया स्यात्। द्रव्यादि-साधारणं निर्व्यापारसाधारणं च हेतुत्वम्। द्रव्यादीत्यत्र आदिपदेन गुणक्रिये ग्राह्ये। द्रव्यगुणक्रियानिरूपितं निर्व्यापारसव्यापारवृत्ति च यत्तद्धेतुत्वमित्यर्थः। करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च। द्रव्यविषये हेतुत्वं यथा—दण्डेन घटः। दण्डहेतुको घट इत्यर्थः। साक्षात्क्रियान्वयित्वाभावात् करणत्वमिह नास्ति। क्रियाविषये हेतुत्वं यथा-पुण्येन दृष्टो हरिः। गुणविषये तु पुण्येन गौरवर्णः–इत्याद्युदाहार्यम्। फलमपीह हेतुः। अध्ययनेन वसति। गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। अलं महीपाल तव श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्। शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्येत्यर्थ। **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ( वा० )**। दास्या संयच्छते कामुकः। धर्म्ये तु भार्यायै संयच्छति।

इति तृतीया

---

**दानस्य कर्मणा यमभिप्रैति स सम्प्रदासंज्ञः स्यादित्युक्तम्।** महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम्। सम्यक् प्रदीयतेऽस्मै तत्सम्प्रदानम्

इति । तेन अजां नयति ग्रामम्, हस्तं निदधाति वृक्षे इत्यादौ नातिप्रसङ्गः ।। एतद्विषये २२३ पृष्ठे चतुर्थसंख्योपलक्षितम् 'इदमुपलक्षणम्' इत्यादि टिप्पणं द्रष्टव्यम् । **चतुर्थी सम्प्रदाने** इत्युक्तम् । ब्राह्मणाय गां ददाति । सम्प्रदानमप्यनभिहितमेवेष्टम् । तेन दानीयो विप्र इत्यत्र नातिप्रसङ्गः । **क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् (वा०)** । पत्ये शेते । **कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा ( वा० । )** पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । छान्दसमेतत् । अत एवेदं सुब्व्यत्ययेन सिद्धत्वादिति प्रत्याख्यायते । **रुच्यर्थानां प्रीयमाणः ( १ । ४ । ३३ )** । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात् । हरये रोचते भक्तिः । यद्यपि रुचिर्दीप्तावपि पठ्यते तथापीह दीप्तिर्न विवक्षिता । प्रीत्याश्रयान्यकर्तृको ऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । हरिं प्रीणयतीत्यर्थः । अत एवादित्यो रोचते दिक्षु—इत्यत्र दीप्त्यर्थे सम्प्रदानसंज्ञा न भवति । सूत्रे प्रीयमाण इति किम् ? देवदत्ताय रोचते मोदकः पथि । अत्र देवदत्तस्यैव प्रीयमाणत्वं न तु पथः, इति न तस्य सम्प्रदानत्वम् । प्रीयमाणपदाभावे तु पथोऽपि सम्प्रदानता स्यात् । **श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (१ । ४ । ३४ )** । एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् । गोपी स्मरात् कृष्णाय श्लाघते, ह्नुते, तिष्ठते, शपते वा । श्लाघतेर्बोधविषया स्तुतिरर्थः । गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिका ( अर्थात् कृष्णवृत्तिबोधविषया ) स्तुतिरिति बोधः । ह्नुते इति—सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । तिष्ठते इति—स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । शपत इति—उपालम्भेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः । ज्ञीप्समान इति किम ? देवदत्ताय श्लाघते पथि ।

**धारेरुत्तमर्णः ( १ । ४ । ३५ )** । धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । इह भक्त उत्तमर्णो हरिरधमर्णः । उत्तमर्ण इति किम् ? देवदत्ताय शतं धारयति ग्रामे । **स्पृहेरीप्सितः ( १ । ४ । ३६ )** । स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । ईप्सित इति किम् ? पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात् कर्मसंज्ञा । पुष्पाणि स्पृहयति । **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ( १ । ४ । ३७ )** । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति । यं प्रति कोप इति किम् ? भार्यामीर्ष्यति मैनामन्योऽद्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्याऽक्षमा । असूया गुणेषु दोषाविष्करणम् । द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते, अतो विशेषणं सामान्येन यं प्रति कोप इति । अत एव भाष्येऽपि 'न हि अकुपितं क्रुध्यति' इत्यादि सामान्येनोक्तम् । **क्रुधद्रुहोरुपसृष्टयोः कर्म ( १ । ४ । ३८ )** । सोपसर्गयोरनयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति । अभिद्रुह्यति । **राधीक्ष्योर्यस्य विप्रश्नः ( १ । ४ । ३९ । )** । एतयोः कारकं सम्प्रदानं स्यात् । यदीयो विविधः प्रश्नः क्रियते । कृष्णाय राध्यति ईक्षते वा । अनयोस्त्विह शुभाशुभपर्यालोचनमर्थः, तच्च प्रश्नपूर्वकम् । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ( १ । ४ । ४० )** । आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपव्यापारस्य कर्ता सम्प्रदानं स्यात् । विप्राय गां प्रति शृणोति । आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीते । विप्रसम्प्रदानको 'गां तुभ्यं दास्यामि' इति प्रतिज्ञारूपो गोकर्मकदानप्रवर्तनाभ्युपगम इति बोधः । **अनुप्रतिगृणश्च**

( १।४।४१ ) आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात्। होत्रेऽनुगृणाति, प्रतिगृणाति। होता प्रथमं शंसति। तमध्वर्युः प्रोत्साहयतीत्यर्थः। **परिक्रमणे सम्प्रदानमन्यतरस्याम्** (१।४।४४)। नियतकालभृत्या स्वीकरणं परिक्रयणं तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात्। शतेन शताय वा परिक्रीतः। **तादर्थ्ये चतुर्थी वाच्या** ( वा० )। मुक्तये हरिं भजति। **क्लृपि सम्पद्यमाने च (वा०)**। भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायते इत्यादि। **उत्पातेन ज्ञापिते च** ( **वा०** )। वाताय कपिला विद्युत्। वातस्य ज्ञापिकेत्यर्थः। ज्ञाप्यज्ञापकभावश्चतुर्थ्यर्थः। वातरूपज्ञाप्यज्ञापिका कपिला विद्युदिति बोधः। **हितयोगे च ( वा० )**। ब्राह्मणाय हितम्। **क्रियार्थोपपदस्य च कर्मणि स्थानिनः ( २।३।१४ )**। क्रियार्था क्रियोपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात्। फलेभ्यो याति। फलान्याहर्तुं गच्छतीत्यर्थः। **नमस्कुर्मो नृसिंहाय**। नृसिंहमनुकूलयितुमित्यर्थः। एवं स्वयम्भुवे नमस्कृत्येत्यादावपि। क्रियार्थोपपदस्येति किम् ? प्रविश पिण्डीम्। गृहप्रवेशनं यद्यपि भक्षणार्थाय, तथापि भक्षिं प्रति कृत्रिमोपपदत्वं नास्ति। **तुमर्थाच्च भाववचनात् ( २।३।१५ )**। भाववचनाच्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात्। यागाय याति। यष्टुं यातीत्यर्थः। यागफलकं यानमिति बोधः। **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ( २।३।१६ )** एभिर्योगे चतुर्थी स्यात्। हरये नमः। अपकृष्टत्वज्ञानबोधनानुकूलो व्यापारो नमःपदार्थः। उद्देश्यत्वं चतुर्थ्यर्थः। ( प० ) **उपपदविभक्तेः कारकविभक्तिर्बलीयसी**। नमस्करोति देवान्। प्रजाभ्यः स्वस्ति। पितृभ्यः स्वधा। अलमिति पर्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः शक्तः समर्थः इत्यादि। प्रभ्वादियोगे षष्ठी-

विभक्तिरपि साधुः, तस्मै प्रभवति, स एषां ग्रामणीरिति निर्देशात्। तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम्। वषडिन्द्राय। चकारः पुनर्विधानार्थः। तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि' इति षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्। **मन्यकर्मण्यनादरे विभाषाऽप्राणिषु** (२।३।१७)। प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात् तिरस्कारे। न त्वां तृणं मन्ये तृणाय वा। श्यनानिर्देशात्तानादिकयोगे न। न त्वां तृणं मन्ये। अप्राणिष्वित्यपनीय—**नौकाकान्नशुकशृगालवर्ज्येष्विति वाच्यम् (वा०)**। तेन न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न। न त्वां शुने श्वानं वा मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव। **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि (२।३।१२)**। अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायां किम्? मनसा हरिं गच्छति। अनध्वनीति किम्? पन्थानं गच्छति। गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः। यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति।

इति चतुर्थी

----

**ध्रुवमपायेऽपादानम्** (१।४।२४)। **अपादाने पञ्चमी** (२।३।२८) इत्याद्युक्तम्। ग्रामादायाति। धावतोऽश्वात्पतति—इत्युदाहृतं च तत्रैव। अपायेऽवधिभूतं कारकमेवापादानं भवेन्नाकारकम्। अत एव वृक्षस्य पर्णं पतति -इत्यत्र न पञ्चमी। **जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्** (**वा०**)। पापाज्जुगुप्सते, विरमति।

धर्मात् प्रमाद्यति । **भीत्रार्थानां भयहेतुः ( १ । ४ । २५ )** भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चौराद् बिभेति । चौरात्त्रायते । चौरापादानकमनिष्टज्ञानम्, चौरापादानकमनिष्टपरित्राणम् इति च क्रमेण बोधः । अनिष्टज्ञानं भयम् । अनिष्टपरिहारस्त्राणम् । भयहेतुः किम् ? वने बिभेति त्रायते वा । **पराजेरसोढः ( १ । ४ । २६ )** । पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात् पराजयते । ग्लायतीत्यर्थः । असोढः किम् ? शत्रून् पराजयतेऽभिभवतीत्यर्थः । **वारणार्थानामीप्सितः ( १ । ४ । २७ )** प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । ईप्सितः किम् ? यवेभ्यो गां वारयति क्षेत्रे । **अन्तर्धौ येनादर्शनमिच्छति ( १ । ४ । २८ )** । व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् ? चौरान्न दिदृक्षते । 'इच्छति'ग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् । **आख्यातोपयोगे ( १ । ४ । २९ )** । नियमपूर्वकविद्यास्वीकारे वक्ता प्रागुक्तसंज्ञः स्यात् । उपाध्यायादधीते । उपयोगे किम् ? नटस्य गाथां शृणोति । **जनिकर्तुः प्रकृतिः ( १ । ४ । ३० )** । जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । **भुवः प्रभवः ( १ । ४ । ३१ )** । हिमवतः प्रभवति गङ्गा । तत्र प्रकाशत इत्यर्थः । अभूतप्रादुर्भावो **जनिः** । अन्यतः सिद्धस्य प्रथममुपलम्भः **प्रभवः** । इत्येवमनयोरर्थभेदः । **ल्यब्लोपे कर्मण्यधिकरणे च ( वा० )** । प्रासादात्प्रेक्षते । आसनात् प्रेक्षते । प्रासादमारुह्य आसने चोपविश्य प्रेक्षत इत्यर्थः । श्वसुराज्जिह्रेति । श्वसुरं वीक्ष्येत्यर्थः । गम्यमानापि क्रिया कारक-

विभक्तीनां निमित्तम्। इत्युक्तम्। कस्मात्त्वं नद्याः। **यतश्चाध्वकाल निर्माणं तत्र पञ्चमी ( वा० )। तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या ( वा० )** वनाद् ग्रामो योजनं योजने वा। कार्तिक्या आग्रहायणी मासे। **अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ( २।३।२९ )** एतैर्योगे पञ्चमी स्यात्। अन्य इत्यर्थग्रहणम्। इतरग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद् वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्छब्दः। तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु न, तस्य परमाम्रेडितमिति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्छब्दत्वेऽपि षष्ठ्यतसर्थेति षष्ठीं बाधितु पृथग् ग्रहणम्। प्राक् प्रत्यग् वा ग्रामात्। आच्—दक्षिणा ग्रामात्। आहि—दक्षिणाहि ग्रामात्। 'प्रभृति' 'आरभ्य' 'बहिः'—इत्येतेषां योगेऽपि पञ्चमी भवति—ततः प्रभृति। तस्मात् आरभ्य। ग्रामाद् बहिः। वर्जनेऽर्थे अपपरी उपसर्गौ कर्मप्रवचनीयौ मर्यादावचने चाङ् उपसर्गः कर्मप्रवचनीय इति बोध्यम्। **पञ्चम्यपाङ्परिभिः ( २।३।१० )**। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः, परि हरेः संसारः। परिरत्र वर्जने। लक्षणादौ तु हरिं परि। आ मुक्तेः संसारः। आ सकलाद् ब्रह्म। **प्रतिः प्रतिनिधिप्रतिदानयोः ( १।४।९२ )**। कर्मप्रवचनीयसंज्ञ इति शेषः। **प्रतिनिधिप्रतिदाने च यस्मात् ( २।३।११ )**। अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात् प्रति। तिलेभ्यः प्रतियच्छति माषान्। **अकर्तर्यृणे पञ्चमी ( २।**

३ । २४ ) । शताद् बद्धः । अकर्तरि किम् ? शतेन बन्धितः । **विभाषा गुणेऽस्त्रियाम्** ( २ । ३ । २५ ) । गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याजाड्येन वा बद्धः । गुणे किम् ? धनेन कुलम् । अस्त्रियां किम् ? बुद्ध्या मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः—**पृथग्विनानानाभिस्तृतीयान्यतरस्याम्** ( २ । ३ । ३२ ) एभिर्योगे तृतीया स्यात् पञ्चमी द्वितीये च । पृथग् रामेण रामात् रामं वा । एवं विना नाना । **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य** ( २ । ३ । ३३ ) । एभ्योऽद्रव्यवचनेभ्य करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद् वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः । **दूरान्तिकार्थेभ्यो द्वितीया च** ( २ । ३ । ३५ ) । एभ्यो द्वितीया स्यात् । पञ्चमीतृतीये च । प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूरात् दूरेण वा । अन्तिकम् अन्तिकात् अन्तिकेन वा । असत्त्ववचनस्येत्यनुवृत्तेर्नेह दूरः पन्थाः ।

इति पञ्चमी

---

'शेषे षष्ठी' इति सूत्रं सोदाहरणं प्रागेव व्याख्यातम् । इदं पुनरिहाधिकं ज्ञातव्यम् । **षष्ठी हेतुप्रयोगे** ( २ । ३ । २६ ) । हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति । **सर्वनाम्नस्तृतीया च** ( २ । ३ । २७ ) । सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति, कस्य हेतोः । **निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्** ( वा० ) । किं निमितं

वसति केन निमित्तेन कस्मै निमित्तायेत्यादि। एवं किं कारणं को हेतुः किं प्रयोजनमित्यादि। प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः। ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्ताय इत्यादि। **षष्ठ्यतसर्थप्रत्ययेन** ( २। ३। ३० )। एतद्योगे षष्ठी स्यात्। दिक्शब्देति पञ्चम्या अपवादः। ग्रामस्य दक्षिणतः पुरः पुरस्तात्। उपरि उपरिष्टात्। **एनपा द्वितीया** ( २। ३। ३१ ) एनबन्तेन योगे द्वितीया स्यात्। एनपेति योगविभागात् षष्ठ्यपि। दक्षिणेन ग्रामं ग्रामस्य वा। एवमुत्तरेण। **दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** ( २। ३। ३४ )। एतैर्योगे षष्ठी स्यात् पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद् वा। **व्यवहृपणोः समर्थयोः** ( २। ३। ५७ )। शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रय-विक्रयव्यवहारे चानयोस्तुल्यार्थता। शतस्य व्यवहरणं पणनं वा। समर्थयोः किम्? शलाकाव्यवहारः। गणनेत्यर्थः। ब्राह्मणंपणनं स्तुतिरित्यर्थः। **दिवस्तदर्थस्य** ( २। ३। ५८ )। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। तदर्थस्येति किम्? ब्राह्मणं दीव्यति स्तौतीत्यर्थः। **विभाषोपसर्गे** ( २। ३। ५९ )। पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति। **कर्तृकर्मणोः कृति** ( २। ३। ६५ )। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः। जगतः कर्ता कृष्णः। **गुणकर्मणि वेष्यते** (वा०)। नेताश्वस्य स्रुघ्नं स्रुघ्नस्य वा। कृति किम्? तद्धिते मा भूत्। कृतपूर्वी कटम्। **उभयप्राप्तौ कर्मणि** (२। ३। ६६)। उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात्। आश्चर्यो गवां दोहोऽगोपेन। **क्तस्य च वर्तमाने** ( २। ३। ६७ )—वर्तमानार्थस्य क्तस्य योगे

षष्ठी स्यात्। न लोकेति निषेधस्यापवादः। राज्ञां मतो बुद्धः पूजितो वा। **अधिकरणवाचिनश्च** ( २। ३। ६८ )। क्तस्य योगे षष्ठी स्यात्। इदमेषामासितं शयितं गतं भुक्तं वा। **न लोकाव्ययनिष्ठाखलर्थतृनाम्** ( २। ३। ६९ )। एषां प्रयोगे षष्ठी न स्यात्। लादेशाः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उः—हरिं दिदृक्षुः। अलंकरिष्णुर्वा। उक्—दैत्यान् घातुको हरिः। **कमेरनिषेधः ( वा० )** लक्ष्म्याः कामुको हरिः। अव्ययम्—जगत् सृष्ट्वा। सुखं कर्तुम्। निष्ठा—विष्णुना हता दैत्याः। दैत्यान् हतवान् विष्णुः। खलर्थः—ईषत्करः प्रपञ्चो हरिणा। तृन्निति प्रत्याहारः शतृशानचाविति तृशब्दादारभ्य तृनो नकारात्। शानन्- सोमं पवमानः। चानश्—आत्मानं मण्डयमानः शतृ- वेदमधीयन्। तृन्- कर्ता लोकान्। **द्विषः शतुर्वा ( वा० )** मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः। **अकेनोर्भविष्यदाधमर्ण्ययोः** ( २। ३। ७० )। भविष्यत्यकस्य भविष्यदाधमर्ण्येनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी। **कृत्यानां कर्तरि वा** ( २।३।७१ )। षष्ठी वा स्यात्। मया मम वा सेव्यो हरिः। कर्तरीति किम्? गेयो माणवकः साम्नाम्। भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म। अत्र योगो विभज्यते। **कृत्यानाम्**—उभयप्राप्ताविति नेति चानुवर्तते। तेन नेतव्या व्रजं गावः कृष्णेन। ततः **कर्तरि वा**—उक्तोऽर्थः। **तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्** ( २। ३। ७२ )। तुल्यार्थैर्योगे तृतीया वा स्यात् पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यामिति किम्? तुला उपमा वा कृष्णस्य नास्ति। **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः** ( २। ३। ७३ )। एत-

दर्थैर्योगे चतुर्थी वा स्यात् पक्षे षष्ठी। आशिषि–आयुष्यं चिरं जीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम्, अर्थः प्रयोजनं हितं पथ्यं वा भूयात्। आशिषि किम् ? देवदत्तस्यायुष्यमस्ति। व्याख्यानात् सर्वत्रार्थग्रहणम्। मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः।

इति षष्ठी

-----

आधारोऽधिकरणं सप्तम्यधिकरणे चेत्यादि प्रागुक्तं व्याख्यातं च। इह पुनरपरं बोध्यम्—**क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्** (वा०) अधीती व्याकरणे। **साध्वसाधुप्रयोगे च** (वा०) साधु कृष्णो मातरि। असाधुर्मातुले। **निमित्तात्कर्मयोगे** (वा०) निमित्तमिह फलम्। योगः संयोगसमवायात्मकः।

**चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥**

हेतौ तृतीया अत्र प्राप्ता। तन्निवारणार्थमिदम्। सीमाण्डकोशः। पुष्कलको गन्धमृगः। योगविशेषे किम् ? वेतनेन धान्यं लुनाति। **यस्य च भावेन भावलक्षणम्** (२।३।३७)। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः। **अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च** (वा०)। सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु तरत्सु सन्तस्तिष्ठन्ति। **षष्ठी चानादरे** (२।३।३८)। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः। **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** (२।३।३९) एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जात इत्यर्थः। **आयुक्तकुशलाभ्यां चासेवायाम्** (२।३।४०)

आभ्यां योगे षष्ठीसप्तम्यौ स्तः तात्पर्येऽर्थे । आयुक्तो व्यापारित । आयुक्त: कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् ? आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः । **यतश्च निर्धारणम् (२ । ३ । ४१)।** जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावञ् छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः । **पञ्चमी विभक्ते ( २ । ३ । ४२ )** विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुरा पाटलिपुत्रकेभ्य आढ्यतराः । **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (२ । ३ । ४३)** आभ्यां योगे सप्तमी स्यात्, अर्चायां न तु प्रते. प्रयोगे । मातरि साधुर्निपुणो वा । अर्चायां किम् ? निपुणो राज्ञो भृ य । इह तत्त्व-कथने तात्पर्यम् । **अप्रत्यादिभिरिति वक्तव्यम् ( वा० )** साधुर्निपुणो वा मातरं प्रति परि अनु वा । **प्रसितोत्सुकाभ्यां तृतीया च**—आभ्यां योगे तृतीया स्यात्, चात् सप्तमी । प्रसृत उत्सुको हरिणा हरौ वा । **नक्षत्रे च लुपि ( २ । ३ । ४५ )** मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे इति वा । लुपि किम् ? पुष्ये शनिः । **सप्तमीपञ्चम्यौ कारकमध्ये ( २ । ३ । ७ )**—अद्य भुक्त्वाहं द्व्यहे द्व्यहाद् वा भोक्ता । इहस्थोऽयं क्रोशे क्रोशाद् वा लक्ष्यं विध्येत् । **अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते** । लोके लोकाद् वाधिको हरिः । **अधिरीश्वरे ( १ । ४ । ९७ )**—स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् । **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ( २ । ३ । ९ )**-अत्र कर्मप्रचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधिभुवि रामः अधिरामे भूः ॥

इति सप्तमी

———

# पदसाधुत्वलेखनप्रकारः

परीक्षासु लघुसिद्धान्तकौमुदीस्थप्रयोगाणां साधनं पृच्छयते । तदर्थं ग्रन्थे तत्र तत्र टिप्पण्यां पदसाधुत्वलेखनप्रकारः समुल्लिखितो विद्यते । इह तेषां पृष्ठसंख्या प्रदीयते । छात्रैस्तेषु पृष्ठेषु ते ते प्रयोगाः कथं साधिताः कथमुपनिबद्धाः ? इति द्रष्टव्यं तथैवान्येषां च प्रयोगाणां साधुत्व-लेखनाय प्रयतितव्यमभ्यसनीयं च ।

एवमन्येष्वपि प्रकरणेषु लिखितस्य पदसाधुत्वलेखनप्रकारस्यानुशीलनं कर्तव्यम् ।



# अथ लघुसिद्धान्तकौमुदीस्थवार्तिकानाम-
# कारादिक्रमेण सूची

इति लघुसिद्धान्तकौमुदीस्थवार्तिकानां सूची ।



# अथ लघुसिद्धान्तकौमुदीस्थधातूना-मकारादिक्रमेण सूची

इति लघुसिद्धान्तकौमुदीस्थधातूनामकारादिक्रमेण सूची ।



+ उपरितनेषु चिह्नाङ्कितेषु धातुषु येऽत्र सकर्मकत्वेन दर्शितास्त एवार्थभेदादकर्मका अपि दृश्यन्ते, तथा येऽत्राकर्मकत्वेनोदाहृतास्त एवार्थविशेषात्सकर्मकतयाप्युपलभ्यन्त इति विशेषतोऽवधेयम् । उपसर्गयोगादपि धातुषु सकर्मकाकर्मकत्वव्यत्ययः क्वचित्क्वचिद् भवतीति न विस्मर्तव्यम् ।

# लघुसिद्धान्तकौमुद्यां गणेष्वपठितानामुत्तरत्र समुदाहृतानां च धातूनां संग्रहः

| धातवः | | अर्थाः | गणाः | पदानि | सकर्मकाकर्मकत्वे |
|---|---|---|---|---|---|
| सेट् | अनिट् | | | | |
| अर्द | | गतौ याचने च | भ्वादिः | परस्मै० | सकर्म० |
| अव | | रक्षण | ,, | ,, | ,, |
| अशूङ् | | व्याप्तौ | स्वादिः | आत्मने० | ,, |
| | ऋ | गतौ | भ्वादिः | परस्मै० | ,, |
| | ऋ | ,, | जुहोत्या० | ,, | ,, |
| एजृ | | दीप्तौ | भ्वादिः | आत्मने० | अकर्म० |
| एजृ | | कम्पने | ,, | परस्मै० | ,, |
| ओणृ | | अपनयने | ,, | ,, | सकर्म |
| कुट्ट | | छेदनभर्त्सनयोः | चुरादिः | परस्मै० | ,, |
| कृत | | संशब्दने | ,, | ,, | ,, |
| | क्षिप | प्रेरणे | तुदादिः | उभयप० | ,, |
| | क्षै | क्षये | भ्वादिः | परस्मै० | अकर्म० |
| खनु | | अवदारणे | ,, | उभयप० | सकर्म० |
| घट + | | चेष्टायाम् | ,, | आत्मने० | अकर्म० |
| चकासृ | | दीप्तौ | अदादिः | परस्मै० | ,, |
| चर | | गतिभक्षणयोः | भ्वादिः | ,, | सकर्म० |
| छद | | अपवारणे | जुहोत्या० | उभयप० | ,, |
| जक्ष | | भक्षहसनयोः | अदादिः | परस्मै० | ,, |
| जप + | | मानसे | भ्वादिः | ,, | ,, |
| जागृ | | निद्राक्षये | अदादिः | ,, | अकर्म० |
| | जि + | जये | भ्वादिः | ,, | ,, |
| ज्ञप | | ज्ञाने ज्ञापने च | चुरादिः | उभयप० | सकर्म० |
| ज्या | | वयोहानौ | क्र्यादिः | परस्मै० | अकर्म० |
| जल्प | | व्यक्तायां वाचि | भ्वादिः | ,, | सकर्म० |

| धातवः | | अर्थाः | गणः | पदानि | सकर्मकाकर्मकत्वे |
|---|---|---|---|---|---|
| सेटः | अनिटः | | | | |
| ज्वर | | रोगे | भ्वादिः | परस्मै० | अकर्म० |
| ञित्वरा+ | | संभ्रमे | ,, | आत्मने० | ,, |
| टुओश्वि | | गतिवृद्धयोः | ,, | परस्मै० | सक०अ० |
| | डुवप् | छेदनबीजसन्तानयोः | ,, | उभयप० | सकर्म० |
| टुवेपृ | | कम्पने | ,, | आत्मने० | अकर्म० |
| | डुलभष् | प्राप्तौ | ,, | ,, | सकर्म० |
| दण्ड | | दण्डनिपातने | चुरादिः | उभयप० | ,, |
| दरिद्रा | | दुर्गतौ | अदादिः | परस्मै० | अकर्म० |
| | दाण् | दाने | भ्वादिः | ,, | सकर्म० |
| | दृशिर् | प्रेक्षणे | तुदादिः | ,, | ,, |
| | दंश | दशने | भ्वादिः | ,, | ,, |
| धर्वी | | हिंसायाम् | ,, | ,, | ,, |
| पठ | | व्यक्तायां वाचि | ,, | ,, | ,, |
| पत्लृ | | पतने | ,, | ,, | ,, |
| | पृङ | गतौ | ,, | ,, | सक०अ० |
| भास | | दीप्तौ | ,, | आत्मने० | सकर्म० |
| भिक्ष | | याचने | ,, | ,, | अकर्म० |
| भ्राज | प्रङ | दीप्तौ | ,, | ,, | सकर्म० |
| भ्रंशु | | अधःपतने | भ्वादिः | ,, | अकर्म० |
| मन्त्रि | | गुप्तभाषणे | चुरादिः | उभयप० | ,, |
| | मन | ज्ञाने | अदादिः | ,, | सकर्म० |
| मन्थ | | विलोडने | क्र्यादि | ,, | ,, |
| मव | | बन्धने | भ्वादिः | ,, | ,, |
| | मा+ | माने | अदादिः | आत्मने० | सकर्म० |
| मृजूष् | | शुद्धौ | ,, | परस्मै० | अकर्म० |
| यती | | प्रयत्ने | भ्वादिः | ,, | ,, |
| (टु)याचृ | | याच्ञायाम् | ,, | आत्मने० | अकर्म० |
| | | | | उभयप० | सकर्म० |
| | युध | संप्रहारे | दिवादिः | आत्मने० | अकर्म० |

| धातवः सेटः | धातवः अनिटः | अर्थाः | गणाः | पदानि | सकर्मकाकर्मकत्वे |
|---|---|---|---|---|---|
| | रञ्ज | रागे | भ्वादिः | उभयप० | सकर्म० |
| | रमु | क्रीडायाम् | ,, | आत्मने० | अकर्म० |
| रिष् | | हिंसायाम् | दिवादिः | परस्मै० | सकर्म० |
| रुष् | | ,, | ,, | ,, | ,, |
| लुटि | | स्तेये | भ्वादिः | ,, | ,, |
| | वच | परिभाषणे | अदादिः | ,, | ,, |
| वद | | व्यक्तायां वाचि | भ्वादिः | परस्मै० | ,, |
| | वस | निवासे | ,, | ,, | अकर्म० |
| विच्छ | | गतौ | तुदादि, | ,, | सकर्म० |
| शप+ | | आक्रोशे | भ्वादि० | उभयप० | , |
| शसु | | हिंसायाम् | ,, | परस्मै० | ,, |
| शासु | | अनुशिष्टौ | अदादिः | ,, | ,, |
| शॄ | | हिंसायाम् | क्र्यादिः | ,, | ,, |
| शंसु | | स्तुतौ | भ्वादिः | ,, | ,, |
| | षह+ | मर्षणे | ,, | आत्मने० | ,, |
| | षिञ् | बन्धने | स्वादिः | उभयप० | ,, |
| | ष्टुञ् | स्तुतौ | अदादिः | ,, | ,, |
| | ष्ठा | गतिनिवृतौ | भ्वादि० | परस्मै० | अकर्म० |
| ष्वद+ | | आस्वादने | ,, | ,, | ,, |
| | (ञि) ष्वप् | शये | अदादिः | ,, | ,, |
| | साध | संसिद्धौ | स्वादिः | परस्मै० | सकर्म० |
| | स्मृ | चिन्तायाम् | भ्वादिः | ,, | ,, |
| | स्रिवु | गतिशोषणयोः | दिवादिः | ,, | ,, |
| हसे+ | | हसने | भ्वादिः | ,, | ,, |
| | हि | गतौ | स्वादिः | ,, | ,, |

इति

+ अत्रापि पूर्ववच्चिह्नाङ्कितेषु धातुषु सकर्मकाकर्मकत्वव्यत्ययोऽपि दृश्यत इति बोध्यम् ।

# अथ लघुसिद्धान्तकौमुदीस्थगणपाठः

## अजन्तपुँल्लिङ्गप्रकरणे—

**सर्वादीनि सर्वनामानि ।** ( १ । १ । २७ ) सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंख्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् । इति **सर्वादिः** ।

## अव्ययीभावसमासे–

**अव्ययीभावे शरत्प्रभृतिभ्यः ।** ( ५ । ४ । १०७ ) शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् कियत् । जराया जरस् च । प्रतिपरसमनुभ्योऽक्ष्णः । पथिन् । इति **शरदादिः** ।

## तत्पुरुषसमासे -

**सप्तमी शौण्डैः ।** ( २ । १ । ४० ) शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण । इति **शौण्डादिः** ।

**ऊर्यादिच्विडाचश्च ।** ( १ । ४ । ६१ ) ऊरी उररी तन्थी ताल आताली वेताली धूली धूसी शकला संसकला ध्वंसकला भ्रंशकला गुलुगुधा सजूस् फलफली विक्ली आक्ली आलोष्टी केवाली केवासी सेवासी पर्याली शेवाली वर्षाली अत्यूमशा वश्मशा मस्मसा मसमसा औषट् वौषट् वषट् स्वाहा स्वधा बन्धा पाम्पी प्रादुस् श्रत् अविस । एते **ऊर्यादयः** ।

## तद्धितप्रकरणे—

**अश्वपत्यादिभ्यश्च** । ( ४ । १ । ८४ ) अश्वपति स्थानपति ज्ञानपति यज्ञपति बन्धुपति शतपति धनपति गणपति राष्ट्रपति कुलपति गृहपति पशुपति धान्यपति धर्मपति धन्वपति सभापति प्राणपति क्षेत्रपति । इत्यश्वपत्यादिः ।

**उत्सादिभ्योऽञ्** । ( ४ । १ । ८६ ) उत्स उदपान विकिर विनद महानद महानस महाप्राण तरुण तलुन वष्कयास धेनु पृथ्वी पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलु कुण । उदस्थान देशे । पृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान ष्णिह ककुभ् सुवर्णदेव ग्रीष्मादयश्छन्दसि । इत्युत्सादिः ।

**शिवादिभ्योण्** । ( ४ । १ । ११२ ) शिव प्रोष्ठ प्रोष्ठक चण्ड जम्भ भूरि दण्ड कुठार ककुभ अनभिम्लान कोहित सुख सन्धि मुनि ककुत्स्थ कहोड कोहड कहूबय कहय रोथ कपिञ्जल ( खञ्जन ) वतण्ड तृण कर्ण क्षीरह्रद जलह्रद परिल पिष्ठ हैहय गोपिका कपालिका जटिलिका । इत्यादि: **शिवादिः** ।

**रेवत्यादिभ्यष्ठक्** । ( ४ । १ । १४६ ) रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह दण्डग्राह कर्णग्राह चामरग्राह । इति **रेवत्यादिः** ।

**भिक्षादिभ्योऽण्** । ( ४ । १ । ३८ ) भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भरत विषय श्रोत्र । इति **भिक्षादिः** ।

**क्रमादिभ्यो वुन्** । ( ४ । २ । ६१ ) क्रम पद शिक्षा मीमांसा सामन् । इति **क्रमादिः** ।

**वरणादिभ्यश्च** ( ४ । २ । २८ ) वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी पर्णी ताम्रपर्णी गोदा आलिङ्ग्यायनी जानपदी जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयिनी गया मथुरा तक्षशिला उरसा गोमती वलभी । इति **वरणादिः** ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः** । ( ८ । २ । ९ ) यव दल्मि ऊर्मि भूमि कृमि क्रुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि ( व्रजि ) ध्वजि निजि सिजि सञ्जि हरित् ककुद् मरुत् गरुत् इक्षु द्रु मधु । आकृतिगणोऽयं **यवादिः** ।

**नद्यादिभ्यो ढक्** । ( ४ । २ । ९७ ) नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफरी खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी ( वडवाया वृषे ) इति **नद्यादिः** ।

**गहादिभ्यश्च** । ( ४ । २ । १३८ ) गह अन्तस्थ सम विषम मध्य मध्यन्दिन चरणे उत्तम अङ्ग बङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख एकग्राम समानग्राम एकवृक्ष एकपलाश अवस्यन्दन कामप्रस्थ सौमित्रि व्याडि । इति **गहादिराकृतिगणोऽयम्** ।

**दिगादिभ्यो यत्** । (४ । ३ । ५४) दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेष यूथ ( उदकात्संज्ञायाम् ) न्यायवंश वेश काल आकाश । इति **दिगादिः** ।

**अनुशतिकादीनां च** । ( ७ । ३ । २० ) अनुशतिक अनुहोड अनुसंवरण ( अनुसंचरण ) अनुसवत्सर अङ्गारवेणु असिहत्य अस्यहत्य आस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत् कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री ( राजपुरुषात्ष्यञि ) सूत्रनड । **इत्यनुशतिकादिराकृतिगणोऽयम्** । तेन अभिगम अभिभूत अधिदेव चतुर्विद्या इत्यादयोऽन्येऽपि गृह्यन्ते ।

**उगवादिभ्यो यत्** । ( ५ । १ । २ ) गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रुच् ( नाभि नभं च ) । ( शुन सम्प्रसारणं वा च दीर्घत्वं तत्सन्नियोगेन चान्तोदात्तत्वम् ) । ( ऊधसोऽनङ् च ) । कूप खद दर खर असुर अध्वन् क्षर वेद बीज दीप्त । इति **गवादिः** ।

**दण्डादिभ्यो यः** । ( ५ । १ । ६६ ) दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग । इति **दण्डादिः** ।

**लोमादिपामादिपिच्छादिभ्यः शनेलचः** (५। २। १००) लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु। इति **लोमादिः**।

पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रू वलि सामन् ऊष्मन् कृमि। (अङ्गात्कल्याणे) शाकी पलाली (दद्रूणां ह्रस्वत्वं च)। (विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च)। इति **पामादिः**।

पिच्छा उरस् धुवक ध्रुवक (जटाघटाकालाः क्षेपे) वर्ण उदक पङ्क प्रज्ञा। इति **पिच्छादिः**।

**व्रीह्यादिभ्यश्च**। (५। २। ११६) व्रीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा बडवा कुमारी नौ वीणा वलाका यवखदनौ (शीर्षान्नञः)। इति **व्रीह्यादिः**।

**अर्शआदिभ्योऽच्**। (५। २। १२७) अर्शस् तुन्द चतुर पलित जटा घटा घाटा अभ्र अघ कर्दम अम्ल लवण (स्वाङ्गाद्धीनात्)। (वर्णात्)। **इत्यर्शआदिराकृतिगणः**।

**आद्यादिभ्य उपसंख्यानम्**। अयमेव सार्वविभक्तिस्तसि। आदि मध्य अन्त पार्श्व पृष्ठ। **इत्याद्यादिराकृतिगणोऽयम्**। स्वरेण स्वरतः।

**प्रज्ञादिभ्यश्च**। (५। ४। ३८) प्रज्ञ वाणिज् उशिज् उष्णिज प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस् (श्रोत्र शरीरे) जुह्वत् (कृष्णमृगे) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु। इति **प्रज्ञादिः**।

## स्त्रीप्रत्ययप्रकरणे—

**अजाद्यतष्टाप्**। (४। १। ४) अज एडक अश्व चटक मूषक बाल वत्स होड पाक मन्द विलात पूर्वापहाण उत्तरापहाण क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा (मध्यमेति पुंयोगेऽपि) (कोकिला जातौ) दंष्ट्रा। **एतेऽजादयः**। आकृतिगणोऽयम्।

**षिद्गौरादिभ्यश्च।** (४।१।४१) गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य पुट तूण द्रूण हरिण कामण पटर उणक आमल आमलक कुवल बिम्ब बदर कर्कर तर्कार शर्कार पुष्कर शिखण्ड सदल शुष्काण्ड सनन्द सुषम सुषव अलिन्द गुडुल षाण्डश आढक आनन्द अश्वत्थ। इति **षिद्गौरादिः**।

**बह्वादिभ्यश्च।** (४।१।४५) बहु पद्धति अङ्कति अञ्चति अंहति शकटि शक्ति शस्त्र शारि वारि राति राधि। इति **बह्वादिराकृतिगणोऽयम्।**

**न क्रोडादिबह्वचः।** (४।१।५६) क्रोड नख खुर गोखा उखा शिखा वाल शफ शुक। **आकृतिगणोऽयम्।** तेन भगगलघोणनालभुजगुदकर। इति **क्रोडादिः।**

**शार्ङ्गरवाद्यञो ङीन्।** (४।१।७३) शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण गौतम कामण्डलेय ब्राह्मणकृतेय आनिचेय आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकसेय काप्य काव्य शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड (भोगवत् गौरमत् एतौ संज्ञायाम्) (नृनरयोर्वृद्धिश्च)। पुत्र। इति **शार्ङ्गरवादिः।**

(इह गणेषु संक्षेपेणैव शब्दाः संगृहीताः, विस्तरतो जिज्ञासुभिः सिद्धान्तकौमुदीस्थगणपाठेष्वन्ये शब्दा अनुसन्धेयाः)।

---

# लघुसिद्धान्तकौमुदीस्थपरिभाषापाठः

**अजन्तपुँल्लिङ्गप्रकरणे-**

पदाङ्गाधिकारे तस्य च तदन्तस्य च। ५२

निर्दिश्यमानस्यादेशा भवन्ति। एकदेशविकृतमनन्यवत्। ५२

**हलन्तपुँल्लिङ्गप्रकरणे-**

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे। ७६

# लघुसिद्धान्तकौमुद्यां प्रश्नाः

## साधारणप्रथमपरीक्षायाम्

### १९५५

१ गव्यम्, शिवेहि, गवाक्षः, उत्थानम्, सन्नच्युतः, शिवोऽर्च्यः, मनोरथः—अमीषु पञ्चानां साधुत्वं विधाय इ, य, स, ठ वर्णेषु त्रयाणां स्थानानि प्रयत्नांश्च निर्दिशन्तु ... २०

२ रामाणाम्, विश्वपः, बहुश्रेयस्यै, तिसृणाम्, दध्नि, विश्वौहः, युष्माकम्, पचन्ती, विसृपः—एषु पञ्चानां सिद्धिः प्रदर्शनीया २०

३ अभूत्, आनर्च, जग्मतुः, अचीकमत, अवधीत्, जहीहि, अजनि, किरति, शिण्ड्ढ, अचूचुरत्—अत्र पञ्चानां साधुत्वं प्रदर्श्य षिध्, गुप्, भ्रस्ज् धातुषु एकस्य लिटि लुङि च रूपाणि प्रदर्शयन्तु ... ... २०

४ घटयति, बुभूषति, वरीवृत्यते, पुत्रीयति, निविशते, अभाजि, कार्यम्, कुम्भकारः, शुष्कः, यज्ञः-एतेषु षट्सु विशेषसूत्राणि लेख्यानि ... ... २०

५ हरिं भजति, हरये नमः, राजपुरुषः, शिवकेशवौ, गार्ग्यः, शुक्रियम्, राष्ट्रियः, पौरोहित्यम्, दन्तुरः, विद्वत्कल्पः, अजा, भवानी—अत्र षट्सु विशेषसूत्राणि लिखन्तु ... २०

### १९५६

१ ऋ, औ, भ, ल, वर्णानां स्थानानि प्रयत्नांश्च विलिख्य, अल् प्रत्याहारं सूत्रनिर्देशपूर्वकं साधयत ... १५

२ प्रार्च्छति, इ इन्द्रः, चिन्मयम्, संस्कर्ता, देवा इह, शम्भू राजते—एषु चतुरः प्रयोगानर्थनिर्देशपुरःसरं संसाध्य, अतो रोरप्लुतादप्लुते इति सूत्रस्यार्थो लेख्यः ... ... १०

३ सर्वेषाम्, सख्यौ, स्वसारः, राज्ञ सुपदः, अमी, अद्भि, धनूंषि—अमीषु पञ्चैव साधनीयाः ... १५

४ भवेत्, गोपायाञ्चकार, शृणु, अद्युतत्, अयुः, एधि, नेनिजानि, लोभिता, स्तरिषीष्ट—एतेषु केवलं चतुरः प्रयोगान् तत्तद्विशेष-सूत्रार्थोल्लेखपूर्वकं साधयत ... ... २०

५ अतिष्ठिपत्, जिघत्सति, समिधिता, धर्ममुच्चरते, दायिता, यजति स्म युधिष्ठिरः स्तुत्यः, जगन्वान्, धूनि, हित्वा—एषु पञ्च प्रयोगाः साध्यन्ताम् ... २०

६ सर्पिषो जानीते, पञ्चगवधनः, कल्याणी पञ्चमा रात्रयः, त्वकस्रजम्, रैवतिकः, अस्मदीयः, श्रेयान्, एनी, वृषली—एतेषां पञ्चानामेव साधु साधनं लिखत ... ... २०

---

## १९५७

सूचना—प्रश्नसप्तके पञ्चैव समाधेयाः।

१ क, य, ऋ वर्णानां स्थानानि प्रयत्नांश्च विलिख्य, अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रस्य अर्थम् उदाहरणञ्च लिखत...२०

२ सुखार्तः, विष्णो इति, उत्थानम्, शिवच्छाया, शिवो वन्द्यः—इमान् संसाध्य, ङमो ह्रस्वादचि ङमुण् नित्यम् इति सूत्रस्य सोदाहरणम् अर्थं प्रदर्शयत ... ... २०

३ रामान्, निर्जरसौ, बहुश्रेयस्याम् स्त्रीः, श्रीपम् मघोनः, युष्मत्, पिपठीः, इयम्, तुदन्ती—अमीषु पञ्च प्रयोगाः ससूत्रं साधनीयाः ... २०

४ अभूवन्, अकटीत्, हरिष्यति, ऐधिष्यत, वर्तिष्यते, जहि, अदित, नेशिथ, असिचत्, कुर्यात्, गृहीता, अजीगणत्—एषु चतुरः प्रयोगान् साधयत ... २०

५ अत्रीभवत्, चिकीर्षति, राजानति, सर्पिषो जानीते, विरमति, तायते, इह भुञ्जीत—विशेषसूत्रनिर्देशसहितं चतुरः प्रयोगान् लिखत ... २०

६ सुशर्मा, सहकृत्वा, क्षामः, सुपान , हरये नमः, उपराजम्,
घनश्यामः, महाराजः, त्रिमूर्धः, गवाक्षः—एतेषु पञ्च प्रयोगान्
तत्तद्विशेषसूत्रार्थोल्लेखपुरस्सरं साधयत ... २०

७ वैनतेयः, पित्र्यम्, तावकीनः, औपगवम्, दन्त्यम्, भूयिष्ठः,
औत्सी, रुद्राणी, दाक्षी—एषु पञ्चैव साध्याः ... २०

—०—

१९५८

१ तुल्यास्यप्रयत्नं सवर्णम्, परः सन्निकर्षः संहिता इति
सूत्रद्वयस्य अर्थौ विलिख्य, आभ्यन्तरप्रयत्नस्य भेदान् लिखत ... १०

२ प्रष्ठौहः अमी ईशाः, सन्सः—इमान् सूत्रनिर्देशपूर्वकं
संसाध्य विप्रतिषेधे परं कार्यम्—इत्यस्य अर्थं प्रदर्शयत ... १५

३ सर्वेषाम्, सख्युः, गाः, मत्यै, दध्ना, अनड्वान्, विश्वाराट्,
अमी अद्भिः, धनूंषि-एषु स्वेच्छया पञ्चानां साधुत्वं विधाय
युष्मत्-शब्दस्य द्वितीयायां रूपाणि लिखत ... १५

४ भवतात्, अगादीत्, अपुः, अचीकमत, अभृत, इयाय,
और्णावीत, नेनिजानि, चिकाय, शीयते, आञ्जीत, स्तभान,
कथयति-एतेषु पञ्च प्रयोगान् साधयत ... १५

५ जिघत्सति वाव्रज्यते, पुत्रीयति छात्रम्, विजयते, प्रवहति,
अभाजि, यजति स्म युधिष्ठिरः—सप्तसु चतुर एव प्रयोगान्
लिखत ... १५

६ शिष्यः, विजावा, भिक्षुः, स्वप्नः, हित्वा, गर्गान् शतं
दण्डयति, ग्रामादायाति, पञ्चगङ्गम्, अतिमालः, आपन्नजीविकः,
चित्रगुः, सुहृत्, महायशस्कः, वाक्त्वचम्—विग्रहप्रदर्शनपूर्वकं
पञ्चैव प्रयोगाः साध्याः ... १५

७ दाक्षिः, कौरव्यः, हास्तिकम सौघ्नः, धार्मिकः, कृतपूर्वी,
ज्यायान् गार्गी दाक्षी, वैदी—एषु पञ्च प्रयोगान् साधयत १५

## १६५९

१ अच् प्रत्याहारं संसाध्य, ऊकालोऽज्झ्रस्वदीर्घप्लुतः—इति सूत्रस्य सोदाहरणम् अर्थं लिखत ... १०

२ धात्त्रंशः, शिवेहि, किम्वुक्तम, तच्छित्रः, नॄँ पाहि, पुना रमते, सैष दाशरथी रामः—एषु केऽपि पञ्च प्रयोगाः सूत्रनिर्देशपूर्वकं साधनीयाः ... १५

३ रामाणाम्, विश्वपः, नृणाम्, तिसृणाम्, वारिणे, विश्वौहः, अष्टौ, पुमान्, ददन्ति—एतेषु पञ्चानां साधुत्व सम्पाद्य, अदस-शब्दस्य त्रिषु लिङ्गेषु द्वितीयाविभक्तौ रूपाणि लिखत ... २०

४ आतीत्, अकटीत्, जहार, ऐधिषत, उवोढ अयुः, अदुग्ध, अदित, अजनि, लोभिता, कुर्यात्, ग्रहीता, अजीगणत्—एषु पञ्चैव प्रयोगान् साधयत ... १५

५ अतिष्ठिपत्, बुभूषति, नरीनृत्यते, इदामति, रथेन सञ्चरते, दायिता, कृष्णं नंस्यति चेत् सुखं यास्यति—सप्तसु पञ्चैव लिखत १५

६ मृज्यः, पारहश्वा, वराकः, भुक्त्वा व्रजति, अग्नये स्वाहा, उपराजम्, पञ्चगवम्, महाराजः, उत्काकुत्, ईशकृष्णौ, प्राध्वो रथः—सविग्रहं ससूत्रञ्च पञ्चैव प्रयोगाः साधनीयाः ... १५

७ नैषध्यः, वेतस्वान्, म्रदिमा, मेधावी, पटपटाकरोति, नदी, मृडानी, गौरमुखा—एषु ससूत्रनिर्देशं पञ्च प्रयोगान् साधयत ... १०



## १९६०

१ आदिरन्त्येन सहेतेति सूत्रं सोदाहरणं व्याख्याय य र श ह वर्णेषु कयोरपि द्वयोः पृथक-पृथग बाह्यप्रयत्नान् विलिखत ... १०

२ मद्ध्वरिः, कृष्णर्द्धिः, शकन्धुः, गवाग्रम्, चक्रिअत्र, वाग्घरिः, चक्रिंस्त्रायस्व, मनोरथः—एषु केऽपि पञ्च प्रयोगाः सूत्रनिर्देश-पूर्वकं साधनीयाः ... २०

३ सर्वेषाम्, सख्युः, क्रोष्टूनाम्, मत्याम्, दध्ना, चतुर्णाम्, युष्मान्, अमी—एषु पञ्च प्रयोगाः साधु संसाध्याः ... २०

४ भविता, अगादीत्, पपौ, दिद्युते, आदत्, अध्यगीष्ट, तृणेढि, गृहाण—एषु पञ्च प्रयोगान् साधु साधयत ... १५

५ अजीगणत्, बुभूषति, वाव्रज्यते, राजानति, दायिता—एषु प्रयोगत्रयं सविग्रहं संसाध्य "वर्तमानसामीप्ये वर्तमानवदिति" सूत्रस्यार्थं सोदाहरणं लिखत ... १५

६ शिष्यः राजयुध्वा, चिकीर्षुः, ईषत्करः, गां दोग्धि पयः, पञ्चगङ्गम्, गोहितम्, प्राप्तजीविकः, द्विमूर्धः, सुराजा—अत्र केषुचित्पञ्चसु प्रयोगेषु विग्रहप्रदर्शनपूर्वकं विशेषकार्याणि प्रदर्शनीयानि ... ... १०

७ वैनतेयः, जनता, त्वदीयः, पौरोहित्यम्, अग्नीभवति, अजा, कुमारी, वामोरूः—एषु पञ्च प्रयोगाः विग्रहनिर्देशसहितं साधनीयाः ... ... १०

---

१९६१

१ अ–ट–ल–ष–वर्णानां द्वयोः स्थानमाभ्यन्तरप्रयत्नं च पृथक्-पृथग् विलिख्य ऋकारबोध्यान् त्रिंशद् भेदान् प्रदर्शयत ... १०

२ धात्रंशः, तवल्कारः, प्रार्च्छति, किम्वुक्तम्, तच्छिवः, प्रत्यङ्ङात्मा, शिवोऽर्च्यः, स शम्भुः—एषु पञ्च प्रयोगान् सूत्रनिर्देशपूर्वकं साधयत ... ... २५

३ रामान् विश्वपः,सखा, बहुश्रेयस्याम्, ज्ञानानि, मघवान् पुमान्, अहोभ्याम्—एषु पञ्च प्रयोगाः साधु संसाध्याः ... २०

४ बभूव, जगाद, शृण्वन्ति, एधेरन्, जक्षतुः, देहि, बभर्ज, कुर्वन्ति—एषु पञ्च प्रयोगान् सम्यक् संसाधयत ... १५

५ भावयति, पिपठिषति, पुत्रीयति, पच्यते फलम्—एषु प्रयोगद्वयं संसाध्य विधिनिमन्त्रणेत्यादि सूत्रे विधि—निमन्त्रणामन्त्रणाधीष्ट-पदानामर्था विलेख्याः ... ... १०

६ कार्दम्, भिक्षाचरः, सरसिजम्, लवित्रम्, अधिगोपम्, कृष्णश्रितः, द्विपाद्, गवाक्षः—एषु पञ्च प्रयोगाः विग्रह-निर्देशपूर्वकं साधनीयाः ... ... १०

७ गार्ग्यः, गार्भिणम्, पञ्चमः, यशस्वी, कुरुचरी, कुमारी, शूर्पणखा, युवतिः—एषु पञ्च प्रयोगान् सविग्रहप्रदर्शनं संसाधयत ... ... १०

---

## १९६२

१ सवर्ण, संहिता, संयोगसञ्ज्ञाविधायकसूत्राणि विलिख्य, इ–घ–ज–प वर्णानां द्वयोः स्थानमाभ्यन्तरप्रयत्नश्च प्रदर्शनीये ... १०

२ गङ्गोदकम्, प्रौढः, मनीषा, अहो ईशाः, उत्थानम्, षट्सन्तः, भो देवाः, शम्भू राजते–एषु स्वेच्छया पञ्च प्रयोगाः साधनीयाः २०

३ रामाः, सर्वे, हरौ, बहुश्रेयस्यै, सर्वस्याः, तिस्रः, ज्ञाने, दध्ना—एषु पञ्चानां सिद्धिः प्रदर्शनीया ... ... २०

अथवा

धुक, अनेन, पञ्च त्वया, धीमान्, अद्भिः, अहोभ्याम्—एषु पञ्चानां सिद्धिः प्रदर्शनीया

४ भवामि, भवेत्, आत, पपौ, अयाञ्चक्रे, शेरते, जहति, उपस्किरति कुर्वन्ति, स्तभान-एषु धात्वर्थनिर्देशपूर्वकं पञ्च प्रयोगा साधु साधनीयाः ... ... २०

५ स्थापयति, पिपठिषति, बोभूयते, पुत्रीयति, विजयते विरमति, दायिता, यजति स्म युधिष्ठिर.–एषु चत्वारः प्रयोगा. साधनीया. १०

अथवा

चेयम्, पारदृश्वा, चिकीर्षुः, विप्राय गां ददाति, पञ्चगङ्गम्, पञ्चगवम्, पीताम्बरो हरिः पितरौ-एषु चतुर्णां सिद्धिः प्रदर्शनीया।

६ वैनतेयः, वैयाकरणः, तावकीनः, अग्नीभवति, गार्गी, गोपी, चन्द्रमुखी, नारी–एषु पञ्च प्रयोगान् सविग्रहप्रदर्शनं संसाधयत २०

---

१९६३

१ स्थान–प्रयत्न–भेदान् प्रदर्श्य गव्यूतिः होतृकारः, वाग्घरिः, मनोरथ.—एषां सिद्धिः प्रदर्शनीया ... १०

२ निर्जरसौ, सख्युः, हे श्रीः, वारिणे, धुक्षु, युष्मान्, धीमान्, एनानि, पिधानम्–एषु स्वेच्छया पञ्च प्रयोगाः साधनीयाः २०

३ टि-भ-घि-घु संज्ञासूत्राणामर्थान् विलिख्य, एतेषामुदाहरणानि साधनीयानि ... ... २०

४ नेदुः, एधाञ्चक्रे, ईजतुः, आत्थ, पिपूर्तः, अशात्, दुधुविव, शीयते, सायात्, स्तरिषीष्ट—एषु पञ्चानां सिद्धिः प्रदर्शनीया २०

५ अतिष्ठिपत्, वरीवृश्च्यते, राजानति, सर्पिषो जानीते, अभावि, शिष्यः, विजावा, चिकीर्षुः, हारणा, हित्वा—एषु धात्वर्थनिर्देशपूर्वकं पञ्च प्रयोगान् साधयत ...२०

अथवा

औपगवः, पौत्रमहः, अहीनः, वेतस्वान्, तावकीनः, देवी, सर्विका, शूर्पणखा, वामोरूः—एषु पञ्चानां सिद्धिः प्रदर्शनीया।

६ समासः कतिविधः—कानि च तेषां नामानि, कानि च तेषां लक्षणोदाहरणानीति व्याख्याय, सखिशब्दस्य सर्वासु विभक्तिषु रूपाणि लेख्यानि। ... १०

१९६४

१ इ–ठ-व–स-वर्णानां द्वयोः स्थानमाभ्यन्तरप्रयत्नं च पृथक् पृथग् विलिख्य नाव्यम्, उपोषति, तच्छिवः, शिवो वन्द्यः, एषां सिद्धिः प्रदर्शनीया। ... १०

२ रामान्, गाम्, तिसृणाम, दध्ना, इमे, त्वया, विद्वद्भ्याम् अद्भिः, पचन्ती, एषु स्वेच्छया पञ्चप्रयोगाः साधनीयाः। ... २०

३ संयोग–नदी-षट्–अभ्यास–संज्ञासूत्राणामर्थान् विलिख्य एतेषामुदाहरणानि साधनीयानि। ... २०

४ जगाद, अद्युतत्, उवाह, जहि, धत्तः, नर्तिष्यति, असावीत्, गिलति, अतत, क्रीणन्ति—एषु पञ्चानां सिद्धिः प्रदर्शनीया।... २०

५ घटयति, जिघत्सति, पुत्रकाम्यति, निविशते, विरमति, लभ्यम्, गोदः, सरसिजम्, चिकीर्षा, शयित्वा, एषु धात्वर्थनिर्देशपूर्वकं पञ्चप्रयोगान् साधयत । ... २०

**अथवा**

विप्राय गां ददाति, द्वियमुनम्, अनश्वः, पाणिपादम्, आदित्यः, ऐन्द्रं हविः, सांवत्सरिकम्, भवन्ती, अतिकेशी, दाक्षी, एषु पञ्चानां सिद्धिः प्रदर्शनीया ।

६ अव्ययलक्षणं विलिख्य अस्मद् शब्दस्य सर्वासु विभक्तिषु रूपाणि लेख्यानि । ... १०

---

**१९६५**

१ आभ्यन्तरबाह्यप्रयत्नयोः कति भेदास्सन्तीति नामग्राहं लेख्या । ...१०

२ मद्ध्वरिः, हरी एतौ, एतन्मुरारिः उत्थानम् पुँस्कोकिलः, लक्ष्मीच्छाया, भो देवाः, हरी रम्यः, मनोरथः, एतेषु स्वेच्छया केऽपि पञ्चप्रयोगाः साध्याः । ... २०

३ रामाणाम्, निर्जरसौ, स्वसा, वारिणी विश्वौहः, यूयम्, उशना, इयम्, पयांसि, एषु केषाञ्चित्पञ्चानां साधुत्व विधेयम् । २०

**अथवा**

सर्व, पितृ, रमा, मधु, धनुष्, एषां शब्दानां प्रथमा, चतुर्थी, षष्ठी विभक्तिषु सर्वाणि रूपाणि लेख्यानि ।

४ बभूव, आनर्च, अद्धि, जहति, विध्यति चिकाय, शीयते, कुर्वन्ति, स्तरिषीष्ट, कथयति, एषु केचन पञ्चप्रयोगाः साधनीयाः । ... २०

**अथवा**

गम्, श्रु, एध, अस्, दा, एतेषां धातूनां लटि, लृटि, लङि च सर्वाणि रूपाणि लेखनीयानि ।

५ चिकीर्षति, वाव्रज्यते, इदामति, प्रतिष्ठते, अभिक्षिपति, तायते, इह भुञ्जीत, चेयम्, जनमेजयः, उपधिः, एतेषु केऽपि पञ्च-प्रयोगाः विशेषकार्यप्रदर्शनपूर्वकं साध्या । ... १५

६ ग्राममजां नयति, सुमद्रम्, स्तोकान्मुक्तः, जलजाक्षी, पाणि-पादम्, वात्स्य, पाशुपतम्, चिरन्तनम, बह्वी, गौरमुखा, एषु केषाञ्चित्पञ्चानां सिद्धिः प्रदर्शनीया। ... १५

## १९६६

१ दीर्घ, अनुनासिक, संहितासंज्ञाविधायकानि सूत्राणि विलिख्य फकारलकारवर्णयोः बाह्यप्रयत्नौ लेख्यौ । १०

२ पावकः, कर्कन्धुः, चक्रि अत्र, वागीशः, तच्छ्लोकेन, काँस्कान्, शिवोऽर्च्यः, अहरह, सशम्भुः, एतेषु स्वेच्छया केऽपि पञ्च-प्रयोगा सम्यक्साध्याः । २०

३ सर्वेषाम्, सखा, रमायै, वारीणाम्, चतुर्णाम्, पन्था, सुपदः, सजूः, धनूंषि, एषु केषाञ्चित् पञ्चानां साधनं कार्यम् । २०

अथवा

हरि, नदी, राजन्, युष्मद्, एषां शब्दानां सर्वासु विभक्तिषु रूपाणि लेखनीयानि ।

४ प्रभवाणि, अकटीत्, जघान, पिपूर्तः, अपुषत्, सुन्वन्ति तृणेढि, क्रीणीतः, अचूचुरत्, एतेषु केचन पञ्चप्रयोगाः साधनीयाः। २०

५ भावयति, वरीवृत्यते, पुत्रीयति, सर्पिषो जानीते, प्रवहति, दीयते, स्मरसि कृष्ण ! गोकुले वत्स्यामः, शिष्यः, पारदृश्वा, दुष्करः कटो भवता एषु केऽपि पञ्चप्रयोगा विशेषकार्यप्रदर्शनपूर्वकं साधनीयाः । १५

६ मोक्षे इच्छास्ति, अतिनिद्रम्, अपरकायः, सुहृत्, ईशकृष्णौ, दैत्य, रैवतिकः, मारीचिकम्, त्रिलोकी अरण्यानी एषु केऽपि पञ्चप्रयोगा साध्या । १५

अथवा

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ।।

अस्य श्लोकस्य सोदाहरणं व्याख्या कार्या ।

---

१९६७

१ इत्, अनुदात्त, पद, वृद्धिसंज्ञाविधायकानि सूत्राणि विलिख्य अकारस्य कतिभेदाः सन्तीतिनामग्राहं लेख्याः । १०

२ प्रष्ठौह, गवेन्द्रः, अमी ईशाः, तन्मात्रम्, वाग्घरिः, चक्रिंस्त्रायस्व, विष्णुस्त्राता, अहर्गणः, सेमामविड्ढि प्रभृतिम्, ऐषु प्रयोगेषु यथेच्छं केऽपि पञ्चप्रयोगा साधु साधनीयाः । २०

३ रामाय, हरेः, तिस्रः, कतरत्, धुक्, यज्वनः, मम, उपानत्, धनूंषि, उदेतोः, एषु पञ्चप्रयोगाः सम्यक् साध्या । २०

४ अभूत्, ऐधिषत, यौति, अपारिष्टाम् जायते, बभर्ज आञ्जीत्, उपस्कृता कन्या, ग्रहीता, एतेषु केऽपि पञ्चप्रयोगाः साधु साध्यन्ताम् ।

अथवा

भू, पा, खाद्, पच्, कृ, एतेषां धातूनां लिटि, लोटि, लुङि, च सर्वाणि रूपाणि लेख्यानि । २०

५ स्थापयति, पिपठिषति, राजीयति, धर्ममुच्चरते, यज्ञदत्तमुपरमति, स्तूयते विष्णुः, यजति स्म युधिष्ठिर, मार्ग्यः, वशंवदः, ईहा, एषु केऽपि पञ्चप्रयोगाः विशेषकार्यदर्शनपूर्वकं साधनीया । १५

६ व्रजमवरुणद्धिगाम्, ह्रियमुनम्, पौर्वशाल, जलजाक्षी शिवकेशवौ, बैदः, यौष्माकः, बादरिकः, नर्तकी, हिमानी, एषु केऽपि पञ्चप्रयोगा साध्याः । १५

---

मुद्रक—श्रीगोविन्द, मुद्रणालय, बुलानाला, वाराणसी ।

